"SHARDA" RGE. No. A. 634

...ा वर्षः ] वैशाखः, संवत् १९७४ [ द्वितीया संख्या




सम्पादकः श्रीचन्द्रशेखरः

...ष्यकत्रयम् ३) ] [ एतत्संख्याया मूल्यं पञ्चानकाः ।≈)

## लेख-सूची

निबन्धाः | निबद्धारः | पृष्ठाङ्काः





### नियमाः

१—शारदा प्रतिमासं प्रकाश्यते।

२—प्रत्ना अभिनवाश्च विषया अत्र सम्यगालोच्यन्ते। वैज्ञानिकाः शिल्पकलेतिहासदर्शनसाहित्यविषयकाः प्रत्नग्रन्थतत्त्वालोचनात्मकाश्च सुरुचिरा निबन्धाः प्रकाश्यन्ते। प्रथितमहिम्नां विदुषां लेखैरियं विभूषिता भवति।

३—भारते ब्रह्मदेशे सिंहले च, अस्या वार्षिकमग्रिमं मूल्यं ३) रूप्यकत्रयम्। तदितरेषु देशेषु च (8 shillings)

४—यस्यां संख्यायां यस्य लेखः प्रकाशितो भवेत् सा संख्या तस्मै विना मूल्यं प्रदीयेत।

५—आत्मनः पत्रोत्तरमिच्छद्भिः प्रेषणव्ययः प्रेषणीयः। अदत्तशुल्कं पत्रं नैव गृहीतं भवति पत्रिकायामस्यां विज्ञापनं दातुमिच्छद्भिरावेदनीयो व्यवस्थापकः।

६—आदर्शसंख्यां जिघृक्षुभिः पञ्चाणकलभ्यं शुल्कपत्रमवश्यं प्रेषणीयम्।



महामहोपाध्याय पण्डित रघुनन्दन त्रिपाठी.

K. V. Press, Bankipore.




मासिकी संस्कृतपत्रिका

तृतीये वर्षे | विद्ययाऽमृतमश्नुते | द्वितीया संख्या

## सम्पादकाभिप्रायाः

गहनं हि कर्मवर्त्म, बहुविचार्यापि जनो न तत्तत्त्वं विज्ञातुं प्रभवति, बहुप्रयस्यापि न तत्सुकरं विधातुं शक्नोति। जनो विचिन्तयति "इत्थमात्मीयं कर्म सम्पादयिष्यामि, एते किलोपाया मया निर्धारिताः, एभिरुपायैः करगतैव सिद्धिर्भविष्यत्यस्माकम्"। परं दृष्टमेतद्बहुशो यन्न सकलो जनः सफलमनोरथो भवतीति। गुरवोऽनुशासति, वत्सा अयं पन्थाः शोभनः। अनेन गच्छन् नकोऽपि दुःखभाग् भवति, मित्राणि सानुरोधं बोधयन्ति, अयं हि फलप्रदः पन्थाः। समाश्रयणीयस्त्वयाप्ययमेव। परं किं तेन पथा गच्छन्तः कति सफला अभवन्? कदाचिच्च गुरुभिर्मित्रैश्च स पंथा निन्द्यमानो दृष्टः। अतः किं विधेयं किं न विधेयमिति न कोऽपि तत्त्वतः परिच्छेत्तुं शक्नोति। कमपि सफलं जनं दृष्ट्वा तेनाध्युषितं पन्थानञ्चाप्यनुमाय गुरूणां मित्राणाञ्चाप्युपदेशाः प्रवर्तन्ते। अतएव च कर्मवर्त्मनो गहनता व्यपदिश्यते। उपदेशपराश्च भवन्ति गुरवो मित्राणि च। अत्रेदं वक्तव्यं, नायं जनः सफलतामधिगन्तुं समुत्पन्नः। स्वल्पा शक्तिर्मानवस्य, स्वल्पञ्च बलम्, तथाविधो मानवः साफल्यमधिगन्तुं शक्नोतीति न स्पृहणीयं वचः। अतश्च ये साफल्यं पुरस्कृत्य प्रवर्तन्ते प्रवर्तयन्ति वा, नूनं हतमनोरथास्ते परावर्तन्ते विषण्णाश्च भवन्ति। यतोऽविज्ञाय प्रवृत्तिस्तेषाम्।

किन्नाम साफल्यम्। साम्प्रतमस्माभिस्तु केषाञ्चनेन्द्रियतर्पकाणां पदार्थानामुपलब्धिरेव तदिति निश्चीयते। यद्येकेन अनुमतं स्यात्तदा स

सफल इति प्रोच्यते, किञ्चापरोऽपि तदैव सफलः परिगण्येत, यदा तेन धनं समार्जितं स्यात्। ईदृश एव साम्प्रतं साधारणानां विश्वासः। नैतत्सा-फल्यलक्षणमित्यभिज्ञा वदन्ति। साफल्यं नाम क्रियावसानम्, क्रियावसानं तदैव भवति यदेप्सितं समुपलभ्येत। प्राप्तधनोऽपि धनार्थं प्रयतते, अतो धनोपलब्धिः साफल्यमिति कथं वक्तुं शक्येत। इत्थमेवाधिकाधिकं विचार्यमाणे न किमपि तत्त्वं निश्चितं भवति। तस्मात् किं कर्म हातव्यम्? नेत्युच्यते। प्रकृतिस्त्वां नियोक्ष्यतीत्यागमात्। तस्मादनभिसन्धाय फलं कर्तव्यमिति मत्वानुष्ठेयं तत्।

---

## हरिहराम्बाविद्यालयः

साम्प्रतं संस्कृतेति शब्दश्रवणसमकालमेव घूर्णितमस्तिष्का भवन्ति केचन विज्ञाः, भारतीयानां धनिकानां सविधे न तथाविधो जनस्तिष्ठति यो नाम्नापि संस्कृतं परिचिनुयात्। भारतीया राजानः किल केवलं राजानः। न कस्मिन्नपि विषये मनोनुयोगार्थमेभिरात्मलाभोऽधिगत इति राजपरिचारकास्तं बोधयन्ति। ते चात्मपरिचारकाणां वचसि विश्वासमाधाय तथाविधमेवात्मानमवगच्छन्त्यनुतिष्ठन्ति च। एवंविधे व्यतिकरे कथन्नामेयं वराकी संस्कृतभारती भारतीयेभ्यो धनिकेभ्यो राजभ्यश्च प्रदीयमानं हस्तावलम्बमभिवाञ्छेत्। अतएव चास्या अभ्युदयसूर्यः कस्मिन्नपि निविडान्धकारे गह्वरे निलीनस्तिरोहित एवेदानीमस्माकं दृष्टिपथात्। यदि हरिहरप्रसादनारायणमहोदयसदृशा द्वित्रा राजानो नाभविष्यं-स्तदेयं नामशेषाऽभविष्यत्।

पाटलिपुर-प्रान्ते अमायाँ-नामकमस्त्यप्रत्नश्च प्रसिद्धश्च राज्यम्। अस्य राज्यस्याधीशिता साम्प्रतं श्रीमान् हरिहरप्रसादनारायणमहोदयः। नूनमयं स्तवनीयो महाराजो येन हि वराकी संस्कृतभारती निष्कामं सेव्यते। महोदयेनानेन स्वनगरे हरिहराम्बाविद्यालयनामकः कोऽपि संस्कृतविद्यालयः प्रतिष्ठापितो वर्तते। तत्र तत्तद्विषयाणां द्वादशाध्यापका नियुक्ता वर्तन्ते। अध्यापकेभ्यः प्रभूतं वेतनं प्रदीयते, पठन्ति बहवो विद्यार्थिनः। विद्यार्थिनामपि कृते भोजनाच्छादनपुस्तकादिव्यवस्था महाराजेनैव विधीयते। संस्कृतभाषया सहाङ्गलभाषाया हिन्दीभाषायाश्च शिक्षणं तत्र भवति। वर्धतां महाराजस्यायं सुरभारत्यामधिकाधिकोऽनुराग इति कामयते जनोऽयम्।

---

## संस्कृतसाहित्य-सम्मेलन-महोत्सवः

संवृत्तः सम्मेलनमहोत्सवो महता समारोहेण लाहोर-नगरे। द्वारवङ्गाधिपतिस्तत्र सभापतिपदे वृतोऽभवत्। प्रदत्ता च महाराजेन संस्कृतभाषया वक्तृता। महाराजोऽयं संस्कृतज्ञ इति विज्ञाय प्रसीदामः। श्रूयते यदस्मिन् वर्षे प्रयागे साहित्यसम्मेलनं भविष्यतीति। श्रीमता गिरिधरशर्ममहोदयेन लिखितालेखादन्यः सर्वः सम्मेलनविषयको वृत्तान्तो विज्ञातः स्यात्।

---

## संस्कृतविद्यालयः

मुजफ़्फ़रनगरे संस्कृतविद्यालयः कोऽपि प्रतिष्ठापितो भूपशिक्षाविभागेनेति जानन्ति शारदा-वाचकाः। अयं जनस्तं विद्यालयं विलोक्य नितान्तं

प्रीतः समभवत् । सन्ति ननु तत्र नियुक्ता विश्रुतोद्यमा विपश्चितः । तत्र प्रधानाध्यापकपदे नियुक्तो बच्चाझामहोदयो ननु विदित एव भवेत् । शारदावाचकानां परिचितः सांख्य-काव्यतीर्थ-आयुर्वेदाचार्यश्च श्रीशिवचन्द्रशर्ममहोदयो हि तत्र आयुर्वेदाध्यापकः । मन्मित्रं सांख्यपुराणकाव्यतीर्थः श्रीमान् यमुनाप्रसादत्रिपाठी तत्र पुराणाध्यापकः । व्याकरणाध्यापकश्च वैयाकरणकेसरी श्रीमान् शशिनाथझामहोदयः । एव विधानां विदुषां नियोगात् पारेगिरां सौभाग्यं तस्य संस्कृतविद्यालयस्येति निःशङ्कं ब्रूमः ।

तत्र केवलं मैथिलच्छात्राणामेव कृते वृत्तिप्रदानव्यवस्था वर्तते । अतश्च मैथिलेतराश्छात्राः क्लेशमनुभवन्तोऽस्माभिर्दृष्टाः । इयं वृत्तिः केनचिन्मैथिलेन महाराजेन प्रदत्ता । नात्र महाराजस्य दोषं गणयामः । परमेतावदवश्यं कथयामो यन्नैतत् महाराजोचितं कर्म । महाराजानां कर्मौदार्योपेतं भवति । वृत्तिप्रदाने जातिव्यवस्था हि प्राकृतानामेव शोभते न महाराजानाम् । आस्ताम्, औदार्यं नाम गुणः, परं यदि कश्चनौदार्यं नाश्रयेत्तदा किं स विनिन्दनीयः स्यात् ? मैथिलेन महाराजेन यत् कृतं तत्साधु । साम्प्रतं मैथिलेतरेण महाराजेन केनचित् मैथिलेतराणां छात्राणां कृते वृत्तयो व्यवस्थापनीयाः । एतदर्थं प्रयत्न आधेयः कर्मचारिभिः । प्रयत्नपर एव सिद्धिमासादयति ।

*

शारदायाः प्रथमसंख्यायां श्रीमतो महामहोपाध्याय-रघुपतिशास्त्रि-महोदयस्य चित्रं प्रकाशितं वर्त्तते । सोऽयं महोदयो ग्वालियरराजकीयसंस्कृतपाठशालायां प्रधानाध्यापकपदमलङ्करोति, महोदयेनानेन निर्मिता पद्मावतीपरिणयचम्पूः शारदायां क्रमेण प्रकाश्यते । अतः कृतमस्य महोदयस्य परिचयाधिक्येन ।

---

## प्राचीनार्वाचीन-शिक्षणसरणिः

एतर्हि किल सकलकलाकलापाकलितकलेवरैः, प्रसृतप्रशस्तविवेकमुकुशोकैः सुधारकैरित्थं जागद्यते इयमेवोपदिश्यते देशना यदनुसर्त्तव्या भारतीयानामार्ष्या सरणिः इयमेवात्मतत्वोदधेस्तरणिः अधिगन्तव्या भव्या विद्या कुशलकामुकैः ययाधिगन्तुं शक्येत प्रत्नानामितिहासः, ईश्वरविश्वासः, दार्शनिकविकाशः, रागद्वेषपाशः, जागरूकं भविष्यति सत्वम् अमूकः सन् जनयति पदार्थस्तत्त्वम् किमधिकं साहित्यदर्शनेतिहासज्ञाने श्रुतिस्मृत्युपनिषदां समधिगते तत्त्वे को नामावशिष्टो विशिष्टस्तत्त्वविवेकः, किन्नामशिष्टमवशिष्टन्तदा प्रतिभास्यति यस्मै भूयो विदध्येत प्रयासम्, स प्रयासेन भूयो भूयेताङ्गलादिभाषासु नाज्ञातमेतद्वाचकवरेण्येषु, प्रत्नानेहाहापितदेहाः, संचितपीतपत्रविरचितगेहाः आत्मनिष्ठैकभक्तिशक्तित्यक्तत्रिलोकलालायिनरसनालौल्याः वस्तुतत्वैकनिष्ठाः नैष्ठिका ऋषिपुङ्गवाः कथङ्कारं कालंयापयन्तिस्म । कथंकारञ्च कणादः कणादनं कुर्वाणो विशेषान् पदार्थान् स्वनिर्मितवैशेषिके व्यवस्थापयामास । गौतमः कथं धेनुधराधिषणाहृषीकादिचतुर्दशरूपकाम्, गौतमीं विविच्य व्याचूर्णोद् विबुधा इव बुधानां चारुचक्षूंषि, कपिलः कपिरिव मानसानां चित्त चाञ्चल्यञ्चक्रे निर्माणपाटवं संदर्श्य, दर्शनसिन्धुं समवगाह्य याज्ञग्रन्थुर्व्यासादयो दयमाना जनतासु

रामायणादीन् ग्रन्थान्वीक्ष्य तत्कालीनां सभ्यतां सदाचारं पद्धतिं आश्रमान् शौर्यं धैर्यं प्रेम वासं राज्यं राजशिक्षां कलां, इतरदखिलं कार्यजातमाकलयितुं प्रभविष्यन्ति पक्षपातादैन्यहृदयाः, त ओजःपुञ्जपूजिता भूपैः सम्राजोऽप्यविगणय्यात्मतत्त्वं भेजिरे । गुरवे स्वार्पणैकोद्देश्यपूताध्ययनपटून् वटून् पाठयन्ति गुरवः, पर्णकुटीरके, साकं विद्योपलाभेन लेभिरे शारीरिकात्मिकमानसिकोन्नतिमपीति ब्रह्मपरायणास्तच्चारिणस्तदुपार्जितौजसो भेजुः शौर्यं, दध्रिरे धैर्यम् भीमा इवोत्तस्तरुर्भीमास्तरङ्गिण्यः, उच्छिन्निपुरनायासेनोन्मत्तगजान्, एकेनैव सायकेन भेदिरे छत्राणीव राजमानानानि पादपपत्राणि, राजन्यजना जन्येषु शिक्षास्त्रविकलकलासु बले जलीयस्थलीयमहाविलीययानिर्माणे न कुतोऽपि देशान्नोनत्वं सेजिरे, आसां चक्रिरे त एव, एवं विधस्तदानीन्तनः शिक्षाक्रमः, त एव त्रिभिर्विभागैर्दभञ्जिरे ।

व्याकरणं वर्षत्रयेण निरुक्तनिघण्टू अष्टसु मासेषु, महामुनिपिङ्गलाचार्यकृतं छन्दःसूत्रम् एकेन वत्सरेण, गद्यपद्यमयानि काव्यानि वर्षणैकेनोपनिषदः ततः षट्सु वर्षेषु, चत्वारो वेदाः सशाखा वर्णः स्वरः साममात्रावलसामसन्तान इति क्रमोपक्रमाः, वेदान् वेदौ वेदं वाधिगत्योत्तरं ज्यौतिषप्राण्यर्थवनस्पतिशास्त्राणि यथेष्टं स चर्चन्तिस्म । आयुर्वेदधनुर्वेदगान्धर्ववेदा अपि, तत्रायुर्वेदे चरकादिषु भेदनं छेदनं लेपनं समीकरणं पूर्वरूपसम्प्राप्त्युपशयोपेतं निदानं चिकित्साप्रकार औषधम् पथ्यापथ्यविवेचनं वर्षचतुष्टये इति, धनुर्वेद आग्नेयास्त्रं पाशुपतास्त्रं वायव्यास्त्रं वैद्युतास्त्रंमायास्त्रं मोहनास्त्रं ब्रह्मास्त्रमूछनोन्मूर्छनास्त्राणि इषुणा हननम् आकर्षणम् अस्त्रेणास्त्रभेदनमनेकविधान्यभ्यस्यन्ताऽऽयुधानि । गान्धर्ववेदे तावत् समावर्जिका सर्वकरणानां रचना कलकलायमानानि शोकमोककोकिलाकीरककुलानि निःकलहानि क्रियन्ते, तरङ्गायिततरललोलकल्लोलं जलं प्रश्लिषन्ति तास्ता महामहिममधुरगानकलाः, एवं स्मास्मत्पूर्वजाः पेठुरधिजग्मुः पारेशास्त्रम्, अध्ययने कृतबहुलपरिश्रमा ते रागग्राहविगलितपलितलोमा भवन्तिस्म, न जायन्तेस्म अकालकवलितकलेवरा न तथाविधोऽद्यत्वे ज्ञाननिधिः, तत्र भवतः स्रष्टुः सृजनचातुर्यं प्राकृते पर्वतादौ व्यनक्ति स्म यद्वारतं जर्जरितमिदं निखिलजगज्जालमोहमालिनाऽविगणय्य तद्गौरवं करालकालांशुमालिना नितरां बभ्रमीति तच्चक्रम् ।

नास्पदवलोक्यते नावगण्यतेतदानीन्तनीया सत्ता, द्रागेव प्रहरति प्रहारीव प्रहरणेन झटित्युज्झति जालमालां यया न पार्यते दूरीभवितुं कदापि केनापि कुत्रापि कथंचिदपि, भूयो भूयोऽभिभूयतेऽभिमानी, चक्रवर्तिनमपि स्वचक्रं वर्तुलीकरोति, राजानो दरिद्रायन्ते, दरिद्रा राजीनन्ति एतस्य महात्मनः सहस्ररश्मिरपि सहस्ररश्मिभिः समालोचयितुं न प्रभुः किमुतैकया वराकस्येति अस्तु नाद्यत्वेऽनुसर्यते सरणिः, तथाविधा नान्तेवास्याचार्यान्तिके समुष्यसदाचारेण विचरति, न प्राचीनापत्स्यते पद्धतिः, अद्यत्वे प्रायशश्छात्रा उद्देश्यहीनाः संस्कृतमधीयते, द्वादशवर्षेण व्याकरणमेव कैश्चित्समाप्यते, एतस्मिन्नन्तरे गार्हस्थ्ये विधिना प्रतिवध्यन्ते, विद्याध्ययनमधिगच्छन्त्याखिल्यम्, अपरैः परीक्षार्थमेवं पठ्यते नैव तत्र सभ्य-

गनवबोधे व्याकरणस्य न निरुक्तमीमांसादीन्यवगम्यन्ते, इतरैः कैश्चिन्न्यायशास्त्रानुशीलिभिरधीयत एव न व्याकरणम् यतोऽनुशीलनमपि दुर्घटं शास्त्रस्य भवति, कञ्चनैकशास्त्रापूर्णेऽपि विध्यति विद्या, यतो यथापूर्वं कल्पयन्ति किमधिकं न विद्याकाले वेद्यन्ते सर्वाण्येव तंत्राणीति ।

किमु वेदगतैश्चर्चा, परीक्षार्थिनां तावद्बालविद्यार्थिनां चरित्रमपि ? भ्रंश्यते साहित्याध्ययनेन निदर्शनार्थं काशीस्थप्रथमापरीक्षायां विप्रलम्भशृङ्गारवर्णनात्मकं मेघदूतम्, पाञ्चालराजकीयपरीक्षायां पञ्चतन्त्राणि पञ्चतन्त्रस्य, कालिकातापरीक्षायां हितोपदेशः । यद्यपि पञ्चतन्त्रहितोपदेशौ नैव विधौ यास्यां सम्भाव्येत कापि विशेषेण हानिः, परमेतर्हि किञ्चिदपि दोषोदूषयति बालान्, नाद्यत्वे ब्रह्मचर्याश्रमे वर्तमानेष्वपि तथास्मरणशाक्करोश्वरभक्तिः न तादृशमोजस्तेजः, नष्टप्राय एव सदाचारो भ्रष्टप्रायस्तत्प्रचारः परान्नलाभ एव जीवनसर्वस्वम्, मोहालस्यमदाभिमानित्वस्ताब्ध्यादयो दोषाः,कौपीनपोवराणि मित्राणि येषां अज्ञत्वेऽपि पण्डितमानिनः, आचारहीनत्वेऽपि सदाचारिणः, निस्तेजस्त्वेऽपि सौजसः, प्राक्पारपाटीकुटीरकाभक्तवः प्रत्यायन्ति आत्मानं धर्मपरिचारकेण श्रौत्रिया इवाभ्यवहरन्ति ( तमालपत्रमासाद्य श्रौत विधि विदधति ) धूम्रवर्तिना हरितायन्ते हरितः, बाष्पयानामिवान्तःकृष्णयन्ति कामलं हृदयम्, प्रकृतिवशात्स्वयमाचरन्तोऽपि अपरान् प्रवर्तयन्ति कुत्सिते कर्मणि, नात्मिकमानसिकशक्तिभ्यां परियुञ्जते आत्मानम्, हन्त ! न तथा दुःखावहं पाश्चात्यज्ञानध्यानस्थितविचारेषु आंगलभाषाध्येतृषु दोषमावहति गर्हितं कर्म- यथा परितः संस्कृतसंस्कृताध्येतृषु छात्रेषु, अन्यथयति विचारान् ऋषिभ्यः, अयि पात्रापात्रविचारहृदयाश्छात्राः ! उन्नमयन्तु आत्मनो विचारम्, मुखरयन्तु दिगन्तान् परिपोषणेन भारतस्यगौरवम्, स्थिरयन्तु संस्कृतास्पदम् नायमेवेत लेख इति कृत्वात्रैव कामयेऽवसानम् ।

उदयशङ्करभट्टः

---

## भूश्चलैव

नालस्खलितुन्त्वचला चलति च नलिनीकुलोल्लसनन्मूलः । इह खलु साम्प्रतमिदानीन्तनन् नमतवितत्यानसमवलम्बितविचिकित्सितमतिगतिव्रातविघटितेशप्रकटितसृष्टिघटनापाटवोद्घाटकक पाटपाटनपटुताशालितलिनमतिमलिनगतयः प्रथितनिखिलगुणगणमणिप्रवेकाभरणसमलंकृतसमधिगतनिखिलनिगूढतत्त्वविषयविसरसारजनोपकृतिसयत्नप्रत्नमुनिरत्नसयत्नाविर्भावितनिखिलतत्त्वरत्नप्रवरमुनिवरसदासहर्षमहर्षि नजानन्दानुभवद्भगवद्वेदव्यासादिमहानुभावैस्समभिहितातिमहितस - वेहितानुष्ठानोपलक्षणा वितथविषयनिचये वितथमतिगत्युपपन्ना व्युत्पन्नान्तर्वृत्ति पुरुतरमहानुभावोद्भाविता भव्यभावना मलिनाशया महाशया भूयांसः समुल्लपन्तितरां सर्वत्र । तदेतेषामनधिगताखिलनिगमागमप्रतिपादितान्तर्निहितनिगूढतत्त्वविषयनिचया व्युत्पन्नमतीनामनुपन्नवर्णाश्रमधर्मविचाराचारनिकरनैपुण्य धषणानामुद्रिक्त - रजस्तमोवेगोद्भावितावियास्मितारागद्वेषाभिनिवेशात्मकपञ्चक्लेशाभिभूतात्मनां परिभाविताखिलनिगमागमपुराणादिलपितावलिमलिनमनोनलिनानां विप्रलापानुलापावलिलक्षणतुषारनिकरा-

विरलानवरतवर्षधारासंचरैरत्यर्थमर्द्यमानानालम्लम्लपितुमुल्लसितमनोनलिना वयं समुत्महामहे, तदप्यलं निगमागमसुनिलपनावहेलनमुपलभ्यालम्विषीदन्मनोनलिना वयं निखिलमनोमालिन्यमपनीय यत्किञ्चिन्मनोविलसितविषयमाविश्चिकोषवो लंलपितुमुल्लसितमानसास्त्वालस्यमपास्य प्रक्रममीहामहेतरामलम्। इह खलु प्रतिपित्सितार्थप्रतिपन्नवचनान्यत्रधीयन्ते चोपेच्छ्यन्ते चाप्रतिपित्सितार्थप्रतिपादितान्यलं प्रेक्षावद्भिर्महानुभावैः, परमार्थ्यवर्य्यस्वीयाचार्य्यवर्य्याभिहितमतपुष्टिता - साधनत्वेनाभिधीयमानोऽर्थस्तु प्रतिपित्सितार्थ एवेतिमन्यामहे। अथाधुनिकास्सूपचितवचनरचनाचातुरीकलानिचयप्राचुर्य्योपार्जितमदोत्सेधावलेपास्स्वैरं प्रकामंव्याहरन्ति यदचला चलति परिमंडले न कमलिनी कुलविलसनशीलमनिशमावर्त्तयन्ती चातिक्रान्तसप्तविंशतिनक्षत्रात्मकमार्गभागावषमापूरयति तिमिरकरिमृगेन्द्रोऽखिलखचरनिकरेन्द्रः निजारुणकिरणनिकरैर्दिशो वितिमिरयन्निश्चलो विलसन्नवतिष्ठति । तत्रानुपलभ्यमाना तैरुपगता जगतो गतिमत्ता विमतास्पदीभूता कस्मादवगता, नहि तावत्प्रत्यक्षं प्रमाणं तदवगमनप्रयोजकताश्रयीभूतमनुपलभ्यमानत्वात् तथाहि इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं तच्च कथमपि न कुत्रापि सम्भवति श्रोत्रत्वक् चक्षुर्जिह्वाघ्राणानि पञ्चैव बुद्धीन्द्रियाणि यथानुश्रूयमाणेन रेलाभिधादियानगमनजन्यघननादनिवहेन तद्गमनमनुभूयते नैवमस्यागमनजन्यनादश्रवणलवोऽपि । न च त्वचा स्पृश्यमानमनुभूयमानन्तद्गमनमनिलस्येव गमनम् न वा नयनेन नीयमानमयनमनुभूयमानन्तस्याः क्रियासामान्यस्य रूपवत्त्वायोगात् क्रियात्वावच्छिन्नस्य रसवत्त्वाभावाद्रसनेन्द्रियेणापि तद्गमनं नानुभूयते, क्रियायां गन्धवत्त्वाभावात् घ्राणत्वावच्छिन्नग्राहकतानिरूपितग्राह्यताश्रयीभूतमपि नास्ति तद्गमनमिति निश्चितमिन्द्रियार्थसन्निकर्षजन्यज्ञानलक्षणप्रत्यक्षप्रमाणप्रयोज्यप्रामाण्यन्तद्गमने नास्तीति । नचाप्यनुमानप्रमाणप्रयोज्यप्रामाण्यमनुभूयतेऽचलाचलने तद्यथा गमनन्तूत्तरदेशसंयोगानुकूलो व्यापारः तादृश व्यापारत्वावच्छिन्नाधेयतानिरूपिताधारतावत्वप्रयोजको हेतुरुत्तरदेशसंयोगस्तथा च तादृशव्यापारत्वावच्छिन्नाधेयतानिरूपितायाः पृथिवीत्वावच्छिन्नाधारता तत्प्रयोजकोत्तरदेशसंयोगस्य पृथिवीनिष्ठस्य क्वचिदप्यनुदयात्, पृथिवीत्वावच्छिन्नोद्देश्यताकगमनत्वावच्छिन्नविधेयताकानुमितिप्रयोजकोत्तरदेशसंयोगलक्षणहेतोरसद्भावान्नानुमितिप्रमाणप्रयोज्यप्रामाण्यमचलाश्रयीभूतगमनव्यापारे । नच दिवाकरनिष्ठोत्तरदेशसंयोगनिष्ठहेतुनाकपृथिवीत्वावच्छिन्नोद्देश्यताकगमनत्वावच्छिन्नविधेयताकानुमितिजन्यबोधविषयताश्रयीभूतमत्रोगमनं चेन्नाभविष्यदुत्तरदेशसंयोगानुकूलव्यापाराश्रयीभूतावनी तर्हि नलिनीनायकस्याप्युत्तरदेशसंयोगो नाभविष्यदिति । दिवाकराश्रयीभूतगतिप्रतीतिस्तु न प्रमितिकरणताश्रयीभूतजन्यबोधविषयताश्रयीभूतम्, अतद्वति तद्वत्ता बुद्धिजन्यबोधीयविषयताश्रयीभूतत्वात् । निजाधिकरणीभूतयानाद्याश्रयीभूतव्यापारेण तदधिकरणतानिरूपिताधेयतावच्छेदकावच्छिन्नजनद्रष्ट्रयातद्व्यापारानाश्रयीभूतपार्श्वद्रुमादीनां तादृशव्यापाराश्रयताप्रतीतिवदिहाप्यवन्याश्रयीभूतव्यापारेणता - द्रूशव्यापारवान् दिनमणिरित्यध्यवसीयत इति

वाच्यम् अप्रयोजकत्वात्तन्मध्येन हेतोरैकाधिकरण्याभावात् यानाद्याश्रयीभूतव्यापारेण न पार्श्वद्रुमादीनामुत्तरदेशप्रापणमपि तु यानादेरेव तेषान्तु स्वदेशस्थितिरेव देवदत्तो ग्रामं यातीत्यादौ देवदत्ताश्रितव्यापारेण तादृशव्यापारानाश्रितयज्ञदत्तस्य न ग्रामप्रापणमपि तु देवदत्तस्यैव नहि पर्वताधिकरणकधूमत्वावच्छिन्नहेतुताकग्रामत्वावच्छिन्नोद्देश्यताकवह्नित्वावच्छिन्नविधेयताकानुमितेः प्रामाण्यम् । न वा देवदत्तीयानुभवजन्यसंस्कारप्रयोज्ययज्ञदत्तीयस्मृतिरित्यादिवदिहाप्यवगमेलिमम्, तथा च कथमपि नावनीगमनं सिध्यतीति । यत्र यत्रोत्तरदेशसंयोगस्तत्र गतिरितिव्याप्तेरुत्तरदेशसंयोगाश्रयीभूतरवित्वावच्छिन्नोद्देश्यताकगमनत्वावच्छिन्नविधेयताकानुमितिजन्यज्ञानीयविषयताश्रयीभूतं दिनमणिगमनं सर्वथा प्रमाणसिद्धमिति सर्वानुभूतिविषयतापन्नमिति, दिनमणेरुत्तरदेशसंयोगस्तु प्रत्यक्षमवभासते । तद्यथाद्यमेष प्रथमांशके तस्योदयनमन्येद्युर्द्वितीयांशके पुनस्तृतीयांशके तथा चाद्यतनोदयनविन्दुः श्वस्तनोदयनकालीनविन्दुना भिद्यते पूर्वापरबिन्दुत्वासम्भवात् एवमपि श्वस्तनोदयकालीनविन्दुः परश्वस्तनकालीनोदयविन्दुना भिद्यते तथात्वादित्यवमासमाप्तेश्चक्रपरिवर्त्तनस्य सावयवपञ्चषष्ठ्यधिकशतत्रयामितानां विन्दूनां प्रत्येकं भेदाश्रयत्वेनोत्तरदेशसंयोगाश्रयत्वं दिनमणेः सर्वानुभूतमिति तथा च फालितम्, चलति नलिनकुलबन्धुर्न चलत्यचला चलैव सेला ॥ किञ्च यद्येषागमनान्विताबनी तर्हि स्वनीडादुत्पतन्पतत्री सुदूरतरमूर्ध्वमुपेत्य घटिकाद्वयानन्तरं प्रत्यावर्त्तमानो नीडाभिमुखं प्रत्यागच्छति, माभूत्तस्य स्वनीडसम्मेलनम्, यावन्नीडोत्सर्जनकालसमकालोऽपरस्मिन्दिवसे न प्रत्यागतः यतस्तावता समयेन तन्नीडाधिकरणीभूतभूमेरतिदूरवर्त्तित्वात् तस्याद्रुतनतरगतिवेगाश्रयीभूताया अतिदूरगतत्वात् अथैवमपि वियति प्रक्षिप्तपलादीनान्तस्याद्रुततरगतिवेगाश्रयीभूतत्वान्मास्तु तत्र पतनमिति ।

अथ खल्वत्र केचन विवेचनपराः सुसमालोचनावलिप्ततलिनमतिमलिनाशयाः परिभावितमहानुभावमहर्षिवरव्यासप्रणीतसूक्तयः पुराणपरिपन्थिनो मन्यन्तेऽचलाधिताकर्षणशक्त्या कृष्यन्ते खलूत्पतन्तो पतत्र्यादयोऽत एव तेषान्तत्स्थानमेलनमिति नालं सम्भवितुं चेदाकर्षणशक्तिमती जगती कथमुत्पततामुत्पतनन्तयाकृष्यमाणानां सम्भाव्यम् ऊर्ध्वप्रक्षिप्तोपलादीनां गतिवेगाश्रयीभूतानां यावद्वेगावसानस्तावदेवोर्ध्वगमनं न जातु गगनाधिकरणीभूतपदार्थानां क्वापि स्थितिरिति गुरुत्वाश्रयीभूतपदार्थानामध एव पतनं, पतनत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयीभूतन्तु गुरुत्वमेव यत्र यत्र गुरुत्वं तत्र तत्राधः पतनमिति व्याप्तेः नचावनीनिष्ठाकर्षणशक्तिप्रयोज्यताश्रयीभूत गुरुत्वाश्रयीभूतपदार्थानां पतनं नास्ति चेत्तर्हि तेषां तिरश्चीनं पतनं कुतो नेति वाच्यम् पदार्थनिष्ठगुरुत्वस्याधोनयनप्रयोजकताया नैसर्गिकत्वात् गुरुत्वप्रयोज्याधोनयनस्यैवेश्वरेच्छीयविषयताश्रयत्वात् चेदवनिनिष्ठाकर्षणशक्त्यैवाकृष्यन्ते पदार्थाः गुरुत्वमप्रयोजकमधोनयनस्येति तर्हि जालान्तर्गतमरीचिमालिमरीचिरोचिषा नयनविषयीभूता उत्पतन्तोऽतिलघवः किमिति नाकृष्यन्ते अत एवाधः पतनकारिणीभूतगुरुत्वस्य तत्रासद्भावान्न तेषा-

मधःपतनमित्यत्रनो नाकर्षणशक्त्याश्रयीभूतेत्यनुभूयते दिनमणिगमनप्रतिपादनी श्रुतिरप्यस्ति तथाहि, आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च, हिरण्येन सविता रथेना देवो याति भुवनानि पश्यन्।

विद्वद्रत्नश्रीपण्डितहलधरशास्त्री।

——

## शैवभेदाः

पञ्चाननतनूद्भूतान् पञ्चाक्षरमनूपमान्।
पञ्चसूत्रकृतो वन्दे पञ्चाचार्यान् जगद्गुरून्॥

अयि संस्कृतविद्याविशारदा मतनत्त्वदत्तचित्ताः शारदाप्रणयिनः, भुवनेऽस्मिन् जनिमवाप्तानामस्माकं स्वमतस्य मतान्तरस्य वा तत्त्वदर्शने सर्वेषां सुकुमारमतीनां स्वाभाविकः प्रणयः खलु तथापि आधुनिका बहवो विद्वांसस्तदितरे पुरुषा वा प्रत्नपण्डितपुरुषाणामिव स्वधर्मस्वरूपं परधर्मस्वरूपं वा नहि जानन्ति। अस्मिन् भरतखंडे सर्वास्ति स्वमतानुगानां संख्याविंशतिकोटिपरिमिता वतते, तत्र पञ्चदशशतसख्याको धर्मतत्वज्ञा जना लभ्यन्ते वा न वेति निःशंकमिदं वक्तुं न शक्नोमि। एतत्तु भरतखण्डस्य दुर्भाग्यमेवेति मन्ये। भरतखण्डे शतसंख्यासु पञ्चसंख्या विदुषां वर्तन्ते युरोपखण्डे पञ्चसंख्या मर्त्त्यानां सन्तीति धर्मततत्त्वज्ञानां विषये तत्पञ्चसंख्या अपि शून्या एवेति निःसंशयं वच्मि। कदेदं धर्मशास्त्रज्ञविहीनमस्मद्भरतखंडं धर्मतत्वज्ञैः सङ्कीर्णं भविष्यति, तत्काल एव धन्यः तत्कालस्थाः पुरुषा एव धन्याः तदैव खण्डस्यास्य शोभा। धर्म एव देशस्य भूषणं, धर्म एव देशस्य तोषणं, धर्म एव देशस्य जीवनं, धर्म एव देशस्य पालनं, धर्म एव देशस्य कीर्तिः, धर्म एव देशस्य कान्तिश्चेति पुरातनमनुमुखमुनिपुङ्गवा स्वप्रबन्धेषु ग्रन्थाघोषं निजगदुः। अतएव निगद्यते मया स्वस्वधर्मो ऊर्जितावस्थायामानेतव्यः, स्वधर्मग्रन्थाः पठितव्या धर्मान्तरग्रन्था अपि विमर्शनीयाश्चेति। इदानीं काले शैव, वैष्णव, शाक्त, गाणपत, सौरप्रभृतीनि मतानि ब्राह्मसमाजार्यसमाजादयः समाजा नान्हकीयमुख्याः पन्थानश्च बहवो विद्यन्ते। तत्र पूर्वप्रयुक्त शैवमतस्य स्वरूपं सहृदयानां शारदावाचकानां पुरस्तात् प्रदर्शयितुमुद्युक्तेयं मम लेखनी। अतएवाऽस्मिन् लेखे शैवभेदतल्लक्षणादिकं विव्रियते मया। भो वाचकमहाशयाः! परमपवित्रस्यास्य शैवमतस्य प्राचुर्यं पूर्वकालेऽधिकतरमवर्तत, तद्वदस्मिन् काले तत्प्राचुर्यं विशेषतो नास्ति तथापि सर्वमतेभ्यः संख्याधिका वर्तते। सकलदेशसंव्याप्तमिदं शैवमतं प्रत्यहं क्षीणमेव भवति न वर्धते। युगयुगान्तरप्रसिद्धं निगमागमविश्रुतं त्रिभुवनप्रतिष्ठितं वशिष्ठविश्वामित्रागस्त्यकश्यपभारद्वाजात्रिदुर्वासोमुख्यमहामुनिभिः नलहरिश्चन्द्रदुष्यन्तभरतप्रभृतिपृथ्वीपतिप्रकाण्डैः कालिदासभारविश्रीहर्षशूद्रकादिमहीतलमण्डनायमानमहाकविभिश्चाङ्गीकृतं विष्णुब्रह्मादिदेवगणसंस्तुतं जगन्मान्यं परमपवित्रं शैवमतमिदं कदा पूर्वकालस्थितस्ववैभवाधिक्यं धारयिष्यति, कदा स्वकीयमहिमातिशयं नरनिकरे प्रकटीकरिष्यति तथा कदा भुवनमेतच्छिवीकरिष्यतीति शैवमतप्रचारकास्तत्सेवकाश्च रात्रिंदिवं विचारयन्ति। किं तेन विचारणेन। किन्तु प्रतिवत्सरं प्रसिद्धस्थलेषु शैवपुङ्गवैर्महाशैवसभाः स्थापयितव्याः। तासु किन्नामशैवमतं कथमुत्पत्तिः स्तस्य कथं तस्य सर्वव्यापित्वं कतिविधाः

शैवाः, कोऽयमेतेषां सिद्धान्तः, कथं तेषामाचरणमित्यादिविषयाणां विमर्शः कार्यः । अपि च जगत्प्रसिद्धेषु संस्कृतमासिकपत्रेषु ( शारदादिषु ) भाषामासिकपत्रेषु (सरस्वत्यादिषु) च शैवविषयकाः प्रबन्धाः प्रतिमासं प्रकाशयितव्याः पण्डितप्रकाण्डैः । तत्रतत्र स्थलेषु शैवमतोपदेशकाः स्थिरीकर्तव्याः श्रीमद्भिर्भुवनप्रसिद्धेषु काशीहरद्वारप्रभृतिविद्वद्पीठेषु शैवभाष्यादिग्रन्थाध्ययनार्थं पाठालयाः स्थापयितव्याः शैवभूपतिभिः । विद्वन्मण्डलिमण्डितपत्तनेषु शैवग्रन्थपरिपूरिताः शैववाचनालयाः निर्मातव्या शैवमताग्रेसरैश्च । एते हि हेतवः शैवमतमूर्जितावस्थामारोपयिष्यन्ति ।

अतएव शैवविषयकवाचनाभिरुचीनां शारदावाचकानां पुरतोऽस्य शैवभेदान् तत्तल्लक्षणादिकञ्च कथितुमुत्सहे । शैवदर्शने शैवा अनादिशैवादिशैवमहाशैवानुशैवावान्तरशैवप्रवरशैवान्त्यशैवभेदात् सप्तविधाः कृताः । य आत्मानं परं ब्रह्मेति मत्वा मत्तो नास्ति कोऽपि लोके श्रेष्ठ इति मन्यते स एवानादिशैव इत्यूचुर्मनीषिणः । यः शिवपञ्चाक्षरीमन्त्रेण दीक्षितो भूत्वा सदा पञ्चाक्षरमनु मनसि जपति स आदिशैव इति निगद्यते शास्त्रज्ञैः, यः कौशिककश्यपभरद्वाजात्रिगौतमानां वंशे समुद्भूय सोपनयनः परब्रह्मरूपं शिवं मनसि ध्यात्वा पूजयति स महाशैव इति संकीर्त्यते शैवदर्शनकोविदैः । यः क्षत्रियो वा वैश्यो वा दीक्षितः सन् शिवलिङ्गं पूजयति सोऽनुशैव इत्युच्यते पण्डितैः, यः शूद्रः सदीक्षः शिवं पूजयति सोऽवान्तरशैव इति संकीर्त्यते शैवशास्त्रविशारदैः, ये कुलालपार्श्वकादयः शिवं पूजयन्ति स्तुवंति वा ते प्रवरशैवा इत्यभिधीयन्ते शास्त्रतत्वज्ञैः । येऽन्त्यजाः शिवं भक्तिपूर्वकं भजंति तानन्त्यशैवानिति संजगदुः शास्त्रविचक्षणाः, पुनश्च शैवाश्चतुर्विधाः कृताः शैवदर्शनकारैर्वामशैवदक्षिणशैवमिश्रशैवसिद्धान्तशैव - भेदात् । तत्र यः शक्तिंप्राधान्येन मानयित्वा शिवं पूजयति स वामशैवो भवति, यो भैरवं सर्वोत्तमत्वेन मानयित्वा शिवं पूजयति तं दक्षिणशैवमिति वदन्ति विचक्षणाः, यो ब्राह्मीमाहेश्वरीप्रभृतिसप्तमातॄः सर्वोत्तमत्वेन ज्ञात्वा शिवं पूजयति तं मिश्रशैवमिति निगदन्ति निपुणाः, यः शिवेतरदेवान् तृणसाम्यान् ज्ञात्वा केवलं साम्बमेव पूजयति तं सिद्धान्तशैवमिति शंसन्ति शैवशास्त्रविशारदाः, एत एव वीरशैवा इति धरातले प्रसिध्यन्ति, अपिच केचन शिवध्यानसन्तानसंलग्नहृदयाः साम्बसम्पूजनसादरबुद्धयः शिवसिद्धान्तकोविदाः शिव एव सर्वोत्तमो न त्वन्य इति हस्तोद्गमनपूर्वकं प्रशंसनपरायणाः शिवचिह्नधारणकुतुकिनः शिवपञ्चाक्षरासक्तमनसो महात्मानो माहेश्वरा वर्तन्ते, तेऽपि पाशुपतशैवकापालिककारुकभेदाच्चतुर्विधाः । एते चतुर्विधा माहेश्वराः कार्यकारणयोगविधिदुःखान्ता इति पञ्चपदार्थान् मानयन्ति । पञ्चैते पदार्थाः पूर्वं पशुपतिना पशुपाशविमोक्षणायोपदिष्टाः तत्र कार्यं महदादिकारणमीश्वरो योग ओङ्कारध्यानधारणादिर्विधिस्त्रिषवणस्नानादिगूढचर्यावसानो दुःखान्तो मोक्षः । पशव आत्मानस्तेषां पाशो बन्धस्तद्विमोक्षो दुःखान्त इति । पाशुपताः कर्मादिनिरपेक्षः परमेश्वरः कारणमिति ब्रुवन्ति, तन्न सहंते शैवाः, किन्तु कर्मादिसापेक्षः परमेश्वरः कारणमिति कथयन्ति । पाशुपताः स्वशास्त्रोक्तरीत्या दीक्षां गृहीत्वा शिवपूजापरा भवंति शैवाः स्वदर्शनोक्तानुसारेण साधकदीक्षा निर्बीज-

दीक्षा-सबीजदीक्षासु कामप्येकां दीक्षां तिस्रो वा लब्ध्वा शिवनिन्दां शिवभक्तनिन्दां शिवशास्त्रनिन्दां भूतहिंसां चासहिष्णवो देवतान्तरनिर्माल्यभक्षणविमुखमनसश्च केवलं शिवपूजां शिवध्यानं शिवनिर्माल्यभक्षणमेवाङ्गीकुर्वते । कापालिकाः स्वशास्त्रसङ्कथितरीत्या दीक्षिताः कानिचिच्छिवचिह्नानि धारयित्वा तद्ध्यानदत्तचित्ता मनुष्यकपालेषु भिक्षां याचमानाः पर्यटन्ति, कारुकसिद्धान्तवादिनस्तु स्वसिद्धान्तानुसारेण सदीक्षा देवोत्तमं महादेवं पूजयित्वा तत्स्तोत्राणि कृत्वा च मुक्ता भवन्ति । एवमन्येपि प्रत्यभिज्ञावादिनो रसेश्वरसिद्धान्तमानिनश्च माहेश्वरा वर्तन्ते । तेषां सिद्धान्त एतदपेक्षया भिन्न इति सर्वं समञ्जसम् । भो वाचकमहाशयाः ! साम्प्रतं शैवशिखामणीनां शक्तिविशिष्टाद्वैतसिद्धान्ताध्ययनाद्भुतमतीनां शिवजीवैक्यविद्याविलासरममाणशेमुषीशालिनां वक्षोमस्तककण्ठदेशसंविराजच्छिवलिङ्गाभिरामाणां रुद्राक्षभस्मालङ्कृतशरीराणां निगमागमोदिताचारप्रतिपादनोपरतानामष्टावरणप्रतिष्ठितानां पञ्चाचारपरायणानां पञ्चाचार्यपादपूजादत्तचित्तानां परमपवित्रपञ्चाक्षरीमन्त्रमग्नमनसां शिवादिभूम्यन्तषट्त्रिंशत्तत्त्वज्ञानभूषितानां दशविधलिङ्गस्वरूपदर्शनपरमचतुराणां लिङ्गाङ्गसामरस्यज्ञाननिरतमतीनां षट्स्थलबोधसम्पादनातिकुशलानां स्थलं ब्रह्मेति मन्यमानानां वीरशैवानां स्वरूपं वक्तुमारभे । वीरशैवाः शक्तिविशिष्टाद्वैतसिद्धान्तिनः, तत्सिद्धान्ते शक्तिविशिष्टः शिव एव प्रतिपाद्यते न तु तद्रहितः शिवः । शक्तिविशिष्टब्रह्मस्वरूपज्ञानाय तन्मते बहूनि भाष्याण्यरचयन्त पूर्वाचार्यैः । परमपवित्रं शैवशेखरीभूतं शिवलोकप्रापणविषये सोपानायितमेतद्वीरशैवमतं युगयुगान्तरे स्थितं न तु मतान्तरवदर्वाचीनम् । पूर्वं कृतयुगे शङ्करः स्वेच्छया स्वीयसद्योजातवामदेवाघोरतत्पुरुषेशानमुखेभ्यः क्रमेण रेणुक, दारुक, शंकुकर्ण, धेनुकर्ण, विश्वकर्णनामभिः प्रसिद्धान् गणाधीश्वरान् जनयामास, पुनस्तानित्थमाज्ञापयत, गणश्रेष्ठा यूयं भूतलं गत्वा तत्रत्य कोल्लिपाकिक्षेत्र, वटक्षेत्र, द्राक्षारामक्षेत्र, सुधाकुण्डक्षेत्र, काशीक्षेत्रेषु क्रमेण संविराजत्सोमनाथसिद्धेश्वररामनाथलिङ्गमल्लिकार्जुनविश्वनाथलिङ्गेभ्यः समुद्भूय वीरशैवमतस्थापनं कुरुत इति । तदाज्ञानुसारेण शिवलिङ्गभस्मरुद्राक्षादिशिवचिह्नचिह्नितदेहाः पञ्च ते गणाधीश्वरास्तत्तल्लिङ्गेभ्य उद्भूय एकाक्षरशिवाचार्यद्व्यक्षरशिवाचार्यत्र्यक्षरशिवाचार्यचतुरक्षरशिवाचार्यपञ्चाक्षरशिवाचार्य-नामभिः प्रसिद्ध्य च रम्भापुरी, उज्जयिनी, हिमालय, श्रीशैल, वाराणसीति विख्यातपवित्रस्थानेषु धर्मपीठानि स्थापयामासुः । तथैव जगतीतलेऽस्मिन् परमपवित्रं वीरशैवसिद्धान्तं स्थापयामासुश्च । एतादृक्परमपावित्रं वीरशैवमतं धरातले स्थिरीकृत्य तत्परिपालनाय स्वस्वसिंहासनेषु शक्तिविशिष्टाद्वैतसिद्धान्तकोविदान् शिवाचार्यान् संस्थाप्य च पूर्वं यद्यल्लिङ्गाज्जनिं प्राप्ता आसन् तत्तल्लिङ्गे लयं जग्मुः । यथा यथा कालक्षयस्तथा तथा धर्मक्षय इत्यार्योक्तरीत्या वीरशैवमतमपि कृतयुगान्ते क्षयदशामलभत "यदा यदा हि धर्मस्य ग्लानिर्भवति भूतले । तदा तदावतारोऽयं गणेशानां नगात्मजे" इतिशङ्करसंहितावचनानुसारेण भक्तरक्षणदत्तचित्तो दयासमुद्रः सर्वज्ञः शङ्करो ग्लानिदशामूलं विचार्य पूर्वं सिद्धान्तममुं संस्थाप्य पुनः स्वस-

न्निधिं समुपागतान् पञ्चशिवाचार्यांस्तानाहूयेत्थमाज्ञापयत्, कृतयुगस्यादौ युष्माभिः स्थापितः शक्तिविशिष्टाद्वैतसिद्धान्तोऽयमधुना क्षयावस्थां स्थितोऽस्ति, तत्तदुद्धाराय त्रेतायुगारम्भे युष्मज्जननमूलेभ्यस्तेभ्य एव पञ्चशिवलिङ्गेभ्यः समुद्भूय पवित्रनामान्तरैः प्रसिद्धिं गत्वा रम्भापुरीप्रभृतिपञ्चपुण्यक्षेत्रेषु युष्मन्नामभिः पुनर्धर्मपीठानि स्थापयित्वा च वीरशैवसिद्धान्तं स्थिरीकुरुतेति तदा तदादेशानुसारेण पञ्च ते शिवाचार्यास्तत्तल्लिङ्गाज्जनिमवाप्योक्तपुण्यस्थलेषु पुनः स्वनामधेयैः सिंहासनानि स्थापयामासुः । त एव एकमुखशिवाचार्य, द्विमुखशिवाचार्य, त्रिमुखशिवाचार्य-चतुर्मुखशिवाचार्य, पञ्चमुखशिवाचार्याभिधानैर्धरातले धवलितयशसो भूत्वा त्रेतायां वीरशैवसिद्धान्तं स्थिरीचक्रुः । एवं स्थिरीकृत्य तत्र तत्र स्वोत्पत्तिमूलभूतलिङ्गे लयं प्रापुः । उक्तरीत्या सिद्धान्तोऽयं पुनस्त्रेतायुगान्तेऽपि ग्लान्यवस्थां प्राप, विचार्यैतद्दशां करुणापारावारः साम्बस्त्रेतायुगस्यादौ सिद्धान्तममुं प्रतिष्ठाप्य पुनः स्वसन्निधिं गतांस्तानेव शिवाचार्यानाहूय तेषामुपरि निर्दिष्टानुसारेण द्वापरयुगादौ वीरशैवसिद्धान्तप्रतिष्ठापनायादेशं चकार । लोकैकशङ्करस्य शङ्करस्यादेशं मूर्ध्नि कृत्वा पञ्चशिवाचार्यास्ते तत्तल्लिङ्गादुद्भूय रेणुकशिवाचार्य, दारुकशिवाचार्य, घण्टाकर्णशिवाचार्य, धेनुकर्णशिवाचार्य, विश्वकर्णशिवाचार्यनामधेयैर्विततकीर्तयो भूत्वा क्रमेण रम्भापुरीप्रभृतिपञ्चपुण्यक्षेत्रेषु स्वाभिधानैर्धर्मसिंहासनानि स्थापयित्वा च द्वापरयुगे स्वसिद्धान्तं स्थिरीचक्रुः । तथैव स्वोत्पत्तिकारणीभूतलिङ्गे विलीय शिवसन्निधिं जग्मुः । यदा महर्षिकुलावतंसो व्यासो वाराणसीं प्रविश्य विश्वनाथस्य निकटं गत्वा "न देवः केशवात्परः" इत्युच्चचार, तस्मिन्नेव काले बाहुस्तम्भस्तस्याऽजायत, तन्निवारणार्थं बहुविधं तुष्टाव विश्वनाथं सः । अपि च वाराणस्या अनतिदूरे शिवरूपधारिश्रीघण्टाकर्णशिवाचार्यनिवासातिपवित्रितस्थले लिङ्गमेकं संस्थापयामास । तल्लिङ्गमद्यापि व्यासेश्वराभिधानेन प्रसिद्धमस्ति, कथैषा काशीखण्डे सविस्तरं लिखिताऽस्त । महर्षिरेष एव द्वापरे हिमालयमलङ्कुर्वन् वीरशैवसिद्धान्तं पुनः प्रकटीचकार । अद्यापि तन्मन्दिरे वामहस्तधृतशिवलिङ्गमनोहरो भस्मरुद्राक्षादिवीरशैववेषालङ्कृतो घण्टाकर्णशिवाचार्यस्य विग्रहो विराजमानोऽस्ति, बहुप्राचीनतया किंचिच्छिन्नं तन्मुखमिति परीक्षणीयं परीक्षकैः । तद्वदेव वीरशैवमतं द्वापरयुगान्तेऽपि क्षीणदशामलभत, तदापरमकारुणिकः सकललोकशिवकरः स्वभक्तोद्धरणोदारधीर्दयानिधिर्देवदेवोत्तमो भवानीसहितः परमेश्वरो द्वापरयुगस्यादौ वीरशैवसिद्धान्तं प्रतिष्ठाप्य पुनः स्वसन्निधिं संप्राप्तांस्तान् शिवाचार्यान् वीरशैवसिद्धान्तं पुनः स्थापयितुं कलियुगस्यादौ प्रेषयामास भूतलम् । ते महात्मानः शिवलक्षणलक्षिताः शिवलिङ्गाभिरामा भस्मरुद्राक्षालङ्कृतदेहा जटाकौपीनकाशितकाया दण्डकमण्डलुमंडितकरदंडाः खंडपरशुस्तुतिमंडनायमानतुण्डा जगद्गुरुरूपधराः शिवपुत्राः शिवपञ्चाक्षरीं जपन्त एव समजायन्त क्रमेण सोमनाथादिलिङ्गपञ्चकात् । त एवमहात्मानो महीतलमण्डनायमाना रेवणसिद्धाराध्यमरुलाराध्य, एकोरामाराध्य-पण्डिताराध्य, विश्वाराध्याभिधानैर्जगति विख्यातिं लब्ध्वा कलियुगे वीरशैवसिद्धान्तममरं चक्रुः ।

एवं स्थिरीकृत्य सोमनाथादिलिङ्गेषु लयं लेभिरे । एतद्विषयः सुप्रबोधपाशुपतस्वयंभुवागमेषु बहुप्रपञ्चितोऽस्ति । एवं स्वकीर्तिसन्तानधवलीकृतदिगन्तरालास्त्रिभुवनपावनार्थं शिवकलाः संधृत्य भूलोकमायाताश्चतुर्दशलोकवन्द्यमानपदाम्बुजद्वन्द्वाभिरामाः शिवसिद्धान्तसाधनातिसमर्था निगमागमतत्त्वविमर्शनविचक्षणा मङ्गलमूर्तयः परमपवित्रहृदयाः पञ्चाचार्या वीरशैवसिद्धान्तं स्वस्वविरचितभाष्यैः प्रकटीचक्रुः ।

( अपूर्णः )

काशीनाथशर्मा काव्यतीर्थः

---

## शारदास्तवनम्

श्रीपद्मसद्मप्रभुदेहजाता
जातान् पुरोवर्ति जनान् दयार्द्रा ।
दुःखार्त्तचित्तान् बहुपापवित्तान्
पवित्रयन्ती जगतीतलेऽस्मिन् ॥१॥

भावप्रभावं कुरुताद्विभावं
सरस्वती सा रससारसारा ।
पयःपयोधेः पयसां समूहं
या ह्रेपयन्ती सुहसैः स्वकीयैः ॥ २ ॥

सदा समानां सुखदासमानां
ये पूजयन्ति प्रचुरं जनास्त्वाम् ।
धन्या उदन्यां भवसिन्धुमध्ये
विमोहजन्यां प्रविनाशयन्ति ॥ ३ ॥

असारदुःखौघविनाशनाय
विनाशिनीं कल्मषसंचयस्य ।
विज्ञानपथ्यप्रचरे चरन्तः
सदा हरन्तो भवदुःखबाधाम् ॥ ४ ॥

त्वामर्चयन्ति प्रमदं दधानाः
धीरा नरा ज्ञानयशःशरीराः ।
भीताभवोत्पन्नभयेन नूनं
विमुक्तकान्ताकनकादिसङ्गाः ॥५॥

त्वया विरक्तो द्रविणादिरक्तो
न वाप्नुयात्सर्वपथीनमानम् । ६
त्वत्पादपूजाविरतस्य मातः
सर्वं जगच्छून्यमिवावभाति ॥ ६ ॥

तर्केन्द्रनाथः

---

## श्रीसरयूस्तवः ।

( १ )

तेऽन्तःसत्त्वमुदञ्चयन्ति रचयन्त्यानन्दसान्द्रोदयं
दौर्भाग्यं दलयन्ति निश्चलपदः संभुञ्जते संपदः ।
शय्योत्थायमदभ्रभक्तिभरितश्रद्धाविशुद्धाशया
मातः पातकपातकर्त्रि सरयु त्वां ये भजन्त्यादरात् ॥

( २ )

किं नागेशशिरोवतंसितशशिज्योत्स्नारसैः प्लाविता
किं वा व्याधिशमाय भूमिवलयं पीयूषधारागता ।
उत्फुल्लामलपुण्डरीकपटलीसौन्दर्यसर्वंकषा
मातस्तावकवारिपूरसरणिः स्नानाय मे जायताम् ॥

( ३ )

अश्रान्तं तव सन्निधौ निवसतः कूलेषु विश्राम्यतः
पानीयं पिबतः क्रियां कलयतस्तत्त्वं परं ध्यायतः ।
उद्यत्प्रेमतरङ्गभङ्गुरदृशा वीचिच्छटां पश्यतो
दीनत्राणपरे ममेदमयतां वासिष्ठि शिष्टं वयः ॥

( ४ )

गङ्गा तिष्यविचालिता रविसुता कृष्णप्रभावाश्रिता
क्षुद्रा गोमतिका परास्तु सरितः प्रायोऽयमाशागताः ।

त्वं त्वाकल्पनिवेशभासुरकला पूर्णेन्दुबिम्बोज्ज्वला
लोस्यां संस्थितिमातनोषि जगतां सौभाग्यसंपत्तये

( ५ )

मज्जन्नाकनितम्बिनीस्तनतटाभोगस्खलत्कुंकुम-
क्षोदामोदपरम्परापरिमिलत्कल्लोलमालाकुले ।
मातर्मानससंभवे भवभयक्लेशापहारोद्यते
त्वद्वारां निचयेन मामकमलस्तोमोऽयमुन्मूल्यताम्

[ ६ ]

दृष्टान्भोगान्घटयितुमिवागाधलक्ष्मीपरार्ध्य-
स्फायद्वल्गल्ललितलहरीहस्तमावर्तयन्ती ।
गन्धद्रव्यच्छुरणविकसद्वारिवासोवसाना
सा नः शीघ्रं हरतु सरयूः सर्वपापप्ररोहान् ॥

[ ७ ]

जयति विपुलपात्रप्रान्तसंरूढगुल्म-
व्रततिततिनिबद्धारामशोभां श्रयन्ती ।
निशि शशिकरयोगात्सैकतेऽप्यम्बुसत्तां
सपदि विरचयन्ती सापगा वै जयन्ती ॥

[ ८ ]

अंहांसि नाशयन्ती घटयन्ती सकल सौख्यजालानि ।
श्रेयांसि प्रथयन्ती सरयूः साकेतसंगता पातु ॥

[ ९ ]

य इमकं सरयूस्तवमद्भुतं पठति भक्तिरसाप्लुतमानसः
सखलुतत्कृपयासुखमेधतेऽनुगतपुत्रकलत्रसमृद्धिभाक्

दुर्गाप्रसाद द्विवेदी ( जयपुर )

---

## संस्कृतसाहित्यसम्मेलनम्

अखिलभारतवर्षीयस्य संस्कृतसाहित्यसम्मेलनस्य चतुर्थमधिवेशनमैषमश्चैत्रमासस्य सिते पक्षे चतुर्दशी-पूर्णयोः ( ६,७ एप्रिल १९१७ ) पञ्चनदप्रान्तस्य राजधान्यां लवपुरे ( लाहौर ) सुमहता समारोहेण समपद्यत । चतुर्दश्यां प्रातर्नववादनवेलायामेव समवेताः सुमहान्तो विद्वांसः । सम्मेलनेऽस्मिन् विदुषां संख्या आसीत् स्पृहणीया मनस्तोषकरी च । एतावतां विदुषामेवंविधः समवायः, सुरभारत्या सम्पाद्यमानः सर्वेषां सर्वविधो व्यवहारश्च यत्सत्यमस्मारयत् पुराकल्पस्य । पञ्चनददेशस्य च प्रायेण सर्वेभ्योऽपि नगरेभ्यः समागत्य ख्याता महान्तो विद्वांसः सममिलन्, देशान्तरेभ्योऽपि बहवो विद्वांसः समायाता आसन् । पञ्चापविश्वविद्यालयस्य कार्याध्यक्षः श्रीमान् ए० सी० वुलनर महाभागः स्वागतकारिण्याः समितेः सभापतिः, राजकीय महाविद्यालयस्य संस्कृताध्यापकः श्री गुलबहारसिंह एम० ए० महोदयश्च मन्त्री नियमित आसीत् । प्रधानसभापतेरासनमलङ्कर्तुंञ्च मिथिलादेशस्याधीश्वरा दरभङ्गाधीश्वराः श्री रमेश्वरसिंहमहाभागा निर्वाचिता अभूवन्, दर्शकानामप्यनल्पैवासीद् गणनाऽस्मिन् काले । दशवादनकाले समायाते श्रीसभापतिमहोदये, गानशास्त्रविशारदै र्गीतासु श्रवणमनोहारिणीषु गतिषु, हरिद्वारस्थ ऋषिकुलब्रह्मचारिभ्यां वेदघोषेणानुष्ठिते मङ्गले, स्वागतकारिण्याः सभापतेः सुललितं सरसपदं मुद्रितं व्याख्यानं तत्प्रातिनिध्येन सुप्रसिद्धः श्रीगणेशदत्तशास्त्रिमहाभागः सुस्वरमपठत् । तदनन्तरं सर्वदेशीयैर्वृद्धैः प्रस्तुतमनुमोदितं सर्वसम्मत्या स्वीकृतञ्च दरभङ्गाधीश्वरस्य सभापतित्वम् । सभापतेः स्कन्धे सुशोभिताऽसीत् सुमनोमाला, अथारब्धा महाराजैर्वक्तृता आसीदियं विस्तृता च गम्भीरा च सुप्रसन्ना च ललिता च सर्वजनमनोहारिणी ।

संस्कृतभाषाया गौरवं पुराऽस्याः सर्वतोमुखः प्रचारः सर्वविद्यानां सर्वकलानां सन्निवेशश्चास्यामिति सुनिपुणमस्यामुपापाद्यन्त विषया अमी। संस्कृतास्युन्नतेरुपायाश्चाग्रे सम्यग् विवेचिता आसन्।

अथ सम्मेलनस्य मन्त्री अतीतानामब्दानां सङ्क्षिप्त कार्यविवरणम् आयव्ययगणनाञ्चाश्रावयत्। तदनु श्रीहरिहरस्वरूपशास्त्रीसंस्कृतशिक्षाप्रणाली-परिष्करणविषये, श्रीनृसिंहदेवशास्त्री दर्शनानामैकमत्यविषये, श्रीमदनगोपालशास्त्री च प्राक्तनानामाचाराणां महत्त्वविषये स्वीयं स्वीयं निबन्धमपठन्। निबन्धा अमी आसन् मनोज्ञाः प्रभावोत्पादकाश्च, कियतश्चित् कालात् पूर्वं प्रतिष्ठिते कार्यवशात् श्रीसभापतिमहोदये दरभङ्गाधीश्वरे पटियालास्थैः श्रीश्रीकृष्णशास्त्रिमहाभागैस्तत्प्रातिनिध्येन सभापतिस्थानमलमक्रियत। एतदनन्तरमासीद् विषयनिर्वाचनाय समितिः प्रतिष्ठिता।

द्वितीयेऽपि दिवसेऽपठयन्त बहवो निबन्धाः। एषु श्रीरघुवरदयालुशास्त्रिणां श्रीशङ्करभगवत्पादप्रादुर्भावसमयनिरूपकः, श्रीगणेशदत्तशास्त्रिणां प्राचीनाधुनिकसमाजविवेचकश्चेति निबन्धाविमावतीवमनोज्ञावास्ताम्। अनन्तरं महद्भिर्विद्वद्भिः प्रस्तुताः अनुमोदिताश्च स्वीकृता आसन् निम्ननिर्दिष्टाः प्रस्तावाः कतिचित्। प्रस्तावानन्तरमस्वास्थ्यवशात् प्रतिष्ठिते श्रीदरभङ्गाधीश्वरे वृन्दावनस्थरङ्गमन्दिराध्यक्षैः श्रीरामानुजाचार्यमहोदयैस्तत्प्रातिनिध्येन सभापतिपदमलङ्कृतमासीत्। प्रस्तावानां सम्बन्धे विदुषामोजःपूर्णा ललिता वक्तृता आसन्।

( प्रस्तावाः )

( १ ) अखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनमिदं भारतचक्रवर्तिनः श्रीपञ्चमजार्जमहोदयस्य प्रवृत्ते युरोपीयमहासंग्रामे विजयं चिरमभ्युदयञ्च जगदीश्वरात् प्रार्थयते। राजभक्तिञ्च स्वीयां सुदृढां प्रकटयति।

प्रस्तोता सभापतिः।

( २ ) सं० सा० सम्मेलनमिदं गो० बालकृष्णमहाभागानां विद्यावारिधिश्रीज्वालाप्रसादमिश्राणाञ्चाकालिकमृत्युसम्बन्धे शोकं प्रकटयति।

प्रस्तोता सभापतिः।

( ३ ) सं० सा० सम्मेलनमिदं द्वितीयमुद्देश्यं पूरयितुं साम्प्रतिकशिक्षाप्रणालीपरिशोधनायोपसमितिमेकां सङ्घटयति। या प्रारम्भिकशिक्षाविषये उच्चशिक्षाविषये च कतिचित् प्रश्नान् निरूप्य तद्विषये परिशीलितशास्त्राणामनुभवशालिनां प्राक्तनपरिपाटीपण्डितानामाधुनिकशिक्षानिष्णातानाञ्चोभयविधानामपि विदुषां सम्मतीः सङ्ग्रहीष्यति। ये ये विद्वांसः सम्मतिप्रदाने आवश्यकाः समित्या मन्येरन्, पत्रालापैः स्वयं तत्सेवायां समुपस्थाय वा तत्सम्मतिरनया सङ्गृह्येत। एतस्मिन् कार्ये आवश्यको व्ययः सम्मेलनकोशात् प्रदीयेत। एतदन्वेषणफलभूतश्च निबन्धः समित्या आगामिनि सम्मेलने समुपस्थाप्येत्।

समितेः सभ्याः

(१) म. म. श्रीहरनारायणशास्त्रिणः (देहली)
(२) श्रीहरिहरस्वरूपशास्त्रिणः (झज्झर)
(३) श्रीरघुवरदयालुशास्त्रिणः एम्. ए. (लाहौर)
(४) श्रीगुलबहारसिंहमहाशयाः एम्. ए. (लाहौर)
(५) श्रीगोकुलचन्द्रशास्त्रिणः (लाहौर)

(६) श्रीगिरिधरशर्म्माणः (झालरापाटन)
(७) श्रीगिरिधरशर्म्मा चतुर्वेदः (संयोजकः)
प्रस्तोता म० म० श्रीहरनारायण शास्त्री विद्यासागरः (देहली)
अनुमोदकः श्रीहरिहरस्वरूपशास्त्री (झज्झर)

समर्थकाः {
श्रीहाथीभाईशास्त्री (जामनगर)
श्रीब्रह्मदत्तशास्त्री (लवपुर)
श्रीगिरिधरशर्म्मा ('मन्त्री')
}

एतत् प्रस्तावसम्बन्धे प्रस्तोतृमहाशयस्यातीव सरसा सालङ्कारा मनोज्ञपदा ओजःपूर्णा चासीद् वक्तृता । अनुमोदकमहोदयोऽपि महतौजसा सुललितया भाषया सुस्वरमन्वमोदत । सर्वसम्मत्या स्वीकृतः प्रस्तावः ।

(४) सं० सा० सम्मेलनमिदं संस्कृतसाहित्याभिवृद्धये नूतनानां ग्रन्थानां निर्माणमावश्यकं मन्यते, विशेषतश्च निम्ननिर्दिष्टेषु विषयेषु पाठनयोग्यान् निबन्धान् निबन्धुं सानुरोधं योग्यान् विदुषः प्रार्थयते । एतद्विषयकग्रन्थनिर्मात्रे च योग्यपारितोषिक-प्रदाननियमनाय महाराजान् संस्कृतानुरागिणो धनिकाँश्च सविनयं प्रार्थयते । सम्मेलनस्य स्थायिनी कार्यकारिणीसमितिः पारितोषिकनियमनाय प्रयतेत, ग्रन्थपरीक्षणार्थञ्च उपसमितिमेकां व्यवस्थापयेत् ।

विषयाः ।

१ भूगोलविद्या
२ भारतीयमितिवृत्तम्
३ संस्कृतसाहित्येतिहासः
४ आधुनिकं विज्ञानम्
५ व्यावहारिकशब्द-कोशः

अन्ये चावश्यका विषयाः समित्या व्यवस्थाप्येरन् ।

प्रस्तोता—श्रीरघुवरदयालु शास्त्री (लवपुर)
अनुमोदकः—श्रीअमृतरामनारायणशास्त्री (बरौदा)

समर्थकौ {
श्रीगङ्गाप्रसाद शास्त्री (भरतपुर)
श्रीमुलकराज शास्त्री (पटियाला)
}

(५) सं० सा० सम्मेलनमिदं काशीगवर्नमेण्ट संस्कृत-विद्यालयपरीक्षाविषये निम्ननिर्दिष्टान्यावश्यकानि परिवर्तनानि कृपया विधातुं युक्तप्रान्तीयगवर्नमेंटसेवायां सविनयं प्रार्थयते ।

(क) आचार्यपरीक्षायाः षोढाविभक्ताया वर्षषट्कपर्यन्तं प्रदाने छात्राणामतिशयितः क्लेशो व्ययबाहुल्यञ्च भवति, हतोत्साहाश्च बहवो भवन्ति छात्राः । तदत्र कृपया सुविचार्य निम्ननिर्दिष्टास्वन्यतमा व्यवस्था स्वीकार्या ।

(१) स्वकीयविद्यालयस्य मध्यमपरीक्षावत् पञ्चापविश्वविद्यालयस्य एम्.ए. परीक्षावच्चैकदाप्याचार्यपरीक्षाप्रदानं वानुमन्तव्यम् ।

(२) प्रयागविश्वविद्यालयस्य एम. ए. परीक्षावत् खण्डषट्कस्थानेखण्डद्वयविभागो वा अस्यामाचार्यपरीक्षायां विधेयः ।

(३) षट्सु खण्डेषु एकस्यैव शास्त्रस्य शास्त्रद्वयस्य वा खण्डद्वयपरीक्षाप्रदानमेकस्मिन्नब्दे वानुमन्तव्यम् ।

(ख) किञ्च मध्यमपरीक्षावदाचार्यपरीक्षाकेन्द्रस्थानानि अपि छात्रसौकर्याय कृपया तत्र तत्र स्वीकर्तव्यानि ।

प्रस्तोता सभापतिः

(६) अस्मिन् पञ्चनदप्रान्ते सकलविद्यालयप्रधानाध्यक्षमहाशयैः (Director) शास्त्रिपरीक्षोत्ती-

र्णेभ्यो विद्वद्भ्यस्तेषु तेषु विद्यालयेष्वध्यापकपदेषु प्रतिष्ठापनसमये प्रारम्भे विंशतिमुद्रामासिकवेतनप्रदाननियमः कृतोऽस्ति, सोऽयं संस्कृतभाषाया महानपकर्षसूचकइति सम्मेलनमिदं साग्रहं शीघ्रं तत्परिवर्तनाय प्रधानाध्यक्षमहाशयान् प्रार्थयते, न्यूनत एतद्द्विगुणं प्रारम्भिकं वेतनं प्रदातुं नियम्येतेति चाशास्ते अन्यानपि पाठशालाध्यक्षमहाशयान् संस्कृतभारत्या गौरवं संरक्षितुं संस्कृतविद्वद्भ्योऽधिकवेतनप्रदानाय चानुरुणद्धि।

प्रस्तोता श्रीदेवराजशास्त्री ( मुलतान )

अनुमोदकः श्रीगिरिधर शर्मा चतुर्वेदः

(७) इदं सम्मेलनं पञ्चापविश्वविद्यालयाध्यक्षसेवायां सविनयं प्रार्थयते, यत्तैरध्यापनकलाविद्यालये संस्कृत परीक्षोत्तीर्णानामपि शिक्षणकलामभ्यसितुं व्यवस्था विधेया।

प्रस्तोता सभापतिः

(८) इदं सम्मेलनं पञ्चापविश्वविद्यालयाध्यक्षसेवायां सादरं निवेदयति यत्तैः शास्त्रिपरीक्षायां सर्वोत्तमत्वेनोत्तीर्णेभ्यश्छात्रेभ्यश्छात्रवृत्तिं प्रदाय ओरिएण्टलविद्यालये शास्त्रीयान्वेषणकार्यमभ्यासव्यवस्था कार्या।

प्रस्तोता सभापतिः

सर्वेऽपि प्रस्तावाः सर्वसम्मत्या स्वीकृता आसन्। धन्यवादाद्यनन्तरं समाप्यत सम्मेलनकार्यम्। कैश्चिद्विद्वद्भिः सदस्यता सम्मेलनस्याभ्युपगता आसीत्, कैश्चिच्च द्रव्यसाहाय्यमपि दत्तम्। महामहोपाध्यायश्रीजगदीशपण्डितमहाभागैर्जम्बूमहाराजानां गुरुपदप्रतिष्ठितैः पञ्चविंशतिमुद्राः सम्मेलनसाहाय्यार्थमदीयन्त।

एषु तृतीयश्चतुर्थश्चेति प्रस्तावावित्रौ कियन्तमुपयोगमावहत इति नैतद् विवेचनापेक्षं विदुषां पाठकानामग्रे, नन्वत्रैव प्रतिष्ठिता सम्मेलनसाफल्यस्य, संस्कृतोन्नतेः, सुरभारत्या जीवनस्य वा प्रत्याशा। तदत्र सर्वैरेव विद्वद्भिराधेयं साहाय्यं, येन समुद्योगोऽयं फलेग्रही स्यात्। तृतीयप्रस्तावसम्बन्धे समारब्धमुपसमित्या कार्यम्। अचिरादेव शिक्षापरिपाटीसम्बन्धे प्रश्नाः प्रकाशयिष्यन्ते, प्रेषयिष्यन्ते च प्रतिष्ठितानां विदुषां सन्निधे। परं न सर्वेऽपि विद्वांसः सर्वैः प्रत्यभिज्ञायन्त इति विदितमेवैतत्। तद्विद्वांस एव कृपया स्वयमेव स्वकीयं मतं शिक्षासम्बन्धे प्रकाशयेयुश्चेन्ननु सेविता च समनुगृहीता च भवेद् भगवती गैर्वाणी वाणी। चतुर्थप्रस्तावसम्बन्धेऽपि ये महाभागास्तत्तद्विषयकग्रन्थनिर्माणाय समुत्सहेरन्, तैरेतैः कार्यालये पत्रप्रेषणद्वारा प्रकाशनीयः स्वाभिप्रायः।

साधारणसदस्यपदञ्च सर्वैरेव संस्कृतविद्वद्भिः सम्मेलनस्याङ्गीकार्यम्। येन सम्मेलनमन्वर्थाभिधानमासाद्य साफल्यं लभेतेत्यपि सानुरोधं सप्रत्याशञ्च निवेदनमेतत्। सदस्यदक्षिणा च प्रतिवर्षमेकमुद्रातोऽन्यूना। अधिकंतु यथाशक्ति। स्वीकृतिपत्राणि कार्यालयात् प्राप्यन्ते। सर्वविधपत्रव्यवहारः "श्रीसंस्कृतसाहित्यसम्मेलनकार्यालय ऋषिकुलहरिद्वार" इति संकेतेन विधेयः।

श्रीगिरिधरशर्मा चतुर्वेदः

सम्मेलनस्य 'मन्त्री'

## लोभः पापस्य तातः

कश्चिद् विद्वान् चेतसि चिन्तयामास पापस्य जनकः क इति?, इति परामृशन्नेवासौ विदेशवासमङ्गीचकार। यत्र तत्र लोकान् अनिशं पृच्छतिस्म, कथयत जनाः! 'पापस्य तातः क' इति, तस्य प्रश्नं श्रुत्वा काचिद् वेश्या तमाहूय अब्रवीत् विद्वन्, आगच्छ अस्मद् गृहे प्रश्नस्यैतस्योत्तरं दास्ये इति। स तु प्रश्नोत्तराकांक्षी झटित्येव वेश्यागृहं ययौ। सा तु तमब्रवीत्, ब्रह्मन्, कंचित्कालमिह स्थीयताम्, पाकं कृत्वा भुज्यताम्, प्रत्यहं मयादत्तं निष्कं (सुवर्णमुद्रा) गृह्यताम्। एतावता कार्यद्वयं संपत्स्यते, जन्मनः प्रभृति मयाऽऽत्मा विक्रीतः, धनञ्चार्जितम्। पारलौकिके नास्ति ममाल्पोऽपि पुण्यसंचयः। भक्त्या ब्राह्मणायार्पिते द्रव्ये मदीयः पारलौकिकः पुण्यचयः सत्यमेव वृद्धिं प्राप्स्यति, भवतश्च प्रश्नोत्तररूपं कार्यं च सेत्स्यति। तच्छ्रुत्वा लोभावृतो ब्राह्मणः प्रत्यहं तद्गृहप्राङ्गणे गोमयादिभिर्भूमिं परिष्कृत्य पाकं विधाय भुङ्क्तेस्म दक्षिणाद्रव्यं प्रतिज्ञातं निष्कमेकञ्च गृह्णातिस्म।

समयान्तरे सा तं लोभावृतं वाचा सन्तोष्याब्रवीत्, ब्रह्मन्! पाककाले तव कष्टाधिक्यं दृष्ट्वा दया मच्चेतसि पदं करोति। तदर्थमर्थये यदि स्नात्वा अहतवस्त्रे परिधाय शुचिर्भूत्वा पाकं कुर्यां तर्हि तद्ग्रहणे काऽपि हानिर्जायते भवताम्? तच्छ्रुत्वा विप्र उवाच, शांतं पापम्!!! तस्य तादृशं भावं विलोक्य बन्धकी प्रत्यवादीत्, ब्रह्मन्! मा कुप्य प्रत्यहं दश निष्कान् दक्षिणां दास्ये यदि मत् पाचितमन्नं भुञ्जीथा इति।

ततो लोभपरवशो ब्राह्मणः प्रत्युवाच, देवि! नास्ति काऽपि हानिः युष्मद्देहो वेशकर्मवशादशुद्धः, स्नानेन शुद्धो भवति। भगवान् मनुरप्याह "अद्भिर्गात्राणि शुध्यन्ति" इति सा तु हृष्टा ब्राह्मणाय पाकमकरोत्, भोजनकाले दशनिष्कान् दत्वा पर्यवेषयत्, विप्रोऽसौ लोभावृतो हस्तेन ग्रासमादाय यदैव मुखसमीपं निन्ये, तदैव सा बन्धकी करपल्लवेन ब्राह्मणस्य कपोलं प्रताड्य उवाच, रे ब्राह्मणाधम। पश्य! 'लोभ एव पापस्य तातः' इति स तु लज्जितः तत्प्रभृत्येव वैराग्यमापन्नस्तीर्थाटनमकरोत् निश्चिकये च पापस्य तातो लोभ एव नान्य इति।

काशीदत्त झा

---

## मल्लिनाथः

अयि गीर्वाणवाणीविलासासादितहृदयानन्दाः शारदाप्रणयिमहोदयाः। अस्मिन् क्षितिमण्डले कविकुलशेखरीभूता बहवः कवयष्टीकाकाराश्चाभूवन्। तेषां मध्ये पदवाक्यपारावारीणो महामहोपाध्याय कोलचलमल्लिनाथसूरिर्जातसंस्कारो मण्यादिरिव दीप्तिमानवृतत्। अनेन विरचिताष्टीका बहुषु काव्येषु दरीदृश्यन्ते। सर्वासु टीकासु च मध्येऽनेन कृताष्टीकाः सकलगुणपूर्णाः सर्वत्रलब्धप्रचाराः शोभनतराश्च जाग्रति खलु विदुषां समाजे। परञ्च श्रीमान् मल्लिनाथः कदा कस्मिन् समये कतमं जनपदं जन्मना भूषितवानिति निश्चेतुं न प्रतिभाति कोऽप्युपायः। तदपि शेमुषीमतां कोविदानामग्रे निवेदयत्ययं जनः। श्रीमान्मल्लिनाथो दाक्षिणात्य इत्यनुमीयते। प्रतापरुद्रीयटीकाप्रारम्भेऽस्य कनिष्ठसूनुः कुमारस्वामी मङ्गलाचरणश्लोकद्वयानन्तरमित्थमात्मानं वर्णयति। "वाणीं काणभुजीम

जीगणदवाशासीच्च वैयासकीमन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत्। घाचामाकलयद्रहस्यमखिलं यश्चाद्वपादस्फुरां लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः।" त्रिस्कन्धशास्त्रचुलुकीकुरुते स्म यः तस्य मल्लिनाथस्य तनयोऽजनि तादृशः कोलचलपेद्दार्यायः प्रमाणपदपारदृश्वा यः। व्याख्यातसर्वशास्त्रप्रबन्धकर्ता च सर्वविद्यासु तस्यानुजन्मा तदनुग्रहात्तविद्योऽनवद्यो विनयावनम्रः स्वामी विपश्चिद्वितनोति टीकां प्रतापरुद्रीयरहस्यमेत्रीम्। यद्यन्निगूढमखिलं शक्त्या तत्तत्प्रकाश्यते। नामूलं लिख्यते किंचिन्नानपेक्षितमुच्यते इत्यादिभिः। स च मल्लिनाथस्तैलङ्गाभिजनः खिस्ताब्दीयचतुर्दशशतके १४०० आसीदिति बहुसम्मतम्।

केचित्तु मल्लिनाथः शिशुपालवधकिरातार्जुनीयटीकासु च केशवकोशं प्रमाणत्वेनोपन्यस्तवान् केशवश्च स्वकीयकोशे "तत्रायं साम्प्रतंकलिः। तद्गताब्दाः कुतिथिभाः" (४७६१) इति कटपयादिक्रमेणात्मग्रन्थनिर्माणसमये कलिगताब्दान् वदति। अतः षष्ट्यधिकषोडशशत (१६६०) मिते खिस्ताब्दे केशवेन कोशो निरमायीति स्फुटमेव। एतद्वंश्या गजेन्द्रगढाख्यनगर्यामद्यापि तिष्ठन्तीति केचिद्वदन्ति।

केचित्तु कालिदाससमय एवास्य काल इति रटन्ति श्रीमल्लिनाथो भोजद्वारमागत्य द्वारपालकरकमलेन स्वकीयं कवितादलं प्रेषितम्। तच्चैवम्

"काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं दासीहस्तात्सभयमलिखद्व्यालमस्योपरिस्थम्॥ गौरीकान्तं पवनतनयं चम्पकं चात्र भावं पृच्छत्यार्यान् निपुणतिलको मल्लिनाथः कवीन्द्रः" ततो भोजो दलं गृहीत्वा पठित्वा च मल्लिनाथं समाहूय तं प्रोवाच। मल्लिनाथ सुकवे साधु रचिता गाथेति तदा कालिदासेनोक्तं किमुच्यते साध्विति। देशान्तरगतकान्तायाश्चरित्रवर्णनेन श्लाघनीयोऽसि विशेष्येतत्सद्भावप्रतिभट्टवर्णनेन।

ततो भवभूतिराह

विशेष्यत इयं गाथा दशवदनोद्यानवैरिणो वातात्मजस्य वर्णनादिति, ततः प्रसन्नेन राज्ञा तस्मै सुवर्णानां लक्षत्रयं दत्तम् पञ्चगजा दशहयाश्चदत्ता ततस्तुष्टो मल्लिनाथो राजानं नौति।

देव भोज तव दानजलौघैः सोऽयमद्य रजनीति विशङ्के। अन्यथा तदुदितेषु शिलागोभूरुहेषु कथमीदृशदानम्।

ततो राजा पुनस्तस्मै लक्षत्रयं दत्तवान् अतोऽलिखद्भाण्डारिकोधर्मपत्रे-

प्रीतः श्रीभोजभूपः सदसि विरहिणीगूढमौक्तिपद्यं श्रुत्वाहेम्नां च लक्षं दशवरतुरगान् पञ्चनागानयच्छत् पश्चात्तत्रैवसोऽयं वितरणगुणसद्वर्णनात्प्रीतचेता लक्षं लक्षं च लक्षं पुनरपि लक्षं मल्लिनाथाय तस्मै॥१॥

ततः प्रसन्नैः कालिदासादिभिः कविभिस्तस्मै मल्लिनाथाय स्वकीयानि स्वकीयानि कुमारसम्भवमेघदूतरघुवंशादीनि काव्यानि दत्तानि, दृष्टस्वान्तेनानेन तेषां टीका विविधप्रमाणैरकारि इत्यादिगाथाश्रवणात् काव्यप्रकाशटीकाकारस्य सरस्वतीतीर्थस्य जनको मल्लिनाथस्त्वस्माद्भिन्नः यतो नारायणो नरहरिश्चेति तत्सूनुद्वयस्य नामधेये, शिशुपालवधोपोद्घाते तु सरस्वतीतीर्थजनकः शिशुपालवधादिटीकाकारश्चैक एवेति भ्रमेण लिखितम्।

श्रीनिवासशर्म्मा

## अक्षरशब्दस्वरनिर्णयः

प्राचीनेभ्योऽप्युत्तमत्वं प्रायः ख्यापयितुं नवः ।
तदाशयमबुद्ध्वैव खण्डने यतते मृषा ॥

महाभाष्यद्वितीयाह्निकान्ते

"अथ किमिदम् अक्षरम् इति"

इति प्रश्नस्य —

१ अक्षरं नक्षरं विद्यात्
न क्षीयते न क्षरतीति वा अक्षरम् ॥

२ अश्नोतेर्वा सरोऽक्षरम्
अश्नोतेर्वा पुनरयम् औणादिकः सरन् प्रत्ययः ।
अश्नुत इत्यक्षरम् ॥

३ वर्णं वाहुः पूर्वसूत्रे
अथवा पूर्वसूत्रे वर्णस्य 'अक्षरम्' इति संज्ञा क्रियते इति त्रीण्युत्तराणि सन्ति ॥

तत्र द्वितीयोत्तरस्य व्याख्यावसरे प्रदीपे —

"सरन् प्रत्ययस्यानुबन्धलोपे कृतेऽनुकरणम् 'सरः' इति" कैयटः ।

एतद् व्याख्यायां छायायाम् ।

"लोप इति पद्यानुरोधेनेति भावः" इति वैद्यनाथः ।

एवं महाभाष्य-प्रदीप-छाया-ग्रन्थैः 'अक्षर' शब्दे नित्स्वरेणाद्युदात्तत्वं निश्चीयते । तदेव प्रथमोत्तरे नञ्समासेन निश्चीयते । एतदनुसारेण प्रश्नेपि 'अक्षर' शब्द आद्युदात्तत्वमेव, अतएव प्रश्नोत्तरेषु समानस्वरतयैव प्रश्नोत्तरभावः संगच्छते । उपलभ्यते च वेदेषु आद्युदात्तोऽक्षरशब्दः ऋ० पदपाठे (७।१५।९) (७।३६।७) मन्त्रयोः 'अक्षरा' इति पदे, (ऋ० सं० (३।३१।६) मन्त्रे यजुषि (३३।५९) मन्त्रे च 'अक्षराणाम्' इति पदे ।

यत्तु भट्टोजिदीक्षिताः-सिद्धान्तकौमुद्यामुणादिषु तृतीयपादे 'अशेः सरः' इति पठित्वा प्रौढमनोरमायां-" उज्ज्वलदन्तादयस्तु 'असः सरन्' इति पेठुः । तन्न नित्स्वरापत्तेः । दृश्यते तु प्रत्ययस्वरेणाक्षरशब्दस्य मध्योदात्तत्वम् 'अक्षरे परमे व्योमन्' (ऋ० १।१६४।३९)' 'अक्षरेण मिमते' (ऋ १।१६४।२४ इत्यत्र तथैव पाठात् । द्वितीयाह्निकान्ते 'अश्नोतेर्वा सरोऽक्षरम्' इति भाष्यकृतोक्तम्" इति वदन्ति, तन्न विचारसहम् । भाष्यप्रदीपयोः 'सरन्प्रत्यय' इति स्पष्टं नकारस्योपलम्भात् । प्रथमोत्तरदर्शिताद्युदात्ततया एव द्वितीयोत्तरेऽपि सारूप्योपपत्तयेऽवश्यमङ्गीकरणीयत्वाच्च, क्षयरहितत्वव्यापकत्वयोः समनियतत्वादर्थाभेदस्येव स्वराभेदस्याप्यङ्गीकरणीयत्वात् । भवन्मते प्रथमोत्तरे नञ्समासे नाद्युदात्तत्वम् द्वितीयोत्तरे मध्योदात्तत्वम् इति वैरूप्यस्यानपहरणीयत्वाच्च । क्वचिद्वेदे समुपलभ्यमाना मध्योदात्तता तु 'भ्रिस्यादिर्नित्यम्' इत्यत्र प्रायः पर्यायनित्यपदोपादानाद्युदात्ततया असार्वत्रिकत्वेन क्वचिदप्रवृत्तावौत्सर्गिकेण प्रत्ययाद्युदात्तत्वेन ऋ (१।८७।६) (५।५९।३) मन्त्रे 'श्रीयसे' इत्यत्र कसेनि प्रत्ययेपि मध्योदात्तैव निराबाधा इति दाधिमथाः ।

महामहोपाध्यायः श्रीशिवदत्तशर्मा

---

## पद्मावती-परिणयचम्पूः ।

[ श्रीमता महामहोपाध्यायरघुपतिशास्त्रिणा निर्मिता ]

क्षमापयेऽहं भगवन् परात्मानमुत प्रभो ।
किं मयोक्तेन देवेन प्रागेवादोऽस्ति जल्पितम् ॥३१॥

भूयो भूयः प्रसाद्य त्रिदशपतिपतिं
विप्र इष्टं जगाम ।
स्थानं पीताम्बरोऽपि प्रणयपटुरटन्
पद्मया पर्यरंसीत् ॥

कालेप्रालेयरश्मावुदयशिखरिणो
सूर्धनि द्योतमाने ।
मानेनाक्रुष्टचेता अपि तु परमिव
प्रागदेवीन्नदेवी ॥३२॥

तां चाप्रहृष्टां प्रकृष्टामपि विप्रकृष्टान्तरामुरसा वाह्यामप्यनुरसा वाह्यां सुप्रभामपि विप्रभाभूतां सुचरणामपि कुचरणाकाङ्क्षिणीं प्राणप्रियामवलोक्य विष्टरश्रवा विदग्धो वरिवस्यायां मायां तन्वन् समवोचत् । प्रियेऽयथापूर्वमाचरन्त्यन्यथैव दृश्यसे, तथापि सेवस एव चिरपरिचितामुपचर्याम् । यच्चक्षुःशफरिकाया उपमेयपदम विभ्रमत्तदिदानीं जलजस्य यद्दिनान्तराका शशाङ्कश्रियमपुष्यद्वदनं तन्निशान्तविधोः कण्ठः कुसुमाकरकुहूमनुकुर्वन्नचीचकासत् प्रावृट् कुहूम् । उरसा वहामि चेतसा चिन्तयामि वचसा वदामि त्वामेव, त्वमेव सर्वस्वमिति जानानाऽपि किंकलयस औदास्यं न सम्भावयामि स्वप्नेप्यणुमागसस्तत्प्रसीद मयि त्वदेकतानमानसे, मानसे तु बन्धनकेलयाऽलमिति ।

परमाऽसि रमाऽसि माऽसि नाम-
स्वखिलान्यर्थकृतानि तेत्तराणि ।
प्रणिमायतु मानवत्वमास्ये
प्रकटीभूरयिमाक्रमादमात्वम् ॥ ३३ ॥
इत्यनेकविधानर्थानाविष्कुर्वन्तमीश्वरम् ।
अपसृत्य दरं दूरादरालाक्षी जगाद सा ॥ ३४ ॥

देव केवलमसिस्वार्थपरायणो न मामनुमानयितुमर्हसि ।

क्षीराब्धिजाया अनुकूलता हि
स्वाभाविकीति त्वयि बिम्बितं यत् ।
त्यजन् सतीं मां द्रुयमादधीथाः
कीर्तिं पुरोजन्मपदाब्जलक्ष्मीम् ॥३५॥

ब्रह्माण्डान्युदरे चिरेण दधता सोढव्यतामापितः ।
पादाघातउद्वहितेयमपरा कीर्तिः पराऽन्वाचिता ॥
नामानीदमदोमदोरसिसदोदोर्व्याः कलानां हृदो ।
भुग्नोऽनेन न मानिनी मनुमुनेर्मानाप्यमानः कृतः ३६

तत्प्रार्थये पुनर्जन्मनि भगवतः पादौ संवाहयितुं तपसे तीर्थभ्योऽनुगन्तुं नातः परं पादप्रहारदूषिते सपत्नपददूषिते वक्षसि मम युक्तो निवास इत्यभिधाय प्रणिपत्य वहिर्गन्तुमियेष क्षीराब्धिरत्नललामलक्ष्मीः । सहसैव निर्यान्तीं तामालोक्यानपराधेन त्याज्योऽयं जनोऽयि भामिनि, स प्रेमा साऽकारणवत्सलता स दीनेषु पक्षपातः साऽनाथजनाऽपचितिशालिता स धर्मशास्त्रपरिशीलनप्रकारः सपातिव्रत्यपदाध्यासः सा मयाऽनुष्ठिता सुवरिवस्या सुवरप्रदानशैलीति सर्वमेवैकपदे कथं विशीर्णं, पश्य प्राणप्रिये प्रणयपरायणं प्रियमिति चैलाञ्चलमवलम्ब्योच्चैरवोचदच्युतः । एवमाक्रन्दत एव तस्य निरगाद्देवदेवी कमलनिलया ।

स्वगेहे विप्रपादस्य स्पर्शं सेहेऽनया कथम् ।
विप्राणामुपभोगार्थमालानं कल्पयेत सा ॥ ३७ ॥
निर्गतायां च तस्यां चिरात्त्रायाचिन्तयच्चिरन्तनो देवः
कलत्रं नाम तद्वस्तु वस्तुमीहेत वक्षसि ।
तथाऽऽचरविचारेण मनः स्वं यदि रक्षति ॥ ३८ ॥
वृथाऽस्ति संसारकथान्तरातां
व्याधारतीशातिपथाऽनुगाताम् ।
यातामभिद्वे ककुभौ विभातां
कायाब्धिकायादुतदूरभावः ॥ ३९ ॥
गतैव सा प्राणसमा ममालया-
द्यया विना शर्मलवोऽपि नाऽऽलयात् ।
मनःस्वभावेन परं निभालया-
त्सत्प्राप भद्रं किल यच्च चालयात् ४०

अस्मि तामनुगच्छेयं
न स्मितास्याम्बुजां यदि ।
अस्मिता अनुमन्येरन्
विस्मिताः प्रियतां बुधाः ॥ ४१ ॥

विमृश्यैवमुदासीनो मुदासीनो रमाप्रभुः ।
एषैवेति स आयासीद्वैकुण्ठादवनीतलम् ॥ ४२ ॥

## द्वितीयःस्तवकः

अथ योगबलाद्योगमबलायाबलानुजः ।
निश्चिकाय परं कायमधाद्रङ्कायतिप्रदम् ॥ १ ॥

कलङ्कायसदङ्कस्य पङ्काय दुरितार्णसः ।
कङ्कायमानं शङ्कायास्तीरे शंकायसाधनम् ॥ २ ॥

श्रुतिभिर्बहुधामतो निजधामतो जिगमिषुः पुराणपुरुषो रूपं परिणमयितुं परं यत्नमातिष्ठत्परं प्राचीं प्रकृतिं विकृतिं गमयितुं नालमभवत् । तथाहि । वाजीभवदपि पत्रमपत्रपे विनतानन्दनतां दूरयितुं, द्वित्वमुररीकुर्वद्भिरपि बाहुभिर्न जिह्मासितमभूच्चातुर्यमवनमालयाऽङ्कितयाऽपि वनमालयामालयाऽऽकाङ्क्षिण्या चिरं भूतमेकं करवासमकुर्वाणे अपि वारिजाते कण्ठं पाणिपादं मुखनयनमित्यनेकमाश्रयितुमुत्सेहाते निजं सार्थक्यमाचकाङ्क्षतुः कौमोदकीकौस्तुभौ ।

आनन्दवारिधेः सेतुमानन्दयदयात्प्रभुः ।
सपाणिप्राणितो नित्यं कथंनन्दकतां त्यजेत् ॥ ३ ॥

कैरातं वेषमास्थाय महीमवततार सः ।
अक्षि तस्मै न कैरातं विस्मयस्तिमितात्मभिः ॥ ४ ॥

पाणौ कृपाणं दधतं सबाणं
शाणं विषाणं कटिदेश एणम् ।
पीताम्बरं नीरदनीलकायं
वक्षालक्ष्मीं जनता ददर्श ॥ ५ ॥

किर्मीरितकरणकृतां सुकृतान्तर्भावभाविताँ जनताम्
प्रेम्णापादाब्जनतां कृतार्थयन्नीक्षणैरवततार ॥ ६ ॥

चित्तस्य मङ्गलं भावि न तया नतया विना ।
कामयांचक्र ईशोऽद्रिमिति तन्नाम शोभितम् ॥ ७ ॥

अथ निस्सीमानं परमानन्दं रमानङ्कितवक्षसा लघूकुर्वाणं सबहुमानं किराततां कामयमानं त्यक्तपरपुरुषताभिमानं समधिक्रमानं वाजिनमुच्चैःश्रवस्समानं समाक्रममाणं श्रुतिप्रमाणमपि चक्षुःपथगतं विभाव्य, विश्वक्सेनादयो देवाः सेवाविधिं चिकीर्षवस्तमेव वेषमास्थाय त्वरिततरमनुसस्रुः स्वामिनम् । अवनौ गतमपि वनीमन्वेषमाणमश्वाधिष्ठितमपि श्वावेष्टितं वृद्धतापसेशमपि मृगयुवेषं प्रभुं परिभ्रामयन्तस्ते विचेरुरुरुचेष्टितैः पृथिवीखण्डमण्डलेषु । पारावतकपोतानाक्रान्तुं विहाय समुड्डीनाः स्वकपोततां प्रकाशयांचक्रुः केचित् । पालिता अप्यनुमन्वते स्मापालितान्पत्ररथान् कृपाणचाञ्छता अपि प्रोञ्छतकृपारिरक्षिषन्त आत्मानमलक्षिता अथानुर्लक्ष्यं तरक्षून् न व्याघ्रा अपि जघ्नुर्व्याघ्रान् हरिपदानुगा अपि कालयामासुर्दरीषु हरीन् ।

कौलेयकैः कलयितुं केचित् कौक्षेयकैर्मृगान् ।
उत्सहन्ते स्म वैकुण्ठवासिनो लुब्धतां गताः ॥ ८ ॥

यतात्मानोऽपि वैकुण्ठ-वासिनो हिंस्रतां दधुः ।
तेषां किमद्भुतं ये हि स्वयमिच्छन्त्यधोगतिम् ॥ ९ ॥

देवोऽपि तादृशीः केलीः कुर्वन् श्रीशैलमन्ववर्तितुमीहते स्म ।

लीलाशैलूषस्य क्रियाः
कृती को नयेत्स्वतर्कपथम् ॥
यत्नादुत्पाद्य सुधां
विविधा[illegible] ॥ १० ॥

स केवलं भाति सुधाकरोऽसौ
सुधाकरोऽव्योम्नि सभूतलेऽयम् ।
नक्तंप्रभोऽसावनिशं विभातो-
ऽव्यतर्कि कोऽसाविति वीक्षमाणैः ॥११॥
अवतीर्णः सतीर्णः स्याद्यस्मिन् दृष्टे भवाम्बुधिः ।
अनायासेन शेषाद्रौ सगणः पुरुषोत्तमः ॥ १२ ॥

अथ कोलाननः पुराणपुरुषो दशशिशो व्याप्नुवानं यशो निजं समश्नुवानं निखिलं सानुमन्तं खिलीकुर्वाणमभूतपूर्वं कोलाहलं समाकर्ण्य कौतुकाकुलितचेताः पुरोवर्तिनं प्रधानं परिचारकं चन्द्रभासं नाम सानुचरं नियोगेनान्वगृह्णात्, वत्स,जानीहि कोऽयं मदधिष्ठिते ग्रावणि ग्रामणीरिवान्याय्यमाचरितुमीहत इति । इत्थमाज्ञप्तः प्रणम्य निर्यातो बहिः कानने स्वकाननेभ्यः किरातविद्रावितमृगराजिमरण्यानीमाशृणोत् । किञ्चित्क्षुब्धहृदयो दयोदन्वतस्तीरतोऽपसरन् । दिवाकरमिव कर्कमारुह्य दक्षिणां दिशमान्दोलयन्तं राकाशशिनमिव सकलकलं सानुचरमपि नागरिकं महापुरुषमवलोकयांबभूव । विनयावनतश्च व्यजिज्ञपत् । देव !

कृतिरन्याऽऽकृतिरन्या
जन्या जीवाभृतिर्वृतिर्वन्या ।
अन्यायकांदिशीका
दिगधन्याकाऽस्ति यां त्वमस्यार्ताः ॥१३॥
जनयांबभूव का त्वां
चतुरास्यं पद्मनाभनाभिरिव ।
निखिलाऽपि भारती
यत्तवाङ्गसङ्गाय मङ्गलं तनुते ॥ १४ ॥
धन्याः के ते वर्णा
यैस्ते नाम व्यधायि जनयित्रा ।
श्रुतिगतमेतत्कर्तुं
कौतूहलि मन्मनस्त्वरां तनुते ॥ १५ ॥
निखिलाङ्गसुन्दरोऽपि
प्रियोऽपि जनताद्दृशामवज्ञानात् ।
महतां न भव्यभाजन-
मेधेधास्तादृशां परो महिमा ॥ १६ ॥
इति तद्वचनं विज्ञः समाकर्ण्य जनार्दनः ।
कोऽसि को भवतो मत्तो महानिति मतो वद ॥१७॥

एवमखर्वगर्वगर्भसर्वसुपर्वमहत्वव्यपदेशिशर्वस्वत्वचर्वणचणमर्वचाञ्चलयतः प्रतिपर्वपर्वसु मुदितसमुदितसहस्रकरवाहान् परावुभूषन्तं तमतिमानिनं स प्रोवाच, किं कूपमण्डूक इव सागरं तं त्रिभुवनावनगृहीतदीक्षं भवादृशदर्पापध्वंसदत्तदीक्षं वेदसारवपुषं योऽत्रिवदनं महापुरुषं शिवविरिञ्चिप्रभृतिगीर्वाणसेवितपादकमलमविज्ञातं व्यपदिशन् न लज्जसे प्राप्स्यसेऽचिरमेवास्य कर्मणः फलमित्युच्चैर्भर्त्सयन् स्वामिनः समीपमभ्याजगाम ।

ववन्दे चास्य चरणौ हरणौ जगदापदाम् ।
उवाच च प्रभो वीरः कोऽपि दारयते वनम् ॥१८॥
नात्मनोऽन्यन्महद्भूतं जानानो हयपृष्ठगः ।
तमुत्पथगतं देव दण्डेनाशु प्रशाधि भोः ॥ १९ ॥
श्रुत्वा वचनमत्युग्रमादर्शितजगत्क्रियः ।
ईषदस्मेष्ट स श्रेष्ठः प्रेष्ठः सुमनसां प्रभुः ॥ २० ॥
अरे कथं न जानीषे वैकुण्ठाद्भुवमागतम् ।
रमाविश्लेषणक्लेशमपाकर्तुं मदंशकम् ॥ २१ ॥
उपागताय स्वं गेहं प्राकृतायाऽपि देहिने ।
दिशन्ति पण्डिताः पूजामेष साधारणो विधिः ॥२२॥

अतिथिर्नाम जगति गृहिणां संसारसागरे क्लिश्यतां परो नाविक इति श्रुतय उत्क्रोशन्ति । यः किल यदृच्छयाऽप्यागतस्य कुलशीलादिकमविज्ञा-

यैव स्वागतादिनाऽभिनन्दनमाचरति तेन प्रीणिताः स्युस्त्रयो लोका इति किलाभियुक्ता आमनन्ति तद्वत्स, गच्छ साधुस्थलदानादिना सान्त्वयैनमिति। सप्रेमपदं पुनः प्रेषयांबभूव चन्द्रभासम्। गते च तस्मिन्नचिरमेव कुलानुबन्धिनीं वकुलामाहूयावोचदच्युतः।

बकुले कुलेऽजनि समाविशुगो-
विमुखोऽस्तियोगृहगतातिथितः।
सतिथीं स्त्यजन्नतिथिरेष
पुनस्तिथिरेव वारवनितेव भवेत्॥२३॥

किञ्च नापि कर्तुमप्रभूणामकिञ्चनानां सुगमाश्चतस्रोविधा वरिवस्याया, अतिथीनामनुगृहीतोऽयंजनः स्वागतेन पावितः पादपद्मपरागेणेत्यादिका सूनृता वाक् चिरं चित्तपर्णपुटीकुटीभ्रू कुटीविलासेन निवासायानुमता भूयादितिभूः प्रकटसुकृतोऽयं कट इति तृणानि मधुरताधुरतापहानिप्रावीण्यभाञ्जि शीतलानीमानि वारीणीति जलानि साधुरेतावतैव तुष्टः पापानि प्रमार्ष्टुमलंभवतीति सर्वजनसाध्या भिरुपदाभिः सम्भृतोऽपि मानवः किमिति न स्वं कल्याणपथं नयतीति चिररात्राय विचारयन्ति संख्यावन्तः। त्वं पुनर्मदंशं सप्रेमोपदंशं श्रिता सती स्वामिनमिव सदाऽऽहारविहाराभ्यां नित्यमस्खलिता तथोपाचर यथा स नस्पृहयेत निजलोकायेति समाज्ञापयामास। सा च देवेन विनियुक्ताऽनुचन्द्रभासं तं प्रदेशमनुगन्तुमभिचक्रमे, यत्र स धीरो वीरः पुरुषो ग्रावणि हयमनर्तयत्। उभौ। सप्रणयम्।

कृतार्थय महीं प्रभो पदपरागरागेन भो
नभोगनिवहस्पृहाविषयभोगयोगाश्रयाम्।
नयाम्बुजनिलोचनक्रमकलाभिरूर्वीपदं
सदुन्तरुपढौकनाद्भवसि भूषणं भूभृतः॥२४॥

अर्वतोऽवतरतस्तवाङ्घ्रिणा
स्पृष्ट एष उपलोच्चयःपरम्।
पार्थिवीं त्यजतु नो कलां कुलं
योषितां किल कलङ्कयेद्धनम्॥२५॥

पातयित्वा पदं पङ्के पुनः प्रक्षालनात्पुरा।
वरं दूरं परित्यागो देव किं बहुनाऽधुना॥२६॥

आज्ञाप्तौ स्वो वराहेण देवदेवेन सेवितुम्।
श्रीमतः पादकमले वां विद्धि परिचारकौ॥२७॥

इतितद्वचनमनुप्रसन्नः सन्नवहितमनाः सह स्वकीयेन जनेन ताभ्यां निर्दिष्टे गिरिवरप्रदेशे सुखमध्युवास। एकदा चरमामनुस्मरंश्चरमामवस्थां प्रति प्रापयन्तमात्मानमनङ्गं सम्भावयन् प्रतीकपालनपटुप्रतीकारप्रकारविचित्सया तदगाधिष्ठातृदैवतं श्रीमन्तमादिवराहं देवाधिदेवं नमस्कर्तुं जिगमिषांचकार।

यः काश्यपीपरिक्लेशमच्छिणोत्क्षीरधौ शयः।
मन्मनोरथसम्पूर्तिं कथं कुर्यान्न स प्रभुः॥२८॥

इत्थं विचार्य गतवानेकाकी स व्यलोकयत्।
रम्यां पुष्करिणीमेकां केकान्तर्व्यञ्जितत्रयीम्॥२९॥

व्यतर्कयच्च वैकुण्ठाधिकवैभवशालिनी।
महापुरुषसंसर्गात्तथा हि मुदितं मनः॥३०॥

पुष्पपल्लवशालिन्यो वीरुधः समुपन्नताम्।
तरूणामङ्कतरलां नयन्त्यो नन्दयन्ति माम्॥३१॥

पादपा अपि सपादपादपा-
लम्बनातिशयदानदेवनाः।
सेवनाधिगतलोकशोकहां
दर्शयन्ति फलिनो निजां कृतिम्॥३२॥

अभिधया च यामुपसेवते स्वामी देवसेनाया अनेनायामनुश्रयन् जनो मनोऽनुकूलाः सम्पदः प्राप्नोतीत्यनुकूलं कलितललितवेषाणां योषाविशे-

षाणां केलाभिः स्फुटीभवन्नुपचारोऽन्तरेण चारोदोरितं निवेदयति । यत्र च वसुमतीमङ्के कुर्वन् सुरानुपकुर्वन् शैलममुमुपस्कुर्वन् वैकुण्ठं न्यक्कुर्वन् विहरति प्रभुस्त्रिभुवनस्य यच्चरणसरोरुहवरिवस्यायै शिवविधिप्रभृतयः प्रत्यहं प्रयत्नमातन्वाना विलोक्यन्तेऽत्रगिरिगुहागतैः प्राणिभिः । तदहमस्यां स्नातः प्रभुमुपस्थास्य इति तस्यास्तीरे स्नातुमवातरत् ।

स्नात्वा यावदुपस्थातुमाचकाङ्क्ष स माधवः ।
तावद्बकुलया देवो न्यवेदि प्रत्युपस्थितः ॥ ३३ ॥

स श्रीवराहः सरसीवगाह-
कृत्स्नाघदाहस्फुरपुण्यपुञ्जम् ।
गुञ्जद्द्विरेफाकुलवन्यमालं
मालम्बनं प्राह विकुण्ठपालम् ॥ ३४ ॥

पद्मे हि दामोदर देहि मह्यं
निजाङ्गसङ्गोत्थसुधाप्रमोदम् ।
मोदन्तमासादयितासि शीघ्रं
पद्मावतीं कामपि कामयित्रीम् ॥३५॥

इति प्रभुवचः शुभं श्रुतिगतं विधाय श्रियः
पतिः परमहर्षितः पदपयोजयोरानतः ।
उवाच वसुधाव्यथाऽपनयनोत्पथा धर्षणे ।
धृतादरः इतिश्रितो वरदभूगतेनामुना ॥ ३६ ॥

चतस्त्रोपि तथातिस्रस्तासु पन्थाः क्रियाऽऽविलः ।
कश्चिदंशोद्वयीं भिन्दन्नेकं ब्रह्म व्यनक्ति तत् ॥३७॥

सनकादिमहायोगिगम्यं स्यात्परमत्र भोः ।
भेदेऽनुभूयमाने का युक्तिः साधीयसी भवेत् ॥३८॥

इतिश्रो विरहक्लेशशेषदोषापनुत्तये ।
आक्षेपव्याजतो देवं विष्वक्सेनो व्यजिज्ञपत् ॥३९॥

हिरण्याक्षहन्ताऽपि तमभिप्रायमनुव्याजहार श्रीवत्सवक्षसमनया भक्त्या बकुलया च सहायभूतया लब्धपरमपुरुषार्थोऽचिरादेव मया सहात्र चिरं सुखं रंस्यसेऽपगतानि तानि व्यसनभाञ्जि दिनानि काले च स्मरिष्यसि मामनुकम्पयितुम् ।

खगेन्द्रवाहमुक्त्वैव कृपापीयूषवारिभृत् ।
सर्वंसहासहायोऽसौ तिरोऽभूत्तस्य पश्यतः ॥४०॥

श्रीवत्सवक्षसि विलक्षमनः प्रवृत्तौ
दृष्टावलक्षकृतलक्षणलक्षसाक्षी ।
भूभृद्विलक्षणविचक्षपरक्षणाङ्क-
मङ्के निधाय सकलानि मलान्यपाक्षीत् ॥४१॥

स एवंकृतसाक्षात्कारः प्राप्तसत्कारः प्रभोर्निकारं कृशयन् श्वःश्रेयसं वशयन् बकुलासहायः स्वमाश्रमपदं पुनः प्रत्याजगाम । सुखासीनश्च तां प्रत्यवादीत् । बकुले निरवधिसुकृतभाजनमसि साम्प्रतं यद्देवाधिदेवेन यज्ञवपुषा स्वयं सम्भावितः पावितः पदपयोजरजसा प्लावितः कृपाऽवलोकपीयूषवर्षैः सुधामधुरया वाचा सम्भाषितः सम्मानितो नितान्तं सान्त्वनैकां पद्मां पिप्रार्थयिषुः पद्मापद्मावतीसमागमसुखविश्राणनेन वर्षीयांसं भावयता भगवता को नामानुग्रहो न प्रदर्शितोऽन्तरेण चिराय निजपरिचर्यावसरं तत्र कोहेतुर्भवत्या लक्षितः स्याद्यद्भगवान् द्रागेवात्मामनयनपथमनैषीत् । नानैषीच्च मां निजं निकेतनम् । श्रुत्वा च स्मयविस्मयविहस्त सा प्रणम्यावादीत् । देव सर्वं जानन्नपि नियोगेनानुगृहीतुमिच्छसि चेदिमं जनं ततः श्रूयताम् । करुणारससागरोहि भगवान् भवन्तमस्मासु स्वमंशं व्यपदिशन्नूनमश्रीकं नेक्षितुमिच्छति ; ततोऽचिरादेव स्वसमर्महिमवलितं स्थापयिष्यति निजेऽध्यासने ।

विलोकयितुमिच्छन्ति नूनं नोनं निजं जनम् ।
महान्तोऽस्तं रविर्याति काले कमलमीलने ॥ ४२ ॥

एवं प्रजल्पतोर्देवं स्तुवतोःशुद्धभावयोः ।
कोऽपि कालः पिकालब्धलितहिमानिनोऽभ्यगात् ४३

## अथ चतुर्थस्तवकः

अथ मधुं माधवं च सेवमानो योगिनो वियोगिनश्च स्मरेण कदर्थयन् भामिनीः कामिनीः कारयन् विरहिवियोगज्वलनोष्मणा निदाघं विरहिणीसमाक्रोशजन्याश्रुधारादुर्दिनैर्वर्षं समशीतोष्णतया शरदं विकचकमलाकरकलितलालितवासरैर्हिमं नलदजलदपुटितपटमण्डपोच्छलत्सहस्रधाराभिः शिशिरं धारासमंसङ्गतान्मानयन् ऋतुराजतां तथ्यां ख्यापयन् विकसितरसालशालसुरभिः सुरभिः समाजगाम । यस्मिंश्च साम्राज्यमधितिष्ठति चित्राचरितचर्च्यमाणचिन्तनीयचित्रचारश्चन्द्रमाः सवितुरुच्चपदवीसङ्गत इवातितरां परमामपुष्यत्, नभस्वानपि मन्दमान्दोलयन् रसालमञ्जरीरुज्जृम्भयन् केतकसुमसुषमां विषमां कारयन् कथां कोकिलयूनां कलिकयन् कुन्दकुरवकाशोकान् कदम्बं किल कुलकदम्बमेव स्थापयन् कोकनदनशालिकोकनदं कल्पयन् कमलकैरवकल्हारकाननान्यनुकम्पयन् संसाधितनोपवनः पवनः स्वां जगत्प्राणतामाविर्भावयांबभूव । वितत्तां च तामाकलय्य सहायसम्पदं पदं विजये चकार कामिनीसेनापतिः पशुपतेरमित्रं कुसुमसायकः ।

असन्तमेव यं दीनो भावयन्मानवो भवेत् ।
तं वसन्तं वसन्तं वा सन्तं किमनुमानयेत् ॥ १ ॥

शिवं स्मरारातिमुदीरयन्ती
स्मरं शिवारातिमपि प्रवीणाः ।
जगज्जिघत्सन् प्रलये तथा स
प्रेयो वियोगेऽप्यपरोऽस्ति तादृक् ॥ २ ॥

धुन्वन् धनुः कुसुमसायक आजगाम
श्रीविप्रयोग[illegible]
चन्द्रेण षोडशकलेन समीरणेन
नृत्यप्रवर्तितलताविटपेन युक्तः ॥ ३ ॥

स श्रीपतिः स्मरहतिः स्मरतिस्म दीनो
मीनो जिजीविषुरिवाम्बुरमां स्वजायाम् ।
यामन्तरा सहजमप्यपहातुमैच्छ-
च्छर्मासुखं समुदयं वितनोति नूनम् ॥४॥

अथबलवत्सहायदुर्ललितस्य नयपथश्चलितस्य मनोजन्मनो व्यतिक्रमेण शुष्कधैर्यसागरोऽगरोरुविन्दुमिन्दुं दयानभस्वन्तं नभस्वन्तं कलयन् श्यामः श्यामशरीरोऽतिवेलं पर्यदेवीत् ।

स त्वं सुखायेति सतां प्रवादं
सत्यं न मन्ये यदसन् सुमेषुः ।
क्रुद्धः सपत्राकुरुते शरीरं
स्वीयां दशां प्रापयितुं मदीयम् ॥ ५ ॥

मां पद्मपाणिं बत पद्मनाभिं
पद्मालयाप्राणसखं वदन्तः ।
सन्तः किमुच्चैर्गदतातिवेलं
पद्मस्फुलिङ्गालिभिरेतदन्तः ॥ ६ ॥

अनन्तस्याप्यन्तो यदसदहितदिप्तविशिखै-
र्गुणानां मूर्द्धन्यं दधदपि वपुश्चेद्व्यसनभाक् ।
त्रिलोकीरक्षायै धृततनुरपि स्वावमकृते
परं त्रातारं चेन्मृगयत इदं विस्मयपदम् ॥ ७ ॥

उररीकृत्य यत्काम दग्ध्वा जयति शङ्करः ।
परं पुष काममते विगातुं कतमस्तमः ॥ ८ ॥

अथवा भुवमुद्धर्तुमागतेनेह विष्णुना ।
मानिन्या च श्रियाहीनं धाम मे नामशेषितम् ॥ ९ ॥

किं पाण्डुतां वहसि चन्द्रममेव वामा
कामातुरस्य तव दूरगताऽथवेदम् ।
विश्लेषिलोकवधपातकजातजात-
[illegible] ॥ १० ॥

किं चन्द्रमो गरलबान्धवमेचकान्त-
स्ताराभिसारकभवन्तमनङ्गशत्रुः ।
भालेऽवतंसयति दुर्ज्जनसत्क्रियाऽऽदौ
कार्येति नीतिचण इतिमदीदरद्राक् ॥११॥

अये हिरण्यगर्भतनयमुनिनयनजनेजनेसुधाकरोऽपि सूचीव्यधवेधशलाकाग्रेण सुधाकर इति ख्यातिमागानपुरःपीयूषंपूर्णपाणिपुटकतया शङ्करभालावतंससुरस्रोतस्विनीराजहंसद्विजराजतां ख्यापयन्नपि कथमसि लुब्धधर्माऽथवा काव्यहृदयप्रविष्टकचस्य विकला सञ्जीविनीव राहोरुदरं प्रविष्टस्य तवैषा क्रूरता भवन्तं स्वभावाच्यावयति चित्रं च मन्नयनं प्रकाशयदाह्लादयच्च जगन्ति मामन्धयति रन्धयति किं किल कवयः कलानिधिं सलिलमयं कलयन्तः स्वमतं समर्थयितुं कल्पन्तां प्रतिपर्व चिरपरिचितोष्णकिरणचण्डताभृतविश्वकरणः कल्पन्तामस्याजनयन् गभस्तिभिस्तेजांसि विकिरन् नोष्णरश्मेरणुरप्यूनतां विभावयति वह्निकणभक्षणचणाश्चकोराश्चन्द्रिकाचटुलचञ्चवश्चिराय साक्ष्यमत्रदातुं प्रभवन्तितमाम् ।

ईषदप्यूनता चन्द्रे नोष्णगोः परिदृश्यते ।
अयीतनुर्निष्कलङ्कः साङ्को दोषाकरोऽपरः ॥ १२ ॥

मनःस्वजनुषोऽनयादनुभवत्परां वेदनां
त्वमिच्छसि यदन्यतः सुखमदः पदं विस्मितेः ।
क स व्यसनवारिधिः क वद वोडुपञ्चक्रिया-
प्रधर्षितवनः क वा स पवनः क कष्टाचलः ॥१३॥

यदविषयः परमाणुर्लोका-
नामिति मतं सतां तदपि ।
तथ्यं न यच्छरव्यं मनः
प्रसूनायुधस्य विशिखानाम् ॥ १४ ॥

अयि शम्बराराते स्त्रिपुरहरनयनदग्धस्य रतिकरुणविलापवचनश्रवणविदग्धस्य क्रूरक्रियस्य तव कैषा प्रक्रिया । यज्जनकं जिगीषतां जयतां वा व्यसनमुत्पादयेः स्वस्य सत्सूनुता संभावनाया अस्मादृशां तदनुकूलं प्रवर्तमानानां दूरीकृताभिमानानां न्यक्कृताधिष्ठितविमानानामुज्झितसुकृतसन्मानानां किमिव क्लेशायितुं प्रवृत्तिः ।

वनेनिवसतां सतां निजशिलीमुखैर्यैः क्षतं
मनोऽनवयवत्त्वया यदि कृतं किमत्युज्वलम् ।
स्वयं हि मुनयो नयोपरिचराय तन्ते रतेः
पते तनुविमोचने वितनु तेषु भूयो दयाम् ॥ १५ ॥

वसन्तसन्तः ऋतुषु प्रशंसनं
कुर्वन्ति ते त्वं समयः सुमानाम् ।
त्वमुच्चताहेतुरनूरुसारथेः
कदर्थयन्मामथ किं न लज्जसे ॥ १६ ॥

वायोभवायोधनपार्श्ववर्ती
चन्द्रत्वचन्द्राग्निह दारयत्वम् ।
वसन्तभूयाः प्रधनप्रधानं
न मेऽस्ति काये बलवन्ममत्वम् ॥ १७ ॥

इत्थमुपलभ्य चिराय चेतोभवादीन् यदानालभत निर्वाणं तदा वनलक्ष्माः साम्प्रतमतिचित्रेति ब्रुवाणं कमपि युवानं प्रातिभाविकतायां परिकल्प्य विपिनविलोकनव्याजेन मनो निनन्दयिषुः समारुह्य सैन्धवं विहर्तुमुपचक्राम चक्रायुधः । रसालमपि रसालं विन्दन्नमलानि कमलानि कमलान्येव मानयन् स्वशोकमशोकं भावयन् परिनृत्यता तुरङ्गेण दूरमनीयत पीतवासाः ।

समध्येऽरण्यानिप्रशमितजनैनःपरिकरां
ददर्शैकां काञ्चित्कनकतटिनीं स्वर्णमुखरीम् ।

तरङ्गिण्यास्तस्याः परिसर उदञ्चत्कृतकलं
मनःक्षोभक्षोदप्रवणमसितदनग्रीवसम् ॥ १८ ॥

विलोक्य चित्तं चकमे चलार्चां
समर्चितुं चञ्चलतालतार्चाम् ।
मनोविनोदोहितदोहदेन
प्रकाशते भाविकभावुकार्थः ॥ १९ ॥

अथ किञ्चित्पुरःसरन्नभ्यर्णतरङ्गिणीतीरधीरसमीरसमीक्ष्यश्रमसलिलकलःकलकलमश्रौषीत् संलापिनां कलापिनां विप्रलपनानां प्रलापालापशालिनामवशालिनान्दीरवणानां नन्दितश्रवणानामुत्साहवितरणप्रवणानामग्रेवणानां च प्रस्रवणानाम् । जातस्पृहश्च दिक्षु निक्षिप्तचक्षुः सर्वतः सोऽर्वतोऽवततार । अबध्नाच्च तं तुरङ्गमुत्तुङ्गपलाशिस्कन्धशिफासु समम्रदाच्च तमाकारं निराकारस्य निरग्रथनाच्च तं परिकरं येन सपरिकर वृजिनं द्रागजिनं जायते चलितश्च पुरतः परितः स्फुरतः शस्पाशतस्येव कमनीयां कान्तिमवालोकयत् । निर्वर्ण्य च तदबुध्यत राजन्यकीयं कान्यकम् ।

अकस्माच्च कस्माच्चरन्निक्षुकाण्डं
परिस्फोटयंस्तापसीभिक्षुभाण्डम् ।
पलाशिव्रजं दारयन् दिक्षुदाण्डं
करी मस्करीवावृणोदक्ष्यकाण्डम् ॥२०॥

मत्तवारणसन्त्रासाद्धा हा कृत्वा प्रधाविताः ।
प्रभावितानवलिता वनिताः स ददर्श ताः ॥ २१ ॥

विद्यमाने मयि हरौ न मातङ्गाद्भियः स्त्रियः ।
भजध्वमित्युपामन्त्र्य स वारणमवारयत् ॥ २२ ॥

भीसभाजितदूरागे नागे वागेकगोचरे ।
द्रागेष द्रष्टुमाकाङ्क्षद्रागेणागेशजापतिम् ॥ २३ ॥

उत्कोऽचलेोत्कोचकरो मुरारि-
स्तच्छाम्भवं धाम समालसाद ।
यस्यावलोकस्पृहयैव मर्त्या
भवन्त्यमर्त्या इव साधुभावाः ॥ २४ ॥

अथोपरिपरिस्फुरन्तीभिः सेवासुखाय सङ्गतारनामनुरवायसङ्गतानां सुरसिद्धविद्याधरोरगयक्षरक्षः किन्नराणां विमानावलिभिः स्वर्णलानु शशिशकलकलाऽऽलोकानवरतस्यन्दप्रवर्तितनिर्झरभराक्रान्तचन्द्रकान्तपादैः पार्वतीप्रेमपरवशमिव हिमवन्तं वासयन्तं पताकाञ्चलचाचलिभिः खमम्बरतां प्रापयन्तं सततततज्योत्स्नमपि वहलधूपधूमसंधितान्धकारं भर्गभूषाभूतभोगिभोगेन नभोगमनमलभमानमपि पवमानं गारुडमणिकुट्टिमकुटिलगवाक्षप्रवेशनेन सदागमयन्तं लोकोत्तरस्वमहिमालोककौतुकाकुलितवृत्त्यैव शैथिल्यमाचरतो हरितां पत्युरर्वतोऽभिचालयितुमिवोद्घाटितोच्चध्वजानेकदण्डं प्रोत्तुङ्गशिखरनिहितकनककलशकन्यकाकुक्षिक्षपितमेघखण्डं गण्डशैलाधिरूढमृगेन्द्रदौवारिकं सौरभेयभुज्यमानवलिनीवारकं प्रमथपदनन्दनीयं वदनीयं महर्षिभिरर्हणीयं सुरमुनीनां वर्णनीयं विधिगवीनां सङ्गीकृतत्रिभुवनाद्भुततानिकायं त्रिपुरासुरारातेर्निकायमवलोकयांचकार । आसीच्च चेतनावतोऽस्य चेतसि ।

न मूलं महनीयानां महती परिबृंहति ।
मन्मन्दस्याप्येष ईशो यन्मयाद्धाऽनुभूयते ॥ २५ ॥

( क्रमशः )

## देहविक्रयः

[रचयिता—विलक्षणइत्युपाह्वो ज्वालारामनागरः]

जिह्मानन: कलितकालकरालमूर्ति-
वव्रे नराधिपतिमित्यसकौ तपस्वी।
कस्माद्विलम्बमधुना भजसे प्रदातः
सद्दक्षिणां वितर मे खलु याच्यमानाम् ॥१॥

अस्ताचलं त्वरितमेष्यति तप्तरश्मिः
सन्ध्योपचारसमयः समुपागतोऽयम्।
किं शोचसे रविकुलप्रणमानखण्डिन्
भ्रष्टः प्रणः खलु तवेति मयाऽद्य बुद्धः ॥२॥

सत्यप्रणः सततधीरतरः स भूपः
श्रुत्वेति गाधिजनुषं सनतिर्जगाद।
अर्द्धं गृहाण कृपया निजदक्षिणाया
भागं वशेषमधुनैव ददामि तुभ्यम् ॥ ३ ॥

प्रोद्दण्डरोषभरसम्भवजातवेद-
स्तीव्रस्फुलिङ्गचयसंज्वलदङ्गभीमः।
वाणिज्यकर्म्मकुशलो न वणिग् विराजे
वित्तं प्रयच्छ तरसा नृपमित्यवादीत् ॥ ४ ॥

व्यस्तो ध्वनिर्नभसि यावदयं च तावत्
धिग्धिग् वचः प्रवदतांस्त्रदशान्निशम्य।
रोषावतारपदवीं समितः स विश्वा-
मित्रः कृताञ्जलिजलस्तरसा शशाप ॥ ५ ॥

रेरेऽधमा नृपतिपक्षरता मदान्धा
अस्मत्समक्षमधुना पततान्तरिक्षात्।
कष्टं लभध्वमतुलं पृथिवीतले वो
वंशे भवन्तु जनयः किल बाहुजानाम् ॥ ६ ॥

तस्मादहो दिविषदो न्यपतन् नभस्तः
कोलाहलस्वरभरं हरितोऽनुनेदुः।
आलोक्य चित्रमिति तं नमति स्म चित्ते
मत्वा निजोपरि दयां नृपनिर्मदर्पः ॥ ७ ॥

बद्धाञ्जलिर्विनयपूरितसद्वचोभि-
र्नम्रानन: समवलक्षितलक्षणोऽसौ।
दास्या तयाऽभिमतया निजदारयाऽऽप्तं
द्रव्यं तदर्द्धमदद्दिष्ट मुनीश्वराय ॥ ८ ॥

संवीक्ष्य कौतुकमिदं नृपमानखण्डी
प्रोद्दण्डनैजभुजदण्डततिं विधाय।
सन्तर्जयन् तपनवंशविशालवृक्षं
चिक्षेप तद्धनमसौ चरणप्रहारैः ॥ ९ ॥

हाहा! विशङ्कितमना विकलामलाङ्गः
क्षोणीश्वरः समभिनम्य निराकरिष्णुम्।
कुर्वन् महच्छ्रममथो खलु पण्यवीथ्यां
क्रेतॄन् जनान् पुनरसौ त्वरया जिगेषे ॥१०॥

तस्मिन् विशोकमलिनीकृतसद्दिगन्ते
सायं प्रयाणसमये नगमुष्णरश्मेः।
एकः श्वपाकमहितो विदितश्मशाना-
धीशो धराधिपतिसन्निकटं सिषेध ॥ ११ ॥

व्यायामकर्मकठिनीकृतचारुदेहो
हेमाच्छभूषणविभूषितकण्ठबाहुः।
सद्गन्धवासितसमुज्ज्वलवस्त्रशोभी
ताम्बूललोहितमुखो व्यसनी विलासी ॥१२॥

नित्यप्रसन्नवदनो मदिराभिलीनो
रक्ताक्षितर्जितरिपुर्धनिनाम्प्रदीनः।
सिन्दूरदीर्घतिलकाङ्कितकृष्णभालो
रूपेण भीतिनिचयस्तु गुणेन शान्तः ॥ १३ ॥

तैलाभिमर्दितवलीभृदनल्पकेशी
नानानुयायिगणसेवितपादपद्मः!
भूमेरुवाच पतिमित्थमनल्पदिष्टं
क्रोणामि पञ्चशतकाञ्चनखण्डकैस्त्वाम् ॥१४॥

स्वीयेष्टसाधनविधानविधिं विलोक्याऽ-
सौ प्रासमीदनिकरस्तरसा तरस्वी।

किं नाम कुत्र वसतिर्भवतो भवान् को-
　　ऽप्राक्षीत् पुरस्सरगतं श्वपचं तदेति ॥१५॥
प्रत्याह तं मृदुगिरा स विनीतबुद्धिः
　　श्रीमन्नहं पितृवनाधिपतिः श्वपाकः ।
आवंशतश्च भयकूलकृताधिकारः
　　कुर्वं सदैव यजनं किल पुष्पमत्याः ॥ १६ ॥
येऽस्मिन् मृतं पितृवनस्थल आनयन्ति
　　प्रेताङ्गवस्त्रमुचितं च करं दिशन्ति
वह्नौ त एव मृतकं पुरुषं दहन्ति ।
　　यच्छन्ति ये नहि करं विधुरं वहन्ति ॥१७॥
दीपोत्सवाभिसहितामलकालरात्रौ
　　स्थानं श्मशानमभितः परिपूजयित्वा ।
दत्वा बलिं च विविधां किल कालिकायै
　　नृत्योत्सवं च विदधामि सबन्धुवर्गः ॥१८॥
सोऽहं भवन्तमधुना निगृहीतुमीहे
　　दत्वाऽथ पञ्चशतकाञ्चनखण्डमूल्यम् ।
दास्यं ममाधिकुरुषे यदि भूरिभाग्यं
　　यद्वर्त्तते मनसि ते वद सम्प्रधार्य्य ॥ १६ ॥
शोकाग्निदग्धहृदयः कृतविक्रमोऽसौ
　　नम्राननः सुविनिशम्य तदीयवाचम् ।
लेभेतरां त्रिभुवनेश्वरपादपद्म-
　　द्वन्द्वाभिसंस्मरणभूतरतिं प्रशस्ताम् ॥ २० ॥
हा हन्त हन्त विधिरत्र पदे पदे किं
　　वामो भवत्यनुदिनं विगता वराशाः ।
यत्नेन केन सकलर्णविमोचनं स्या-
　　त्स्वाङ्गीकरोमि यदि दास्यपदं समन्तात् ॥२१॥
एको मदीयहृदये त्वनिवार्य्यखेदो
　　लब्ध्वा जनिं विमलबाहुजवीरवंशे ।
यद्याचरामि सततं श्वपचादिकानां
　　कृत्यं तदा च्युतपदो नियतं प्रजामि ॥२२॥

एभिर्विचारनिकरैर्यदि बद्धचेता-
　　स्तूर्णं प्रयाति समयः खलु निष्फलोऽयम् ।
सूर्य्योऽपि गच्छति गिरं भविता किमेत-
　　त्सत्यप्रणाद्धि मम किं पदमभ्युपैति ॥२३॥
इत्थं विचार्य्य हृदि विह्वलतामयासो-
　　द्बद्धाञ्जलिर्निपतदक्षिजलप्रवाहः ।
तत्पादपङ्कजरजो विनिधाय भाले
　　भङ्गस्वरेण मुनिमाह स मेदिनीशः ॥ २४ ॥
भो दीनेश्वर पाहि मामनुवरं स्थानं परं दुष्कृतेः
हा हा सम्प्रति याम्यहं श्वपचतां भूत्वा निरालम्बकः ।
श्रीमन्तं विरहय्य कोऽपि भुवने नास्ते ममोद्धारकृत्
दास्येनाऽऽशु शरण्य मा शरणगं यत्काम्यसे तत्कुरु२६
इति श्रुत्वा जिह्मानकृतकृशानुस्फुटमहा-
रुषा गर्जत्कण्ठः सकलजनसंवेष्टिततरः ।
अयं विश्वामित्रः कुटिलहृदयः प्राज्यजटिलो
मुनिर्गां दुःशीलां नृपकुलपतिं प्रत्यचकथत् ॥२६॥
मिहिरकुलकृशानो धृष्टतां भूप मागाः
भवसि विगतयत्नः सेवको मामकीनः ।
अयमखिलमनुष्यैरीक्षितः स्पृष्टदृष्टया
मम सततमनुज्ञापालने सत्प्रणस्ते ॥ २७ ॥
एवं प्रागल्भ्यपूर्णं मुनिवरजनुषो-
　　ऽसौ समाकर्ण्य वाक्यम् ।
प्रोवाचैनङ्क्षमेशो वशिवर कृपया
　　मेऽपराधं क्षमस्व ॥
यत्खल्वाज्ञापयेस्त्वं सकलमिह मुदा
　　संविधातुं समर्थो
निश्शङ्कं स्याः समन्तान्नहि मम धिषणा
　　सत्यमार्गादपैति ॥ २८ ॥
सप्रोवाच क्षितीशं कठिनतरमना
　　[illegible]

कस्माद्धेतोर्विलम्बं नृपवर कुरुषे
दक्षिणासम्प्रदाने ॥
इच्छा चेत्तावकीना सुवितरणविधौ
तर्हि चाण्डालहस्ते ।
विक्रीय स्वीयदेहं द्रुततरमधुना
दक्षिणां मे ददस्व ॥ २९ ॥

आकर्ण्यं क्षितिपतिरेष वाचमेतां
पश्यन् ज्यां सलिलकणार्द्रलोचनाभ्याम् ।
दुर्धर्षक्षणिकविमौनमेत्य पश्चात्
तद्वास्यं नियतिवशाद्दुरोचकार ॥ ३० ॥

स्वीकृतस्वनियमश्वपचेशा-
त्प्राप्य पञ्चशतकाञ्चनमुद्राः ।
मोदमानहृदयं विदधानो
गाधिजाय मुनये ददेऽसौ ॥ ३१ ॥

अथर्षिमुक्तेन महामहस्विना
महीभृताऽयं जगदे मुनीश्वरः ।
भविष्यदुत्कृष्टनिरोधसिद्धये
मुने प्रयत्नः कृपया विधीयताम् ॥ ३२ ॥

निश्शङ्कं व्रज भूपते चिरतरं दुःखं त्वयाऽऽप्तं भृशं
दृष्ट्वा त्वच्चरितं सुखैकसदनं मोदायमानं वयम् ।
इत्युक्त्वा नयनाश्रुमोचनपरः क्षोणीं समालोकयन्
गत्या मञ्जुलया दिगन्तरमगात्प्रेमार्द्रसन्मानसः ३३॥

ततो यशोनिन्दितसत्कलानिधिः
कलानिधिप्रीतिपरोदयक्षणे ।
स पिष्टदुष्टो गमनं हि दक्षिणे
श्मशानघट्टे जघटे तदाज्ञया ॥ ३४ ॥

—

## महामहोपाध्यायः श्रीरघुनन्दनत्रिपाठी ।

अस्ति शाहाबादमन्डलान्तर्गतं, जगत्प्रसिद्धमैतिहासिकं वीराग्रगण्यस्वर्गीय श्रीकुमारसिंहवीर्यवैभवविभूषितं सकलगुणसम्पन्नं "जगदीशपुरं" नाम पुरम् । तस्यैव पुरस्य दक्षिणपार्श्वे समीप एव वर्त्तते "दिलीपपुर" नामको ग्रामः। तत्र चासीन्मुनिकल्पः सकलब्राह्मणगुणसम्पन्नो विद्वद्वर्यस्त्रिपाठ्युपनामकः श्रीराजीवरामशर्मा तस्यौरसः पुत्रः सकलकलाकलापकुशलो, निजकुलकुमुदकलाधरः सरयूपारीणब्राह्मणमण्डलीमण्डनो विद्यार्णवः "श्रीरघुनन्दनत्रिपाठी" विराजतेऽद्याप्यस्मिन्धरामण्डले ।

सच बाल्ये वयस्येव निजकुशाग्रबुद्धिवैभवसन्तोषितगुरुजनः सदाचारप्रमोदितवृद्धवृन्दः पूर्वजन्मोपार्जितशुभसंस्काराधिगतसकलविद्याविवेकः पूर्वसञ्चितवित्तमिव व्याकारणकाव्यकोशालङ्कारादिज्ञानमनायासं पितुरेव लेभे । पुनरप्ययंपूर्वं, श्रीभोजपुराधीश्वरमहामान्ययोगिवर्यविप्रराजेन्द्रदुर्गादत्तपरमहंसात्, टिकारीराज्यप्रतिष्ठितात् पट्शास्त्रतत्त्वज्ञात् श्रीविश्वेश्वरदत्त शर्मणश्च क्रमशो व्याकरण, न्याय, सांख्य, वेदान्तादिविषयानधीत्य योग्यतां सम्पाद्यानन्तरं काशीमधिवसन् राजकीयसंस्कृतमहाविद्यालये महामहोपाध्याय, सी. आई. ई., श्रीगङ्गाधरशास्त्रिणः साहित्यं, महामहोपाध्याय वैयाकरणकेशरि श्रीशिवकुमारशास्त्रिणो व्याकरणं, महामहोपाध्याय कैलासचन्द्र शिरोमणि भट्टाचार्यात् न्याय, सांख्य, योग, वेदान्तशास्त्राण्यधीत्य, तेषु विषयेषु दत्तपरीक्षः "साहित्याचार्य" "व्याकरणोपाध्याय" सांख्ययोगोपाध्यायानेकदुर्लभपदानि प्राप ।

अनन्तरं भोजपुरेशमहासभामेत्य, सभास्थितान् राजपण्डितान् बुद्धिचमत्कारेण प्रसाद्य, स्वकीयसकलशास्त्रज्ञानं प्रकटयन् महाराजश्रीमहेश्वरबक्ससिंहबहादुर विस्मापयन् सर्वोत्कृष्टविद्यापनमधिगम्य वृद्धविदुषामाशीर्वादभाजनं बभूव। तत्रैव च निजाशुकवित्वं दर्शयित्वा, परमसन्तुष्टात्तस्मादेवभूपात् साधारणजनदुर्लभं श्रीमद्वाल्मीकीय रामायणदानं पीताम्बरादिसहितं ससुवर्णं सदक्षिणं लेभे।

सच १८८८ तमे खीस्ताब्दे विहारोत्कलविद्यालयप्रधाननिरीक्षकेणाऽनुरोध्यमानः पूर्णियास्थितराजकीयाङ्गलविद्यालयस्य प्रधानसंस्कृताध्यापकपदं जग्राह। ततः क्रमशो दुमका मुँगेर,-आरा-छपरा-पाटलिपुत्र नगरसंस्थितासु राजकीयपाठशालासु छात्रानध्यापयन् बहुकालं यापयन् साम्प्रतं गयातीर्थस्य राजकीयपाठशालायां छात्रान् पाठयन् विराजते।

एवमेव स्वकीयसदाचारेण भारत-सम्राट्प्रतिनिधिवर्गाणां, लार्ड-कमिश्नर-कलेक्टरादीनां,प्रसादमधिगम्य १९१२ खीस्ताब्दे भारतसम्राजः पञ्चमजर्योजस्य जन्ममहोत्सवदिने, भारतशासनाधिपते लार्डात् "महामहोपाध्याय" पदवीमध्यगमत्। ततः १९१४ खीस्ताब्दे विहारपण्डितसभातो "विद्यासागर" स्य सर्वोत्कृष्टपदवीं प्राप्य, जगत्प्रसिद्धभारतधर्ममहामण्डलात् १९१५ खीस्ताब्दे "विद्यानिधि" नाम्नीं परमप्रतिष्ठितां पदवीमपि प्राप्तवान्।

अयं च महापुरुषः सर्वसमाजमान्योऽस्तीति सर्वैः स्वीकृतम्। सरयूपारीणा महासभा, शाकद्वीपीयमहासभादीनां सार्वजनिकसंस्थानां च सभापतित्वलाभ एवास्य प्रत्यक्षं प्रमाणम्। एवं च "विहारसंस्कृतसञ्जीवनसमाजस्य" सकलकार्याणि तस्य समाजस्य प्रधानसचिवो भूत्वा अत्युत्तमतया बहुकालतः सम्पादयति। "विहारोत्कल संस्कृतकौंसिल" नामिकायाः राजकीयप्रधानसंस्कृतपरीक्षापरिषदः प्रधानसभ्येषु परिगणितोऽस्ति राजकीयप्रधानकर्मचारिभिः। एवमेवायं "स्कूलएक्जामिनेशनबोर्ड, विहारसंस्कृत सञ्जीवनसमाज, विहारोत्कलकौंसिल, विहारपण्डितसभाः," कतिपयपरीक्षासमितिषु प्रतिवर्षभाविनीनां, व्याकरण, सांख्ययोग, वेदान्त, काव्यादि, प्रथममध्यमोत्तमसंस्कृतपरीक्षाणां परीक्षकश्च भवतीति सर्वैरभिज्ञातमेव। अनेन च छपरा-नगरे 'बालविद्या वर्द्धिनी सभा" संस्थापिता। मुंगेरनगरे च "सनातनधर्मसभा" सम्बर्द्धिता।

अयं च वेदविहितसकलकर्मानुष्ठानकर्त्ता, भारतीयानेकपवित्रतीर्थाटनपरायणः, पक्षपातशून्यः, सज्जनाग्रगण्यः, सुगुणिजनावलम्बदाता, स्मितपूर्वाभिभाषी, सत्यवक्ता, दृढ़व्रतः, सदाचारसम्पन्नश्चास्तीति न कैश्चिदप्यननुभूतम्। अस्य च परमपवित्रचरित्रं समुद्योगशीलैः स्वोन्नतिं चिकीर्षुभिः पुरुषैः सदैवानुकरणीयम्। अहञ्च प्रतिक्षणमेवास्य गुरुवरस्य चरणकमलयुगलं ध्यायन् भक्तिनम्रः सादरं नमस्करोमीतिशिवम्।

अक्षयवटमिश्रः
पटना-कालेज-संस्कृत-शिक्षकः

## पत्रपुस्तकपरिचयः

### आर्यप्रभा

इयं संस्कृतपत्रिका "बेडोबेलतोरा (मानभूम) इत्यतः प्रकाश्यते। अयमस्याअष्टमो वर्षः। प्रतिभा, (आख्यायिका) अवमार्.तदरिद्रः (पद्यम्) वैद्यसम्मेलनसभापतेरभिभाषणम्, साङ्ख्यसूत्रवृत्तिः" इत्येते लेखा वर्तन्ते संख्यायामस्याम्। इयमार्यप्रभा वशयति मानसम्। अस्या मूल्यं सपादैकरूपकम्।

### मङ्गलोदयंजनतायाःपुस्तके

नाभिनवः परिचयोऽपेक्ष्यते शारदावाचकानां कृते मङ्गलोदयं जनतायाः। अनया जनतया प्रकाशितानि बहूनि सुन्दराणि पुस्तकानि परिचायितानि यदा तदा मया। अद्य, पी.एम. अनन्तनारायणशास्त्रिणा निर्मितं पुस्तकद्वयं परिचाय्यते। प्रथमं पुस्तकं

### संस्कृतोपक्रमपाठः

इदं पुस्तकं बालानामुपकाराय निर्मितं प्रकाशितञ्च। आङ्ग्लपाठ्यपुस्तकोपमानेन पुस्तकमिदं विनिबद्धम्। प्रथमं सरलानि वाक्यानि ततश्च क्रमेण कठिनानि, इतीत्थं पुस्तके पाठाः सन्निवेशिताः। बालानामुपकाराय पुस्तकमिदं निर्मितं शास्त्रिमहोदयेनेति नूनं स धन्यवादार्हः। अत्रोपदेशप्रदाः कथाः सरलतमैर्गद्यैः पद्यैश्च वर्णिताः। मूल्यमाणकत्रयम्। द्वितीयं पुस्तकं

### वाक्यतत्त्वम्

द्वितीयं संस्करणमिदं पुस्तकस्यास्य। इदं पुस्तकं प्रियं जनानामिति पुस्तकस्यास्य द्वितीयसंस्करणमेव बोधयति। अधीत्यापि बहून् व्याकरणग्रन्थान् बहवश्छात्राः अनभिज्ञा एव भवन्ति पदार्थतत्वानामिति नैतदविदितं केषामपि, साम्प्रतमेतत्पुस्तकसाहाय्यात् सर्वोऽपि सुखेन वाक्यतत्त्वानि विज्ञातुं पारयेयुः। बहुषु ग्रन्थेषु प्रसृतानां व्याकरणतत्वानामेकत्र द्रष्टुमीहा चेद्यदि तदा नूनं पुस्तकमिदमवलोकनीयम। मूल्यम् षडाणकाः। मङ्गलोदयं कं. त्रिचूर इत्यतः पुस्तके समुपलभ्येते।

### तत्त्वज्ञानतरङ्गिणी

सनातनजैनग्रन्थमालायाश्चतुर्दशं पुस्तकम्। भट्टारकश्रीज्ञानभूषणविरचितेयं तत्त्वज्ञानतरङ्गिणी न्यायतीर्थश्रीगजाधरलालकृतहिन्दीभाषानुवादसमेता प्रकाशिता ग्रन्थमालायामस्याम्। अध्यात्मज्ञानं वर्णितं पुस्तकेऽत्र, अष्टादशाध्याया वर्तन्ते तत्र प्रथमेऽध्याये शुद्ध चित्स्वरूपं वर्णितं ततः स कथमधिगन्तव्य इति तदधिगमोपाया वर्णिताः अत्र पद्यैरेव वर्णनीयो विषयो वर्णितो वर्तते। महामन्त्री भारतीयजैन सिद्धान्त प्रकाशिनी संस्था नं० ६ विश्वकोषलेन कलकत्ता इत्यतो लभ्यते पुस्तकमिदम्।

### अथर्ववेदालोचन

कविरत्न अखिलानन्दशर्मणा निर्मितं प्रकाशितञ्च। मूल्यमेकारूपिका। प्राप्तिस्थानम्, श्रीपण्डित सुबोधचन्द्र शर्मा, चन्द्रनगर, पो०रजपुरा, (बदाऊं)

अत्राथर्ववेदतः कानिचित् सूक्तानि संगृहीतानि। तेषामर्थोऽपि हिन्दीभाषया कृतः एतत्पुस्तकानुवाचनेनावश्यं हृदयमध्यमध्यारोहत्ययं विषयो यद्वेदेऽपि बहवः पौराणिका विषया ननु वर्णिता एव। येषां विषयाणां सत्तां नाङ्गीकुर्वन्ति नवीना आर्यास्त एव विषया अथर्ववेदमन्त्रैरत्र प्रदर्शिता। नूनमत्रवर्णितो विषयो विदुषां मनोविनोदकरो भवतीति।

रामजीलालशर्मणः प्रबन्धेन प्रयागस्थ "हिन्दी प्रेसे" मुद्रिता,
चन्द्रशेखरेण च दारागञ्ज—प्रयागतः प्रकाशिता।

## वाराणसेय-प्रथमपरीक्षार्थिनः सूच्यन्ते

संक्षिप्तवाल्मीकीयरामायणप्रथमाध्याय-भारतीयशीलनिरूपणाध्याययोः संकलितांशः। सरलाख्यया संस्कृतव्याख्यया विमलाभिधया हिन्दीटीकया च समन्वितः।

सरलहृदयानां बालानां मेघदूतसदृशेन काव्येन जायमानां हानिं निर्धार्य, पुस्तकमिदं प्रणीतमभवत्। अत्र हि धार्मिका नैतिकाश्चोपदेशा व्यासवाल्मीकिभ्यां वर्णिता नूनं मानवानां हृदयं शोधयितुं अलम्भूष्णुः। बाल्ये हृदि प्रतिष्ठिता उपदेशाः प्रकृतिगता भवन्ति, ते च महति वैपरीत्येऽपि न वैपरीत्यं यान्ति। पुस्तकमिदमभीप्सद्भिरधोनिर्दिष्टस्थाने निवेदनीयम्। मूल्यं दशाणकाः। प्रेषणव्ययः पृथक्।

वामदेवशर्मा, दारागंज—प्रयाग।

---

## विद्योदयः

स्वर्गीयश्रीहृषीकेशशास्त्रिप्रतिष्ठितः अधुना तदीयसुयोग्यसूनुभ्याम् अध्यापकश्रीभवविभूति-विद्याभूषण एम० ए० श्रीभवभूतिविद्यारत्नाभ्यां सम्पादितः।

### "विद्योदयो"

हि भारते प्राचीनतमं संस्कृतमासिकपत्रम् अर्द्धशताब्दीं यावत् परमदक्षतया परिचाल्यते प्रबन्धगौरवेणालौकिकरचनाविभवेन चायं प्राच्यप्रतीच्यवैपश्चितां मनांसि मोदयन् संस्कृतसाहित्यक्षेत्रे स्वद्वितीयबहुमानं लभते। अयि भोः संस्कृतसाहित्यसेवकाः! त्वरन्तामस्य भवन्तो ग्राहका भवितुम्।

### विशेषद्रष्टव्यम्

विद्योदयस्य वार्षिकमूल्यं छात्राणामसमर्थानाञ्च पक्षे ह्यैकरौप्यम्, तदन्येषान्तु रौप्यद्वयम्, मूल्यप्राप्तिमन्तरेण न कस्यचिद् विद्योदयः प्रेष्यते।

**श्रीविद्योदयकार्याध्यक्षः**

भाटपाड़ा, २४ परगना, बैङ्गल

## हिन्दी-महाभारत

अठारहों पर्वों की सरल कथा

### ४३० पृष्ठों का भारी पोथा

मूल्य केवल ।।।) बारह आने डाकखर्च ३ आने

हमने जो हिन्दी-महाभारत पुस्तक प्रकाशित की है उसकी हज़ारों कापियाँ बहुत जल्द हाथों हाथ बिक रही हैं। प्रथम संस्करण की छपी पुस्तकों में से अब थोड़ी सी रह गई हैं। जिन ग्राहकों ने अभी तक हमारा सस्ता महाभारत नहीं लिया है वे जल्दी मँगा लें। नहीं मालूम, इसका दूसरा संस्करण कब हो, और फिर बहुत दिन तक इसकी बाट देखनी पड़े। क्योंकि अब काग़ज़ इतना मँहगा हो गया है कि ऐसी भारी पोथी का छापना हँसी खेल नहीं। क्या आश्चर्य यदि काग़ज़ की महँगी ऐसी ही रही तो 'हिन्दी-महाभारत' का भी मूल्य बढ़ जाय। जल्द मँगाइए।

विना गुरु के संस्कृत सिखानेवाली प्रसिद्ध पुस्तक

### संस्कृत-प्रबोध

द्वितीय संस्करण पृष्ठ ३००, मूल्य ।।।)

लीजिए, इस पुस्तक को मँगाकर अब आप झटपट संस्कृत भाषा का इतना ज्ञान अवश्य कर लीजिए जिससे आप व्यावहारिक बातें धड़ाधड़ संस्कृत में करने लगें, हितोपदेश, पञ्चतन्त्र, वाल्मीकीय रामायण और रघुवंश के श्लोकों का अर्थ लगाने लगें। गुरु की ज़रूरत नहीं, अपने आपही, इस पुस्तक में बताई सरल रीति से आप संस्कृत के पण्डित बन सकते हैं। कौमुदी, अष्टाध्यायी में वर्षों सिर खपाने से यह अच्छा है कि इस पुस्तक से आसानी के साथ संस्कृत-व्याकरण का मर्म समझ लें। जल्दी मँगाइए। इतनी बड़ी पुस्तक का मूल्य बहुत ही सस्ता है।

ऊपर की सब पुस्तकों के मिलने का पता—

**मैनेजर, हिन्दी प्रेस, प्रयाग।**

# शारदाग्रन्थमाला

विदितमेवैतत् शारदाप्रणयिनां यत् साम्प्रतं विज्ञानबहुलेऽपि काले भारतीयेषु विशेषतः संस्कृतज्ञेषु न विलोक्यते विज्ञानाभिरुचिः। केचन विज्ञानानुशीलनाय समुत्का अपि ग्रन्थाभावान् नात्मनो मनोरथं सफलयितुं शक्नुवन्ति। संस्कृतग्रन्थप्रकाशका हि तेषामेव ग्रन्थानां प्रकाशनं साधु मन्यन्ते, येषां सुखेन विक्रयो भवेत्, यत्प्रकाशनेन च भवेद् धनागमः। अतएव संस्कृते साम्प्रतमभिनवा ग्रन्था न प्रकाश्यन्ते। अतएव च दिनादिनं भवति ह्रासः संस्कृतविद्यायाः।

समयानुकूलमेव शिक्षणं फलति। परिष्कृतिनिपुणा दक्षिणादिभिः सत्क्रियन्ते स्मेत्यभवत् प्रचारः संस्कृतज्ञेषु परिस्कारस्य, साम्प्रतं नावशेषास्ते दक्षिणादातारो यजमानाः। साम्प्रतिकी शिक्षा आत्मनो लक्ष्यमभियाति। साम्प्रतं विज्ञानशिक्षैव बहुमता जगति। विज्ञानप्रचारार्थं बहुप्रयतन्ते पाश्चात्या विद्वांसः तेषां संसर्गात् भारतेऽपि विज्ञानशिक्षणं श्रेयसे मन्यते।

शारदानिकेतनतः काऽपि "शारदाग्रन्थमाला" अचिरादेव प्रकाशयिष्यते। अत्र वैज्ञानिका एव ग्रंथाः मुद्रापयिष्यन्ते। प्रतिवर्षं चत्वारो ग्रंथाः प्रकाशयिष्यन्ते। ये शारदाग्रन्थमालाग्रन्थान् गृहीतुमिच्छन्ति, तैरावेदनीयोऽव्यवस्थापकः। मुद्रिते प्रथमे पुस्तके, तत् वी० पी० पर्यायेण प्रेषयिष्यते। त्वर्यतां संस्कृतज्ञैर्विद्वद्भिः, ग्राहकत्वमङ्गीकर्तव्यञ्च शारदाग्रन्थमालायाः। ये हि शारदाग्रन्थमालायाः पूर्वतो ग्राहकाः भविष्यन्ति, तेभ्योऽर्द्धेनैव मूल्येन शारदाग्रन्थाः प्रदीयेरन्।

निवेदनस्थानम्

शारदाग्रन्थमालायाः व्यवस्थापकः।

दारागंज, प्रयाग।

---

## संस्कृत-शिक्षा

संस्कृत सीखने की सर्वोत्तम पुस्तक। इसके द्वारा कारक का पूरा पूरा ज्ञान हो जाता है। इसके पढ़ लेने से संस्कृत के छोटे छोटे वाक्यों का बनाना और समझना सहज हो जाता है। पुस्तक के अन्त में शब्द-सूची दी गई है, जिससे बहुत से शब्द और उनके अर्थ मालूम हो जाते हैं। जो लोग संस्कृत सीखना चाहते हैं उनके बड़े काम की पुस्तक है। मूल्य केवल ≠) आने का टिकट भेजिए।

मिलने का पता—

शारदा निकेतन।

दारागंज, प्रयाग।

"SHARDA" REG. No. A. 631

तृतीयो वर्षः ] जेष्ठ, संवत् १९९३ [ तृतीया संख्या




सम्पादकः श्रीचन्द्रशेखरः

मूल्यं रूप्यकत्रयम् ३) ] [ एतत्संख्याया मूल्यं पञ्चानकाः ।-)

## लेख-सूची



---

## नियमाः

१—शारदा प्रतिमासं प्रकाश्यते ।

२—प्रत्ना अभिनवाश्च विषया अत्र सम्यगालोच्यन्ते । वैज्ञानिकाः शिल्पकलेतिहासदर्शनसाहित्यविषयकाः प्रत्नग्रन्थतत्त्वालोचनात्मकाश्च सुरुचिरा निबन्धाः प्रकाश्यन्ते । प्रथितमहिम्नां विदुषां लेखैरियं विभूषिता भवति ।

३—भारते ब्रह्मदेशे सिंहले च, अस्या वार्षिकमग्रिमं मूल्यं ३) रूप्यकत्रयम् । तदितरेषु देशेषु च ( 8 shillings )

४—यस्यां संख्यायां यस्य लेखः प्रकाशितो भवेत् सा संख्या तस्मै विना मूल्यं प्रदीयेत ।

५—आत्मनः पत्रोत्तरमिच्छद्भिः प्रेषणव्ययः प्रेषणीयः । अदत्तशुल्कं पत्रं नैव गृहीतं भवति पत्रिकायामस्यां विज्ञापनं दातुमिच्छद्भिरावेदनीयो व्यवस्थापकः ।

६—आदर्शसंख्यां जिघृक्षुभिः पञ्चाणकलभ्यं शुल्कपत्रमवश्यं प्रेषणीयम् ।




मासिकी संस्कृतपत्रिका

तृतीये वर्षे | विद्ययाऽमृतमश्नुते | तृतीया संख्या

## सम्पादकाभिप्रायाः

श्रद्धावान् जनः प्रवर्तते । इदं सत्, एतेन पथा गच्छन् जनः समभिनन्द्यते लोकैः । निखिलो जनः साम्प्रतमस्मिन्नेव मार्गे प्रवृत्तो दृश्यते । मार्गस्यास्य प्राशस्त्यं सर्वोऽपि जनः सशिरःकम्पं स्वीकरोति, एवमादिभिर्विज्ञानैर्जनस्य हृदये श्रद्धा पदं करोति, श्रद्धया च प्रेरितो जनोऽनुष्ठेयमनुतिष्ठति, हेयञ्च परिजहाति । अत एव च दृश्यते कदाचित् कस्मिन्नपि विषये सम्मूर्च्छन्ती जनानां श्रद्धा, अत एव च दृश्यते कदाचित् पूर्वं परया श्रद्धया गृहीते विषये पतन्ती न्यक्कारपरम्परा जनानाम् । तस्मात् प्रेक्षावन्तः श्रेयस्करे विषये जनानां प्रवृद्धा श्रद्धा यथा न हीयेत, तदर्थं प्रयत्नमातिष्ठन्ते ।

पुरा सुरभारत्याः परमः प्रचार आसीद् भारते, निखिलोऽपिजनो दिव्यमातरमिमां सेवन्तेस्म । अत्र च कारणं जनानां श्रद्धैव । अस्यां सुरभारत्यां श्रद्धावन्तोजना एतदभिज्ञानपि मानयन्तिस्म दानमानादिना च सन्तोषयन्तिस्म । अतश्चासीत् परमः प्रचारः सुरभारत्या एतस्याः । साम्प्रतं सा श्रद्धा दिनाद्दिनं ह्रसन्ती विलयमुपगन्तुं प्रवृत्तेव दृश्यते । हन्त, विपन्मयः समयोऽयमस्याः कृते, एतत्सेवकानाञ्च कृते । नूनं समयमिममपाकर्तुं प्रबलतरः समुद्योगः समारब्धव्य एतत्सेवकैः । अन्यथा सर्वतः समयप्रभावे विजृम्भमाणे को नु खलु तमपाकर्तुं शक्नुयात् ।

निर्वृत्ते संस्कृतसाहित्यसम्मेलनस्य महोत्सवावसरे गृहीतः कोऽपि मनोरम उपक्षेपः। स ननु संस्कृतशिक्षाप्रणालीसंशोधनविषयकः। एतदुपक्षेपानुसारेण कार्यं समारब्धं न वेति न निश्चित्य वक्तुं शक्नोमि। तथाप्युपक्षेपस्यास्य सारवत्ताञ्च सामयिकताञ्च स्वीकरोमि। 'यदि नाद्ययावदुपक्षेपममुं कार्ये परिणमयितुं कोऽपि प्रयत्नः समाश्रितः प्रतिनिधिमण्डलेन, तदा तेन त्वरितं प्रयत्नाविधेय इति प्रार्थये ऽहं। प्रतिनिधिमण्डलेन सूचिताः सादरं विद्वांसोयत् संस्कृतशिक्षा विषयकमात्मनोऽभिप्रायं लिखित्वा प्रेरणीयं संस्कृतसाहित्यसम्मेलनकार्यालय इति। नूनमयं सुगमः पन्थाः कार्यस्य। परमनुभवो बोधयति यदेतेन पथा नसिद्धिरासादयितुं शक्येति। गतवर्षे शारदामुखेन कतिवारं न प्रार्थिताः श्रीमन्तः संस्कृतैकजीविताः पण्डितमहाभागा मया, पत्रान्तरमुखेन च सम्मेलनमन्त्रिणा कतिवारं न सानुरोधं प्रार्थिता अभवँस्तएव महाभागाः। परं न किमपि फलं दृष्टिपथमुपागतं जनस्यास्य। श्रीमतः प्रियवयस्यस्य सम्मेलनमन्त्रिमहोदयस्यापि सैव गतिरिति तर्कये। अतश्च साम्प्रत सुगमोऽपि मनोरमोप्ययं पन्था परित्याज्य एवास्माभिः।

*

यदा निखिलानामेव संस्कृतज्ञानां हृदये "संस्कर्तव्या संस्कृतशिक्षाप्रणाली" इति विषयः पदं निदध्याच्चेत् तदा त्वरितमेवास्याः संस्कारः कर्तुं शक्येत। परं नाद्यापि संस्कृतशिक्षाप्रणालीपरिवर्तनमभिमतमेतेषाम्। शिक्षाप्रणाली शुद्धा निर्दोषा चेति मतममीषाम्, कलिकालकृतएव संस्कृतज्ञानां दुरवस्था समापन्ना। कलिकालापनोदनं हि दुःशकमेव। अतश्च सत्ययुगोपयुक्ता शिक्षाप्रणाली साम्प्रतं दूरतः प्रणम्या। परिग्राह्या च कलिकालोपयुक्ता शिक्षा। कदाचित् कथाप्रसङ्ग एकेन मित्रेण पण्डितेनेत्थमेवाहं प्रबोधितः समभवम्। अनश्चैवंविधे विषये कथमात्मनः समयस्य कलामपि विनियोक्तुं प्रभवेयुर्विवेकिनःपण्डितमहाभागाः। तस्मात् परित्याज्योऽयं पन्थाइति मन्ये।

एकोस्योपायस्य क्षीणे उपायान्तरमाश्रयन्ति प्रेक्षावन्तः अतश्च मन्ये—अस्मिन् वर्षे कापि प्रतिनिधिसमितिः प्रतिष्ठापनीया, या हि निखिलेऽपि भारते प्रसिद्धान् पण्डितान् साक्षात् कृत्य, तेषामत्राभिप्रायञ्च विज्ञाय विवरणं स्वाभिप्रायसहितं प्रकाशयेत् समाचारपत्रेषु। पुनः सम्पादकानामपरेषाञ्चाभिप्रायैः सहितं तद्विवरणं संस्कृतसाहित्यसम्मेलनावसरे मन्त्रिणा समुपस्थापनीयम्। ततश्च संस्कृतसाहित्यसम्मेलननिर्णयः सर्वैरेवाध्यापकैः स्वीकृतो भविष्यति। इयं जनस्यास्य प्रार्थना, अत्र सम्मेलनमन्त्रिणा दीयमानमवधानं प्रार्थये।

ननु सन्ति बहवः पण्डिताः परं तेषु सामयिकज्ञानाभावात् न समुन्मेषस्तेषां भवति। किञ्च एकः पण्डितोऽपरं पण्डितं विनिन्दन् दृष्टः अतश्च योहि परं निन्दति सोऽपि ननु निन्दित एवेति मत्वा जनास्तं तिरस्कुर्वन्ति। हन्त किमयं शोभावहः पण्डितानां कृत आचारः। ते हि विद्यावन्तो विद्या किल हृदयस्यौन्नत्यं प्रसूते। न हि समुन्नतात्मानः परं निन्दन्ति। पण्डिता ननु विद्यार्थिनामादर्शा भवन्ति। पंडितनामाचरितं तैःप्रमाणीक्रियते स्वीक्रियते च सदाचारात्मना। इत्थं पण्डितानां हृद्गतो द्वेषांकुरः परितः प्रसर्पन् समूलघातं हन्तुमुपक्रान्तः पण्डितान्। अयं दोषो यावच्छक्यं दूरं परिहरणीयः। यदि नाम पण्डितानां कृतेऽस्याश-

क्यपरिहारः स्यात्तदा विद्यार्थिभिस्तु दोषोऽयं कथञ्चनापि न स्वीकर्तव्यः ।

संहतिः किल कार्यसाधिका भवति । सा साम्प्रतं भारतीयेषु विशेषतः संस्कृतज्ञेषु नास्ति । अतश्च न भवति सिद्धिः संस्कृतज्ञानां कस्मिन्नपि विषये । सा कुतो नाऽर्ज्यते । कुतो न पारस्परिकः स्नेहसम्बन्धः स्थाप्यते, कुतो नात्मीया शक्तिः प्रकाश्यते । महत्या शक्त्या प्रतिकूलोऽपि समयो नन्वनुकूलीकर्तुं शक्यः । "आत्मैवात्मनोबन्धुरात्मैवरिपुरात्मन" इति भगवत उपदेशान्नराः सादरं हृदये स्वागतीकरणीया, दोषाहेयाः, प्रयत्नेन विजानाद्भिर्बुधैरपि । मूर्खमिव पण्डितमपि दोषा दूषयन्त्येव ।

जगतो नियन्त्री प्रकृतिः । योहि प्रकृतिमनुरुध्य करोति स जयी भवति, यः कोऽपि ज्ञानादज्ञानाद्वा मात्रयापि प्रकृतिमतिक्रामति नूनं स विपन्नो भवति योहि निखिलान् प्राकृतिकान् नियमान् विजानाति सोऽपि ननु न सिद्धिमासादयति । प्राकृतिकनियमानामनुष्ठानं हि सिद्धिनिदानम् । बुद्धिमता विविच्य प्राकृतिकान् नियमान् कर्मानुष्ठेयमन्यथा निश्चितं नाशस्तस्य । कोऽपि वदति किं करोमि नास्ति समयोनुकूल इति । एवं वादिनोऽलसा अधमाश्चेति मन्तव्यम् । यतोऽतिमहती शक्तिर्मानवे, शक्त्या सर्वं कर्तुं शक्नोतिसः ।

---

## श्रीराजचूडामणिदीक्षितः

आसीद्विश्वविश्रुतवैदुष्यो दक्षिणदेशाभिजनः षड्दर्शनोपारद्रश्वा षड्भाषासार्वभौमः साग्निविद्विश्वजिदतिरात्रयाजी कर्ता भावनापुरुषोत्तमाद्यष्टादशरूपकाणाम्, निर्माता शतकंधरविजयादिषष्ठिकाव्यानाम्, प्रणेता साहित्यसंजीवनाद्यलंकारग्रन्थानाम्, आधाता वेदान्तरत्नावलीवादतारावलीमध्वविध्वंसनबौद्धविध्वंसनमणिदर्पणाद्वैतकौस्तुभविधिनिर्णयसर्वसमयसर्वस्वस्मृतिरत्नप्रदीपषष्ठभङ्गव्याख्यानादीनाम्, परिशुद्धितत्त्वावबोधाद्यनेकशास्त्रकरणविचक्षणः वापीकूपतटाकाग्रहारप्रतिष्ठापकः, भवस्वामिभाष्यकर्तुर्भवस्वामिसोमयाजिनः षष्ठः, अनवरतान्नदायिनः प्रतिदिनप्रबन्धपरमेश्वरस्य कृष्णसोमपीथिनः पञ्चमः अद्वैतचिन्तामणिकर्तुः कुमारभवस्वामिसोमयाजिनो नप्ता, सोमयाजिनः कृष्णभट्टस्य पौत्रः, वैकुण्ठघण्टामणेः परमभागवतस्य भवस्वामिभट्टस्य लक्ष्म्याश्च पुत्रः, विश्वामित्रवंशमुक्तामणिः, केशवपरिव्राजकार्यचरणारविन्दपरिचरणलब्धविद्याधिपत्यः, तत्तादृशसकलविद्याचमत्कृतवादव्याख्यानोपन्यासकौशलेन चोलभूवल्लभेनास्थानीविरचितपत्रावलम्बः, मत्तदन्तावलन्यस्तदिवाप्रदीपचिह्नः, प्रतिभटावर्जनविजयतोषितराजन्यपारितोषिकलब्धचरणकटकट्टाचामरादिबिरुदः, तुण्डीरमण्डलान्तर्वर्तिशूरसमुद्राभिधानाग्रहारवास्तव्यः, सत्यमङ्गलरत्नखेटश्रीनिवासाध्वरीति सुगृहीताभिधानः, शतावधानीत्यपराभिधानो भट्टाचार्यः पण्डितोत्तमः । यमधिकृत्येदं प्रशंसापद्यमद्यापि श्रूयते—

'विपश्चितामपश्चिमे विवादकेलिनिश्चले
सपत्नजित्ययत्नमेव रत्नखेटदीक्षिते ।
बृहस्पतिः क जल्पति प्रसर्पति क सर्परा-
डसन्मुखश्च षड्मुखश्चतुर्मुखश्च दुर्मुखः ॥'

इति ।

'संचारिणी दीपशिखेव रात्रौ
यं यं व्यतीयाय पतिंवरा सा।
नरेन्द्रमार्गाट्ट इव प्रपेदे
विवर्णभावं स स भूमिपालः॥'
( रघु. ६. ६७. )

इति वर्णनात्कालिदासस्य यथा दीपशिखा-कालिदास इति,

'उदयति विततोर्ध्वरश्मिरज्जा-
वहिमकरे हिमधाम्नि याति चास्तम्।
वहति गिरिरयं विलम्बिघण्टा-
द्वयपरिवाहितवारणेन्द्रलीलाम्॥'
( शिशु. ४. २०. )

इत्यहिमकरहिमकरयोर्घण्टाद्वयत्वेन वर्णनान्माघस्य यथा घण्टामाघ इति,

'उत्फुल्लस्थलनलिनीवनादमुष्मा-
दुद्भूतः सरसिजसंभवः परागः।
वात्याभिर्वियति विवर्तितः समन्ता-
दाधत्ते कनकमयातपत्रलक्ष्मीम्॥'
( किरात. ५. ३९. )

इति परागस्य विवर्तितस्य कनकमयातपत्रत्ववर्णनाच्छत्रभारविरिति यथा भारवेः,

'दधिमथनविलोलल्लोलदृग्वेणिदम्भा-
दयमदयमनङ्गो विश्वविश्वैकजेता।
भवपरिभवकोपत्यक्तबाणः कृपाण-
श्रममिव दिवसादौ व्यक्तशक्तिर्व्यनक्ति॥'
(बालभारते, आदिपर्वणि ११. ६.)

इति वेण्याः कृपाणत्वेन वर्णनादमरस्य यथा च वेणीकृपाणोऽमर इति महती लोके प्रसिद्धिः, तथा

'अन्योन्यसमरलीलालालसपूर्वापराद्रिशूराभ्याम्।
धृतरत्नखेटशङ्कां तन्वाते सुमुखि पुष्पवद्भिरवैौ॥
( भावनपुरुषोत्तमनाटके ४ अङ्के )

इति दिवाकरनिशाकरबिम्बयो रत्नखेटत्ववर्णनादस्य रत्नखेटश्रीनिवासाध्वरीति प्रथीयसी प्रथेति श्रूयते।

राजचूडामणिदीक्षितनिर्वर्तितस्य रुक्मिणीपरिणयकाव्यस्य व्याख्यानारम्भे व्याख्याता बालयज्ञवेदेश्वर एवमभिधत्ते —

'संध्यासंधुक्षिताम्भोधरनलि-
कगणादुद्गतान्सीसखण्डां-
स्ताराकारान्निरोद्धुं
शशिरविकपटाद्बिभ्रतौ रत्नखेटौ।
अयोन्यं युध्यमानावुदयचरम
भूभृत्प्रवीराविति द्रा-
गुक्त्या ख्यातापराख्यः क्षितिपतिवचसा
रत्नखेटाध्वरीति॥' इति।

अस्य रत्नखेटाध्वरी रत्नखेटश्रीनिवासाध्वरीत्युभयथापि भूयान्व्यवहारः संदृश्यते ग्रन्थेषु अस्य पूर्वैरनेनापि बाल्ये वयसि वर्तमानेनाध्युषितोऽग्रहारस्तुण्डीरेषु चेञ्जीपुरात्पश्चिमतः क्रोशत्रयमात्रासन्नः सत्यमङ्गलाभिधः। विद्वज्जनमूर्धन्येनानेन पश्चात्स्वावासतया परिगृहीतोऽग्रहारः शूरसमुद्राभिधानः। श्रीमन्मणिनागपुरवराधीश्वरेण कर्णाटसिंहासनप्रतिष्ठापकाचार्येण पोतनायकस्य वेङ्कलाम्बायाश्च पुत्रेण दिवाकरभैरवनायकयोरग्रजेन शूरप्पनायकेन प्रयत्नपूर्वकं निर्माय विप्रसात्कृतेषु वेङ्कलापुरपोतसमुद्रशूरसमुद्राभिधेष्वग्रहारेष्वन्तिमश्च। अस्यैव शूरप्पनायकस्याशयमनुरुन्धानो रत्नखेटदीक्षितो भावनपुरुषोत्तमं नाटक-

मकार्षीत् । नाटकस्यावसाने पद्यमिदं दृश्यते तथा—
'सर्वधारिसमे मीनमासे राकातिथाविदम् ।
उत्तर्क्षे रविदिने समाप्तं नाटकं परम् ॥' इति ।

अनेन प्रबन्धनिष्पत्तिकालः (१५८८ तमः क्रिस्ताब्दः) सर्वधारिसंवत्सर इति वक्तुं न दुःशकम् । परं तु पद्यमिदं ग्रन्थकारस्याहो स्वित्लेखकस्येति न विजानीमः । रत्नखेटदीक्षितस्य त्रयः पुत्रा उदभूवन् । तेषु ज्येष्ठः केशवदीक्षितः । स्वगुरौ केशवयोगिवर्ये परमया भक्त्या तन्नामानममुं चकार पिता । तथा चोक्तम्—

'यः श्रीकेशवयोगिवर्यचरणाद्यं पूर्णपात्रात्मना
मन्त्रं सिद्धमवाप्य दिव्यमथ तत्सिद्ध्यै तपस्यन्पुनः ।
नित्याध्युषितदेवतां जगदिदं कर्तुं च हर्तुं क्षमां
सिद्धिं प्राप्य निजान्वये निजसुताग्रीयेषु तस्याभिधाम्

इति रुक्मिणीपरिणयव्याख्याने ज्येष्ठः केशवदीक्षितस्तदितरयोरर्धनारीश्वरराजचूडामणिदीक्षितयोः कामाक्षीगर्भसंभवयोः सोदरयोर्वैमात्रेयो भ्राता । तयोः पार्थक्येनेश्वरदीक्षितचूडामणिदीक्षिताविस्यपि प्रचलति व्यपदेशः प्रबन्धेषु, राजचूडामणि दीक्षितस्य यज्ञनारायण इति पित्रा दत्तं सांस्कारिकं नामधेयम् । उक्तं च—

'पित्रा श्रीयज्ञनारायण इति गदितोऽप्यद्भुतैः स्वैश्चरित्रैः, प्रख्यातिं राजचूडामणिरिति महतीमाप भूपप्रवेकात् ।'

(इति रुक्मिणीपरिणयव्याख्यानारम्भे ।)

राजचूडामणिदीक्षितस्य शैशव एव वयसि पिता दैवादपाह्रियत धात्रीतलात् । माता च तमनुजगाम । अर्धनारीश्वरदीक्षितः कनीयांसं सोदरं सर्वाण्डमपि शास्त्राणि ग्राहयामास । उपनयनात्प्रागेव राजचूडामणिना समुच्चीर्णः सर्वोऽपि काव्यमार्गः । प्रक्रान्तं च काव्यानि कर्तुं रसयितुं च । स्वप्रणीतान्प्रबन्धान्स्वयमेव परिगणयति राजचूडामणिदीक्षितः काव्यदर्पणस्यावसाने । अनेन संदृब्धाः प्रबन्धाः—१. यजुःशाखाव्याख्या, २. दशोपनिषद्व्याख्याः, ३. शास्त्रदीपिकाव्याख्या कर्पूरवर्तिका, ४. द्वादशलक्षणीव्याख्या तन्त्रशिखामणिः, ५. संकर्षमुक्तावलिः, ६ नित्याग्निहोत्रादेर्निष्कृतिरूपिका प्रायश्चित्तप्रदीपिका, ७. रुचिदत्तवृत्तिन्यायचूडामणिः, ८ पार्थसारथिमिश्रप्रणीतस्य चिन्तामणेर्व्याख्यानं चिन्तामणिदर्पणम्, ९. शृङ्गारसर्वस्वनामा भाणः, १०. भोजचम्पूपूरको युद्धकाण्डः, ११. भारतचम्पूः, १२. वृत्ततारावलिः, १३. रत्नखेटश्रीनिवासदीक्षितस्य चरितं रत्नखेटविजयम्, १४. मञ्जुभाषिणी नाम रामकथा, १५. मञ्जुलैः श्लिष्टत्र्यर्थपदैः पद्यैः संदृब्धा रामकृष्णधर्मभुवां कथात्रयी, १६. शंकरार्यतारावली, १७. शंकराभ्युदयम्, १८. कंसवधम्, १९. रुक्मिणीपरिणयम्, २०. कमलिनीकलहंसनाटिका, २१. आनन्दराघवनाटकम्, २२. अलंकारचूडामणिः, २३. चित्रमञ्जरी, २४. काव्यदर्पण इति ।

रघुनाथभूपविजयकान्तिमतीपरिणयसाहित्यसाम्राज्याभिधानि त्रीण्यपि काव्यानि राजचूडामणिदीक्षितप्रणीतानीति व्याहरति रुक्मिणीपरिणयव्याख्यानस्यारम्भे बालयज्ञवेदेश्वरः । काव्यदर्पणकरणात्परं काव्यानीमानि चूडामणिना कृतानि स्युः ।

गोविन्ददीक्षितनन्दनेन यज्ञनारायणदीक्षितेनार्चितं रघुनाथभूपविजयं नाम समस्ति काव्यमेकम् । तच्च नाम्ना निर्दिष्टं राजचूडामणिनैव स्वकृतानन्दराघवनाटकप्रस्तावनायाम् । यथा—

सूत्रधारः--मारिष, तथापि फलितमस्मदभिलषितेन, यतः किल

यज्ञनारायणाध्वरिणा रघुनाथभूपविजयनाम्नि महाकाव्ये तावदेवमभिहितम्--

प्राचां प्रबन्धान्रसयन्तु भव्या-
नस्मद्वचोऽप्यादद्तां रसज्ञाः
आस्वादयन्तो मधुराणि वस्तू-
न्यम्लं न किं जम्भलमाद्रियन्ते ॥ इति।

गोविन्ददीक्षितनन्दनयज्ञनारायणदीक्षितनिर्वर्तितरघुनाथविलासनाटकस्य प्रस्तावनायाश्च तत्कृतस्य रघुनाथभूपविजयकाव्यस्य सत्ता सम्यगवबुध्यते। तत्र प्रस्तावनायाम्-

'नटी–तत्रभवता रघुनाथभूभृता शिक्षित इत्यनेनैव तावदस्यापि कवयिता यज्ञनारायणयायजूक इति जानामि। यो वा रघुनाथभूपविजयसाहित्यरत्नाकरयोः काव्ययोः कर्ता, स एव खलु साहित्यरत्नाकरनाम्नि तत्कृतां शिक्षां बहुमतिं चैवमुपश्लोकितवान्' इति।

विद्यते रघुनाथभूपस्य जायास्वन्यतमया रामभद्राम्बानाम्न्या कयाचिद्विदुष्या विरचितं द्वादशसर्गपरिमितमितरदपि रघुनाथाभ्युदयं नाम काव्यम्।

साहित्यसाम्राज्यं नाम काव्यं गोविन्ददीक्षितद्वितीयनन्दनेन वेङ्कटेश्वरदीक्षितेन प्रणीतमाह राजचूडामणिदीक्षित एव तन्त्रशिखामणौ–

'अस्ति गोविन्दयज्वेन्दुनागमाम्बातपःफलम्।
श्रीवेङ्कटेश्वरमखी सर्वतन्त्रस्वतन्त्रधीः॥
येनेष्टं साग्निचित्याप्तवाजपेयादिभिर्मखैः।
कृतं साहित्यसाम्राज्यनामकाव्यमनुत्तमम्॥
व्यतानि शुल्बमीमांसा तथा कर्मान्तवार्त्तिकम्।
टुप्टीकायाः कृता टीका वार्त्तिकाभरणाभिधा॥
प्रतिष्ठापितचोलक्ष्माजानेस्तस्य नियोगतः।
चूडामणिर्वितनुते यज्वा तन्त्रशिखामणिम्॥
गोविन्ददीक्षितचिरंतनभाग्यराशेः
श्रीवेङ्कटेश्वरमखीशितुराज्ञया मे।
तन्त्रार्णवं तरितुमाहितसाहसस्य
सांयात्रिकीभवतु तत्करुणाकटाक्षः॥
श्रीवेङ्कटेश्वरमखिप्रणीतं प्रविविक्षुभिः।
वार्त्तिकाभरणाम्भोधिं नौरियं क्रियतां कृतिः॥
धीमन्मान्ये (१५५६) शकस्याब्दे हायने चेश्वराभिधे।
चूडामणिः कलयते यज्वा तन्त्रशिखामणिम्॥'

इति श्रीमदद्वैतविद्याचार्यसर्वतन्त्रस्वतन्त्रसाग्निचित्याप्तवाजपेययाजिश्रीवेङ्कटेश्वरदीक्षितनियोगानुभवसमुन्मिषितमनीषाविशेषस्य विश्वजिद्याजिनः श्रीराजचूडामणिदीक्षितस्य कृतिषु तन्त्रशिखामणौ नवमस्याध्यायस्य चतुर्थः पादः। समाप्तश्चाध्यायः।

'धीमन्मान्ये (१५५६) शकस्याब्दे हायने चेश्वराभिधे, श्रावणे मासि नवमः पूर्णस्तन्त्रशिखामणौ॥ इति च।

नायकवंशीयस्तञ्जपुराधीशो रघुनाथभूपः१६१४ तमे क्रिस्ताब्दे पित्रा दत्तं राज्यं प्रत्यपद्यत। कति हायनान्राज्यमकरोदित्यपरिस्फुटम्। तस्य राज्यसमये कविरयं प्राबध्नात्कमलिनीकलहंसनाटिकामानन्दराघवनाटकं चेति प्रबन्धद्वयम्। आनन्दराघवनाटके गोविन्ददीक्षितस्य प्रथमतनूजस्तत्कर्तृकं रघुनाथभूपविजयकाव्यं च सबहुमानं कविना निर्दिश्येते। तन्त्रशिखामणौ गोविन्द-

दीक्षितस्य द्वितीयनन्दनो वार्त्तिकाभरणादिग्रन्थानां प्रणेता तदीयाः प्रबन्धाश्च प्रशस्यन्ते । अतस्तन्त्रशिखामणिनिर्वहणकाले रघुनाथभूपस्य यज्ञनारायणदीक्षितस्य चासद्भाव ऊह्यते । तन्त्रशिखामणिनिष्पत्तिकालः १६३६ तमः क्रिस्ताब्द इति निर्विवादम् । अतः कवेरस्य जीवनकालो बहुशः सप्तदशशताब्द्याः पूर्वार्ध इति वक्तुं पार्यते । अत्र कृते विमर्शे चेत्क्वचिदपि स्खलनमार्याः संशोध्य समीकुर्युरिति सविनयमभ्यर्थये ॥

टि. एस, कुप्पुस्वामिशास्त्री

---

## शैवभेदाः

तथाच पड्विडि, वृष्टि, लम्बन, मुक्तागुच्छ, पञ्चवर्णनामभिः प्रथितैः कल्पवृक्षनीकाशैः समस्तवेदागमरहस्यप्रतिपादनपरैः पञ्चमहासूत्रैर्विस्तारयामासुरापस्तम्बादि महर्षय इव स्वसिद्धान्तं । एतन्महासूत्रमेकैकमेते शिवाचार्याः क्रमेण रचयामासुः । पड्विडिमहासूत्रस्याभिप्रायमेव बुद्ध्या द्वादशशिवाचार्या द्वादशसूत्राणि चक्रुः एतद्रीत्यैव प्रत्येकमहासूत्रस्याभिप्रायमनुसृत्य द्वादशद्वादशसूत्राणि व्यरच्यन्त शिवाचार्यैः । सर्वाण्येतानि मिलित्वा षष्ठिसूत्राणि सन्ति, एतेषामुपसूत्राणीतिसंज्ञा वर्तते । येपड्विडिमहासूत्रमनुसृत्य लिखितानि सूत्राणि मानयन्ति ते तदधिपतिं रेवणाराध्यं गुरुमिति मन्यन्ते, ये वृष्टिमहासूत्रोद्भूतानि सूत्राणि मानयन्ति ते तदधिपं मरुलाराध्यं गुरुमिति जानन्ति, ये लम्बनमहासूत्रोद्भूतानि सूत्राणि मानयन्ति ते एकोरामराध्यं गुरुमिति बोधन्ति, ये मुक्तागुच्छमहासूत्रोद्भूतानि सूत्राणि मानयन्ति ते पण्डिताराध्यं गुरुमिति मन्यन्ते, ये पञ्चवर्णमहासूत्रोद्भूतानि सूत्राणि मानयन्ति ते विश्वाराध्यं गुरुमिति मन्यन्ते । इत्थमेवैतेषां दर्शने सूत्रविचारः । एते वीरशैवा इतरेषामिवर्षिगोत्राणि न कथयन्ति किन्तु दैवगोत्राणि कथयन्ति तान्यपिवीर, नन्दि, भृङ्गि, वृषभ, स्कन्दभेदात् पञ्चधा भवन्ति । येषां रेवणसिद्धाराध्यो गुरुस्ते वीरगोत्रं कथयन्ति । येषां मरुलाराध्यो गुरुस्ते नन्दिगोत्रं ब्रुवन्ति, येषामेकोरामाराध्यो गुरुस्ते भृङ्गिगोत्रं कथयन्ति, येषां पण्डिताराध्यो गुरुस्ते वृषभगोत्रं सङ्गिरन्ति, येषां विश्वाराध्यो गुरुस्ते स्कन्दगोत्रमिति कथयन्ति पञ्चगोत्राणामेषां पञ्चाचार्या एव क्रमेणाधिनाथा भवन्ति । इयमेवैतन्मते गोत्ररीतिः । एतच्छास्त्रकारैर्वीरशैवाश्चतुर्धा कृताः सामान्यवीरशैवशुद्धवीरशैव, विशेषवीरशैव, निराभारिवीरशैवभेदात् । पार्वतीपतिपञ्चमुखसमुद्भूतैर्जगन्मान्यैः पञ्चाचार्यैः शास्त्रोक्तविधिपुरस्सरं दीक्षां लब्ध्वा गुरौ लिङ्गे च भक्तिं दधन् पूजाध्यानदानादिसेवाभिर्यो गुरुं प्रीणयति स सामान्यवीरशैवो भवति । उक्तं तल्लक्षणं वीरशैवादर्शे—

सद्योजातमुखादि पञ्चमुखसम्भूतैः शिवालम्बनै-
र्विख्यातैर्गुरुभिः पवित्रहृदयैः सम्पाद्य दीक्षां वराम्॥
स्वस्याचार्यमनः प्रमोदयति यो दानादिसेवाकुलैः ।
सामान्यः स हि वीरशैव इति मन्यन्ते सदा कोविदाः॥

इति

परब्रह्ममुखोद्भूतैर्लोकप्रसिद्धैः पञ्चाचार्यैः शैवीं दीक्षां सम्पाद्य तदाज्ञां मूर्ध्नि कृत्वा लिङ्गपूजापरो भूत्वा च यो दण्डखण्डनादिकार्येष्वयुक्तो भवति तं शुद्धवीरशैवमिति निगदन्ति निगमागमनिपुणाः । तल्लक्षणश्लोकं वीरशैवादर्शे—

पञ्चाचार्यैर्भुवनविततैः शैवदीक्षां हि लब्ध्वा
तेषामाज्ञां शिरसि सततं भक्तिभावैर्विधृत्य।
लुप्ताचारे मनुजनिकरे दण्डशिक्षादिकर्म
कर्ता लोके गुरुपरमना लिङ्गपूजासु लीनः॥
इष्टं लिङ्गं परमशुभदं प्राणमित्येव बुद्ध्वा
लिङ्गत्यागे मलिनवपुषस्त्यागमङ्गीकरोति।
मन्त्रञ्चैवं हरगुरुचरान्निन्दतो भ्रंश्यते यः
स स्यात् पूज्यो विमलहृदयो वीरशैवो विशुद्धः॥

इति

यः पञ्चाचार्यैः शैवदीक्षां सङ्गृह्य तद्ध्यान-दत्तचित्तो महावैराग्यशाली सन् लौकिकाचारान् विसृज्य सम्प्राप्तदुःखादुःखावनुभूय च सोऽहं ब्रह्मेति जानाति स विशेषवीरशैवो भवति। तल्लक्षणमुक्तं वीरशैवादर्शे-

पञ्चाचार्यैर्गुरुभिरतुलैः शैवदीक्षां पवित्रां
लब्ध्वा नित्यं मनसि भजते मोक्षदानद्गुरूंस्तान्
वैराग्येणाकलितहृदयः सोऽहमित्येव जानन्
सम्प्राप्तं यः सहति स शिवो वीरशैवो विशेषः॥

इति

यो भुवनप्रसिद्धैः पंचाचार्यैर्दीक्षां लब्ध्वा सदा तद्ध्याननिरतो भूत्वा च विपिने वसन्परशिवोऽहमेवेति जानंश्च शिक्षादीक्षादण्डनखण्डनादिकर्माणि विसृज्य भिक्षामुखेन यः सद्वर्तनमाचरति-स निराभारिवीरशैवो भवति। तदुक्तं वीरशैवादर्शे

पंचाचार्यपदाम्बुजानि सततं
संश्रित्य शैवीं शुभाम्
दीक्षां तैर्गुरुभिर्गुरूत्तमवरैः
संगृहय मुक्तिप्रदाम्।
तद्ध्यानं सरलेन शुद्धमनसा
कुर्वंश्च पूजापरो
ग्रामं लोकयुतं विसृज्य विपिने
घोरे वसन्नित्यशः॥
दूरीकृत्य मलत्रयं परशिवे
चित्तं सदा सन्दधन्
जानन् षट्स्थलदर्शनं वर ब्रह्मेति
सोऽहं वदन्।
शिक्षादंडनखंडनादिविषया-
ण्युत्सृज्य भिक्षापरो
यः स्यात्तं खलुवीरशैवमिति-
मन्यन्ते निराभारिणम् ॥इति।

एते वीरशैवाश्चतुर्विधाः शैवागमप्रसिद्धेष्वष्टावरणेषु भक्तिं दधति। तान्येव गुरुलिङ्गजङ्गमपादोदकप्रसादविभूतिरुद्राक्षमन्त्रभेदाल्लोके प्रसिद्धानि। वीरशैवा गुरुलिङ्गजंगमानर्चयन्ति,तथा तत्पादोदकप्रसादान् स्वीकुर्वन्ति, सदाशिवपञ्चाक्षरीं जपन्ति च। एष एवाष्टावरणविचार एतन्मते। अपि च लिङ्गाचारसदाचारशिवाचारभृत्याचारगणाचारभेदात्प्रथितान् पञ्चाचारानाचरन्ति। एतेषां दर्शने स्थलं (ब्रह्म) इतिप्रतिपाद्यते तत् लिङ्गस्थलमङ्गस्थलं चेति द्विधा भिद्यते, लिङ्गस्थलं (शिवः) अङ्गस्थलं (जीवः) एतयोः समरस एवमुक्तिरिति मन्यन्ते मनीषिणः। तल्लिङ्गस्थलं, इष्टलिङ्गस्थलप्राणलिंगस्थलभावलिंगस्थलभेदात् त्रिधा भवति। अंगस्थलमपि त्यागाङ्गस्थल भोगाङ्गस्थल योगाङ्गस्थलभेदात् त्रिधा भवति। (इष्टलिङ्गस्थलं) आचारलिङ्गस्थलगुरुलिङ्गस्थलभेदात् द्विधा भवति,तथैव (प्राणलिङ्गस्थलं) शिवलिङ्गस्थलचरलिङ्गस्थलभेदात् द्विप्रकारं भवति। (भावलिङ्गस्थलं) प्रसादलिङ्गस्थलमहालिङ्गस्थलभेदाद्द्विविधं भवति। एवं लिङ्गानि षट् समजायन्त। एवमेव ( त्यागाङ्ग-

स्थलं) भक्तस्थलं महेशस्थलञ्चेति (भोगाङ्गस्थलं) प्रसादिस्थलं प्राणलिङ्गिस्थलञ्चेति ( योगाङ्गस्थलं ) शरणस्थलमैक्यस्थलञ्चेति द्विधाद्विधाऽभेदि । इति षट्स्थलानि प्रसिद्धानि । वीरशैवदर्शने शक्तियुक्तोऽद्वैतः शिवः प्रतिपाद्यो भवति, सा शक्तिर्बहुधा भिन्नाभूत् प्रथमं शक्तिः सा कलाशक्तिर्भक्तिशक्तिश्चेति द्विधाऽभियत क्रियाज्ञानेच्छाऽऽदिपराचिच्छक्तिभेदात् षट्प्रकारा जाता । भक्तिशक्तिरप्येवं षट्प्रकारैव बभूव श्रद्धानैष्ठिकाऽवधानानुभवाऽऽनन्दसमरसभेदात् । एताः षड्विधाः शक्तयः क्रमेणाचारादिषड्विधलिङ्गेषु सम्बन्धिन्यो भवन्ति, तथा च षड्विधा भक्तयः क्रमेण भक्तादिषट्स्थलेषु सम्बन्धिन्यो भवन्ति । उपरि निर्दिष्टानि षट्स्थलान्येतानि बहुधा व्यभज्यन्त, सर्वस्थलानि मिलित्वैकोत्तरशतस्थलानि कृतानि शास्त्रकारैः । तान्येतानि सिद्धान्तशिखामणिप्रभृतिप्रबन्धेषु सलक्षणं प्रबद्धानि प्राज्ञैः । तेषु षट्स्थलानामेव मुख्यतया संक्षिप्तं तल्लक्षणान्युदाह्रियन्ते, यथासिद्धान्तशिखामणौ —

शैवी भक्तिः समुत्पन्ना यस्यासौ भक्त उच्यते ।
तस्यानुष्ठेयकर्माणां मुक्तिर्भक्तस्थलं मतम् ॥
केवले सहजे दाने निष्णातः शिवतत्परः ।
ब्रह्मादिस्थानविमुखो भक्तो माहेश्वरः स्मृतः ॥
लिङ्गनिष्ठादिभावेन ध्वस्तपापनिबन्धनः ।
मनःप्रसादयोगेन प्रसादीत्येष कथ्यते ॥
लिङ्गं चिदात्मकं ब्रह्म तच्छक्तिः प्राणरूपिणी ।
तद्रूपलिङ्गविज्ञानी प्राणलिङ्गीति कथ्यते ॥
सतीव शरणे यस्तु शिवे शक्तिं विभावयन् ।
तदन्यविमुखः सोऽयं ज्ञातः शरणनामवान् ॥
प्राणलिङ्गादियोगेन सुखातिशयमेयिवान् ।
शरणाख्यः शिवेनैक्यभावनादैक्यवान्भवेत् ॥ इति

एतद्दर्शने पृथ्व्यादयः षट्स्थलाङ्गानि भूत्वैकैकमेकैकस्मिन् लयं लभन्ते, सैव रीतिः प्रतिपाद्यते यथापृथ्वीभक्ताङ्गं भूत्वा तस्मिन्नेवाङ्गे लयं प्राप्नोति तस्यचिद्धृतिरूपत्वात्, एवं जलमपि माहेश्वराङ्गं भूत्वा तदङ्ग एव लीनं भवति तस्य चिदाप्यायनरूपत्वात्, तेजः प्रसाद्यङ्गं भूत्वा तस्मिन्नेव लयं लभते तस्यचिद्रूपज्वलनरूपत्वात्, वायुः प्राणलिङ्ग्यङ्गं भूत्वा तदङ्ग एव लीनो भवति स्वातन्त्र्यलक्षणस्पन्दनरूपत्वात्, आकाशः शरणाङ्गं भूत्वा तत्रैवं लीनो भवति, चिद्भासिरूपत्वात्, वैद्यसंस्कारात्मकबिन्दुरैक्याङ्गं भूत्वा तस्मिन्नेवाङ्गे लीनो भवति च । एवमेव भक्तादिषट्स्थलान्यप्याचारादिषड्विधलिङ्गस्थले लयं लभन्ते सापि रीतिर्यथा चेत् भक्तस्याचारलिङ्गाङ्गत्वात् स तस्मिन्नेव लयं लभते, माहेश्वरस्य गुरुलिङ्गाङ्गत्वात् स तल्लिङ्ग एव लीनो भवति,प्रसादिनः शिवलिङ्गाङ्गत्वात् स तस्मिन्नेव लिङ्गे लीनो भवति, प्राणलिङ्गिनश्चरलिङ्गाङ्गत्वात् स तत्रैव लयं प्राप्नोति, शरणस्य प्रसादलिङ्गाङ्गत्वात् स तत्रैव लिङ्गे लीनो भवति, ऐक्यस्य महालिङ्गाङ्गत्वात् स तल्लिङ्ग एव लयति च । एवमाचारादिलिङ्गान्येकैकमुत्तरोत्तरमेकैकस्मिन् लिङ्गे लयं लभन्ते यथा—आचारलिङ्गं गुरुलिङ्गे गुरुलिङ्गं शिवलिङ्गे शिवलिङ्गं चरलिङ्गे चरलिङ्गं प्रसादलिङ्गे प्रसादलिङ्गं महालिङ्गे महालिङ्गमखण्डलिङ्गैकलोलीभूतं सत् सदाऽखण्डामर्शपरिबृंहितं वर्तते । समस्तशास्त्रमणीभूतस्य लिङ्गाङ्गसामरस्यशास्त्रस्य तत्त्वमतिगूढतया नेह लिख्यते । एतद्विषयः सिद्धान्तसाराव-

लीमहानारायणोपनिषच्छैवभाष्यसिद्धान्तशिखाम-णिप्रभृतिप्रबन्धेषु बहुधा प्रपञ्चित इतिदिक्। एतादृक्सकलपवित्रलक्षणलक्षितस्य वीरशैवमतस्य सिद्धान्तसमर्थनोद्युक्ता असंख्याः प्रबन्धा वर्तन्ते। तेषु केषाञ्चित्प्रबन्धानां नामानि वाचकमहाशयानां मनःप्रमोदाय लिखितुमभिलषे। पूज्यपादपञ्चाचार्याः क्रमेण रेणुकभाष्यं, दारुकभाष्यं, एकोरामभाष्यं, पण्डितभाष्यं, विश्वाराध्यभाष्यं चेति पंचभाष्याणि विरचयामासुः। एतैर्विना नीलकण्ठशिवाचार्यैर्विरचितं नीलकण्ठभाष्यं, श्रीकंठशिवाचार्यैर्विरचितं श्रीकंठभाष्यं, श्रीकरशिवाचार्यैर्विरचितं श्रीकरभाष्यं, सर्वेश्वरशिवाचार्यैर्विरचितं सर्वेश्वरभाष्यं, रेणुकशिवाचार्यैर्विरचितं चोलरेणुकभाष्यं चेति पञ्चभाष्याणि वर्तन्ते। वीरशैवसिद्धान्तसाधनशीलान्येतानि दशभाष्याणि व्याससूत्र, शिवसूत्र, पाशुपतसूत्राणामुपरिवर्तन्ते, तथाकालहस्तिदीक्षितमंचणपंडितपरमतकालानलाराध्यप्रभृतयः प्रकांडपंडितादशोपनिषदां महानारायणोपनिषदश्चोपरिवीरशैवभाष्याणि चक्रुः। बसव पण्डिताराध्यामहानारायणभृगुवल्लीशिक्षावल्ल्यानन्दवल्लीप्रभृत्युपनिषदां-पुरुषसूक्तस्य च वीरशैवसिद्धान्तबोधकानि भाष्याणि रचयामासुः। उद्भटाराध्ययोमाराध्यप्रभृतयःपण्डिताः पुरुषसूक्तस्योपरिभाष्यं चक्रुः शिवलिङ्गदेशिकेन्द्रश्चतुर्वेदानामृचः संगृह्य लिङ्गधारणपरं भाष्यं विलिलिखुः, तत् श्रुतिसारभाष्यनाम्नाप्रसिद्धं वर्तते, दुर्वासोमहर्षयो ब्रह्मसूत्राणां वीरशैवसिद्धान्तप्रतिपादिनीं वृत्तिं रचयामासुः, पतंजलिमहर्षिसमकालीना नन्दिकेश्वरशिवाचार्याः (अ, इ, उ, ण्) प्रभृतिचतुर्दशमाहेश्वरसूत्राणामभिप्रायं विचार्य शिवाद्वैतसिद्धान्तबोधिनीः कारिका रचयामासुः, तद्ग्रन्थस्याभिधानं नंदिकेश्वरकाशिकेति लोके प्रसिद्धमस्ति। नीलकंठभाष्यं कारिकारूपेण परे नीलकंठशिवाचार्या लिलिखुः, तद्ग्रन्थस्य नाम क्रियासारइति वर्तते। अपरे नन्दिकेश्वरशिवाचार्यालिङ्गधारणचन्द्रिकानामानं ग्रन्थं ग्रथितवन्तः, स्वप्रभानन्दशिवाचार्याः शिवाद्वैतमंजरीनामाभिधानंप्रबन्धं प्रबद्धवन्तः। शिवयोगी सिद्धान्तशिखामणिनामानं ग्रन्थं चकार। वीरभद्रदेवोवीरशैवसिद्धान्तदीपिकाभिधानं प्रबन्धं प्रबबन्ध, षडक्षरमन्त्री वीरशैवधर्मशिरोमणिं रचितवान् भोजदेवः शतसूत्ररत्नतत्त्वप्रकाशिकादिग्रन्थांश्चकार चन्नसदाशिवयोगी शिवयोगप्रदीपिकां रचयामासमायिदेवोविशेषार्थप्रकाशिकाऽनुभवसूत्रादिप्रबन्धान् कृतवान्। रेवणसिद्धेशश्चोलरेणुकसंवादाभिधानं ग्रन्थं चकार। नागार्यनीलकंठो वीरमाहेश्वराचारसंग्रहनामानं ग्रन्थं रचितवान्। मौनप्यमन्त्री वीरशैवाचारकौस्तुभं कृतवान्, गुरुदेवोवीरशैवाचारप्रदीपिकां जग्रन्थ गुरुराजकविः पण्डिताराध्यचरित्रं चकार। ईशान्यशिवगुरुरेवण सिद्धचरितं रचयामास (कोडग) देशाधिपः श्रीलिङ्गराजोविवेकचिन्तामणिनामानं सुप्रसिद्धं ग्रन्थं प्रबद्धवान्। वैयाकरणशिखामणिर्हरदत्तशिवाचार्यश्चतुर्वेदतात्पर्यसंग्रहादिप्रबन्धान् प्रबबन्ध। ज्योतिर्नाथः शैवरत्नाकरं रचितवान्। श्रीनंजणशिवाचार्योवेदान्तसारवीरशैवचिन्तामणिनामानं प्रबन्धं चकार। अपि च शिवतत्वचिन्तामणि, शिवतत्वतर्कचन्द्रिका, सिद्धान्तशेखर, सिद्धान्तसारावलि, सिद्धान्तरहस्य, शिवाद्वैतप्रदीपिका शंभुप्रभा, वीरशैवचिन्तामणि, वीरशैवरत्नाकर, वीरशैवमहोदधि, वीरशैवरत्नावली, वीरशैव-

प्रकाशिका, वीरशैवानन्दचन्द्रिका, वीरशैवोत्कर्ष-संग्रह, वीरशैवसदाचारसंग्रह, अनादिवीरशैवसार-संग्रह, वीरभद्रीय, बसवराजीय, भक्तधिक्यमरुल-सिद्धचरित्र, विश्वाराध्यचरित्र, माचिदेवमनो-विलास, प्रसंगरत्नाकर, शिवज्ञानशेखर, शांभव-सार, परमरहस्य, चिदम्बरोपनिषत्, वेदान्तसारो-पनिषत्, लिंगोपनिषत्, लिंगसारप्रभृतीनसंख्यान् प्रबन्धान् पण्डितप्रवरा रचयामासुः। एतादृङ्महा-भाष्य प्रभृति प्रबन्धपुञ्जस्तूयमानमहिमातिशयस्य वीरशैवसिद्धान्तस्य स्वरूपं वाचकमहाभागा विचार्य सन्तुष्येयुरितिज्ञात्वा लेखनोद्युक्तममुं करं विरामीकरोमि। इति शिवम् ॥

काशीनाथ शर्मा काव्यतीर्थः

## किं संस्कृतभाषा मृता ?

अनेकशः श्रुतं पठितञ्चाङ्गलभाषाग्रन्थेषु यत्सं-स्कृतं मृता भाषेति। किन्तु नावगतं तात्पर्य्यं मृत-शब्दस्येति। को वा शाब्दबोधोऽस्य विशेषणस्य ? कोऽस्यार्थः "संस्कृतं यतोऽधुना न व्यवह्रियते तत एषमृता भाषा संस्कृतमिति ?" । उत चास्य भावः "संस्कृतं यस्मान्मृतवज्जनान्विदधात्यस्मा-देषा मृतेति ?"।

प्रथमं विचारयामः किंसंस्कृतस्य प्रचार एक-पद एव लोपं गतो वेदानीमपि भारतेऽस्याः प्रचारो वर्त्तत इति किमस्या एतद्विशेषणं, युक्तमयुक्तंवा ?

यावद्भारतभूमिर्वर्त्तमानदशायां स्थास्यति यावत्पर्य्यन्तं सनातनोऽस्माकं वैदिको धर्म्म आ-र्य्यभूमिं पवित्रीकरिष्यति, सुतरां यावत्कालं सा-ङ्गोपाङ्गाश्चत्वारो वेदा भूतले स्वशक्तिं घोषयि-ष्यन्ति तावत्संस्कृतविद्यायाः प्रचारः सर्वनञ्च कदापि लोपं न यास्यतीति। आगच्छन्तु पश्यन्तु चक्षुषा "भारते संस्कृतस्य केन्द्रस्थले कियान्संस्कृ-तस्य प्रचारः कीदृशी चास्य बलवत्तेति," संदि-ग्धमनसो जनाः।

अधुनापि बहवो ऋषीश्वरकल्पा विद्वांसो मिथिलायां महाराष्ट्रे वङ्गे च विद्यन्ते यैरविरतं संस्कृतस्य गौरवं वर्द्ध्यत इति। येषां किञ्चिदपि संशयोऽस्ति किंरूपोऽस्य प्रचारो वर्त्तत इति स पश्यतु कियन्तः शतशोऽथ सहस्रशस्संस्कृत-च्छात्राः प्रथममध्यमतीर्थादिपरीक्षासु प्रतिवर्षमु-त्तीर्णा भवन्ति। आङ्ग्लविद्यातोऽल्पोस्याःप्रचारः कथमपि न भारते सम्भविष्यति । विशेषतोयाव-द्विविधयज्ञादयः श्राद्धपार्वणैकोद्दिष्टप्रभृतयोऽस्मा-भिर्दिनेदिने करिष्यन्ते तावत्संस्कृतविभूतयः सर्व-दैवोज्जृम्भिताः स्थास्यन्ति। साहसं कुर्वन्ति विदे-शिभाषावलम्बनपटवो यत्संस्कृतवक्तारोऽधुना प्रच-रितभाषावक्तृभिः कदापि स्पर्द्धां कर्त्तुं न क्षमाः किन्तु संघर्ष सति स्पष्टं भूयात्को विशेष इति। अन्यभाषावदेवाधुनापि सुलभतया संस्कृतविद्वांस एतत्प्रयुञ्जन्ति।

सत्यं विदेशिराष्ट्रतन्त्रकारणाज्जनानामिमां देव-वाणीं प्रत्यरुचिर्जाता किन्तु अस्मादेवेयं भाषा मृता जातेति वचनं धाष्टर्यसूचकमेव, आचन्द्रसूर्य्य-तारकं यावत्पाणिनिव्याकरणं महाभारतरामायणा-दिसाहित्यकोषो विद्यमानोऽस्ति तावत्को नामैनां मृतामिति कथयिष्यति ?

अपरं विचारणीयं किंमृतवद्विदधातीयं भाषा नरानत एवैषा मृतेति ?

यस्यां भाषायां साहित्येषु रामकृष्णार्जुनभी-ष्मप्रभृतीनां कथा वर्णिता, यदीयग्रन्थाः शिक्षयन्ति

"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः, शरीरं वा पातनीयं कार्य्यं वा साधनीय"मिति तस्या भाषाया ईदृक्लाञ्छनं यदियं मृतवद्विधात्रीति स्पष्टमसमीचीनं दोषैकदर्शित्वसूचकमिति। कस्या भाषायाः संस्कृतसमा आदर्शाः ? कस्याश्च जनाः प्राप्नुवन्ति सूर्य्यचन्द्रवंशिभूपतीनामिव साहसाङ्कितानि चारित्र्याणि ?। भारतीययुद्धप्रवृत्तानां क्षत्रियवीराणां कथां पठित्वा नहि नहि निशम्यैव के नाम न क्षणमपि साहसपूर्णा भवन्ति ?।

धर्मार्थं पृथिवीं पुत्रकलत्रादीनि च संस्कृतसाहित्यचरित्रनायका एव तत्यजुः।

परोपकारार्थं शरीरं त एव जहुः सुतरां सर्वोच्चादर्शाः संस्कृतसाहित्य एव निहिताः।

संस्कृतवेदान्तग्रन्थस्योपदेशतुलया वीरताप्रवर्द्धकाः शिक्षाः कुत्र विद्यन्ते ?। नैनं छिन्दन्ति शस्त्राणीतिवन्निर्भीतिस्थापका उपदेशा यदि भारतीयान्निर्भीकान् न विधास्यन्ति तर्हि का शिक्षेदं कार्य्यं कर्तुं समर्था ?। ये शरीरविच्छेदरूपं मरणं न किमपि गणयन्ति तेषां कस्माद्भयं भवितुमर्हति ?। अत एव हि अर्जुनभीष्मादयो यमराजादपि न किञ्चिदपि त्रेसुः। इयमेव वेदान्तस्य शिक्षैतस्य कारणमासीद्यत्त्रिलोक्यपि भारतीयवीरेभ्यः सशङ्केव स्थिता। जीवनन्तु हस्तामलकवदार्य्यबालका गणयन्तिस्म। एतस्योदाहरणं किंप्रह्लादाभिमन्युप्रभृतीनां कथाभ्योऽन्यत्र मार्गणीयं ?।

कोपि हिन्दुबालकः त्रस्तः प्राप्येत चेदित्येवाश्चर्य्यम्। नहि निर्भीकत्वं किन्तु भीतत्वमेव हिन्दूनां विषयेऽद्भुतम्।

अधुना एतावता स्पष्टं ज्ञातं किंमृतवद्वा अमृतवत्संस्कृतविद्या पुरुषानूविधातीति। अतो भावद्वयमपि सर्वथाऽनुचितं यस्मात् कोपि संस्कृतभाषां मृतां मृततुल्यामपि समुच्चारयितुं न समर्थः। महानयं शोको यद्बाल्यादेव शिशूनां हृदि भावोयं यत्संस्कृतं मृता भाषेति विध्रीयतेऽस्मात्सर्वेषामिमां प्रत्यभक्तिः अरुचिश्च विशेषतया परिवर्धते। कदाप्यतोऽस्माभिरेष विचारो न धारणीयः। शम्।

उदितनारायणदासो--मैथिलः

---

## अलसयोराख्यानम्

मार्गासन्नस्य कस्यचित् आम्रवृक्षस्य अधस्तात् पुरुषावलसौ शयातेस्म। तयोरेकस्य वक्षसि वृक्षात् पक्वं फलं पतितम्। अलसत्वात् स फलं नैव हस्ते गृहीत्वा अभक्षयत्। किन्तु "कोऽपि अत्र आगन्ता फलमेतत् निष्पीड्य क्षेप्स्यति मन्मुखे" इत्यचिन्तयत्, तस्मिन्नेव स्थले कश्चिदश्ववारः समाययौ। तं दृष्ट्वा ब्रूते असौ अलसः। भ्रातः अश्वारोहिन् पक्वम् एतत् फलं मदीय वक्षसि पतितं वर्तते रसमेतस्य मन्मुखे क्षिप्त्वा दया दर्शयितव्या श्रीमता इति। विहस्य अब्रवीत् अश्ववारः। भद्र त्वादृशः अलसः अद्यापि न दृष्टो मया, वक्षस्यपि पतितं फलं न भक्षयसि तदर्थमन्येषां साहाय्यं याचसे। तस्य एतादृशमाश्चर्यवचनं श्रुत्वा अपरः अलसः अब्रवीत् भद्र, सत्यमुक्तं भवता नास्ति कोऽपि एतादृशोऽलसः संसारे। श्रूयतां अस्य अलसस्यचेष्टितं अद्य निशायां कश्चित् कुक्कुरः लेढिस्म मन्मुखम्। कतिधा प्रार्थितोऽपि मया "श्वानं हस्तास्फालनेन मुखादुच्चारितेन धुत्कारशब्देन वा दूरीकृत्य क्रियतां स्तोकं साहाय्य" किन्तु

हस्तचालनमास्तां दूरे वाचाऽपि न कृतमनेन साहाय्यम इति द्वितीयस्य वाचं श्रुत्वा उच्चैर्हास्यमकरोत् अश्ववारः अकथयच्च तम्। प्रथमादपि धन्यस्त्वं कथं जिह्वया एकया वर्ण्यसे इत्युक्त्वा स्वांकपुस्तिकायां ( Note-book ) द्वयोश्चरितं लिखित्वा यथागतं ययौ। गत्वा च स्वदेशं तत्रत्यानां सम्मुखे वर्णयामास निखिलम्, श्रुत्वा च तद्देशीयास्तत्रागत्य वृक्षं निष्फलीचक्रुः। फलभारं स्वदेशं निन्युश्च। अलसौ तु पुनः तथैव कालं निन्यतुः।

वर्णितेन अनेन अलसोपाख्यानेन सूच्यते साम्प्रतकालीनभारतीयानां चरितम्। भारतावनिः सुफला पक्काम्रफलप्रायानेकसुखदात्री भारतोद्भवानां वृक्षस्थलरूपपार्श्ववर्तिसुखप्रापिका सृष्टिकालात् अद्यापि वर्तते। भारतीयाश्च पुनः पूर्वोक्तयोरलसयोः तुल्याः पार्श्ववर्ति अपि स्वसुखं नोपयुञ्जते। तदर्थं अश्ववाररूपाणां वैदेशिकपुरुषाणां साहाय्यमपेक्षन्ते। अश्ववाररूपा वैदेशिकाः आलस्यवशं गतानां भारतीयानां चरितं स्वांकपुस्तिकारूपिएयां बुद्धौ लेखनरूपं निश्चयं कृत्वा यथागतं स्वदेशीयानां समीपं तदखिलं वर्णितवन्तः। तेऽप्यागत्य दृष्ट्वा चरितमत्रत्यानां वृक्षफलरूपं भारतीयसुखं चिरं बुभुजिरे।

कथानकमेतत् मनसि स्थिरीक्रियतां भारतीयैः तदनु निरालसैः सर्वैरपि सच्छास्त्रोपदेशरूपमधोलिखितवचनं स्वीक्रियताम्।

"उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत" इति

पं० काशीदत्त झा

खैरागढ़ सी० पी०

## विदुषामुपदेशाः

(१) विफलोऽपि मा भव निराशः।

(२) यदर्थं परमात्मनां त्वं सृष्टस् तत्कर्म सर्वात्मना साधय।

(३) योहि निखिलं धनं व्ययीकरोति स त्वरितमेव क्षुधया पीडितो भवति।

(४) योहि धनी व्ययप्रकारं न जानाति, तस्य, धनं भारायते।

(५) गतः समयो न परावर्तते।

(६) यस्मिन् कर्मणि विनियुक्तःस्याः तत्रैव तत्परोभव इत्थं ते शक्तयोविकशिता भविष्यन्ति सिद्धिश्चाधिगता भविष्यति।

(७) द्विविधा शिक्षा भवति। एका पराधिगता अपरा च स्वार्जिता।

(८) यस्य हृदयं शुद्धं भवति, मस्तिष्कञ्चोन्नतं भवति स एव नवान्विचारान्प्रकाशयितुं शक्नोति।

(९) परिश्रमी संयमी मितव्ययी च सुखी भवति।

(१०) यदि नाम सर्वोऽपि जनो मर्य्यादां पालयेत् तदायं संसारो नूनं सुखमयःस्यात्।

(११) लाभादधिको व्ययो मूर्खाणाम्।

(१२) मानसिकं कर्म महान्तमर्थं जनयति।

(१३) ईश्वरस्तमेवोन्नमयति यः स्वोयानुन्नतिं कामयते।

(१४) दैनिकं कर्म दिन एव सम्पादनीतम्।

(१५) सत्यं महद्धनम् तदुमनयति असत्यञ्च पातयति।

(१६) धर्मोहि अर्थाद्गरीयान्। अतश्चार्थकृते धर्मो न हातव्यः।

(१८) अर्थवानपि दरिद्रः यस्य तृष्णा विशाला।
दरिद्रोऽप्यर्थवान् यस्य मनः तुष्टम्।
(१९) दुःखाकरमपि सत्यं वर्त्म न हेयम्।
(२०) स्वानुभवविरुद्धं वचो न वक्तव्यं कर्म च नाचरणीयम्।
(२१) यदेकेन कर्मकर्तुं पार्यते तदपरेणापीति निश्चितमवधेयम्।

वामदेवशर्मा

---

## कविवरकालिदासवरप्राप्तिकिंवदन्ती।

कविकुलकण्ठीरवः कालिदासः श्रीमत्याः भगवत्याः कालिकादेव्याः परमभक्त आसीदिति तस्यैव जगद्विख्यातेन इतिहासेनावगम्यते। श्रूयते यत् कालिकादेव्या एव वरदानेन कविकुलशिरोमणौ कालिदासे अलौकिकप्रतिभाशालिता अव्याहतकवित्वशक्तिश्च समजनिष्ट। इदमप्याकर्ण्यते यत्। परिणयात् पूर्वमसौ महान् सुकुमारमतिरासीत् कालिदासस्य परिणयः परमविदुष्याविद्योत्तमया सार्धं सञ्जायते स्म। भोजप्रबन्धेतु विद्योत्तमायाः नामधेयम् 'विलासवती' इति विलिखितमस्ति। परमपण्डिता विद्योत्तमा प्रतिज्ञातवती आसीत् यत् स्वसमानशेमुषीवता विदुषैव साकं उद्वाहं विधास्यामोवयम्, परन्तु तस्या बान्धवगणः तादृशं वरं सम्मार्गमाणा अपि कुत्रापि न लेभे तथापि तस्या निर्बन्धं समवलोक्य क्रुधा कलुषितमानसास्ते दैवात्समधिगतेन महदविवेकवता कालिदासेन सह सकपटं तां विद्योत्तमां परिणिन्युः सञ्जाते परिणये उत्तमा विद्येव वर्तमाना विद्योत्तमा कालिदासं समुद्दिश्य प्रश्नमेकं विदधे। परञ्च कालिदासः तस्योत्तरं किं विदधातु यतः सखलु अक्षरशत्रुरेवासीत् अथ प्रश्नस्योत्तरमलभमाना सा विद्योत्तमा कोपानलसन्दग्धविज्ञानाभूत्वा पादेनैकेन कालिदासं प्रजहार। भार्य्यायाः पादाघातेन कालिदासेऽतीवग्लानेः प्रादुर्भावो बभूव, समनन्तरं विद्योपार्जनायेतस्ततः पर्य्यटन् सनिःशेषदेशभूषावेशं मिथिलादेशं अगमत् धिषणावतां शारदावाचकानां विदुषां प्रायोविदितमेव भविष्यति यत् वाराणसीमपहाय साम्प्रतं मिथिलैव संस्कृतविद्यानां मुख्यमन्दिरं वर्तते समस्तसनातनधर्मावनतिकारणे एतादृशे महाभयङ्करे कलिकाले समुपस्थितेऽपि विद्यारसानभिज्ञानपि तत्रत्यानतिबालकान् बालकान् कश्चित् पृच्छेत् किम्भोः कस्याविद्याया अध्ययनं भवद्भ्यो रोचते तदार्थकरीविद्यानां नाम अगृहीत्वैव संस्कृतविद्याध्ययने एव स्वाभिप्रायमाविष्कुर्वन्तिते मिथिलायाश्चर्य्या कदाचित् तत्रत्यायाः संस्कृतविद्यायाः समुन्नतिर्मया दर्शिता सम्प्रति प्रकृतमनुसरामः। कविकुलमूर्द्धन्यस्य कालिदासस्य कालिकादेवी प्रदत्तवरदानविषये अनेका दन्तकथाः वर्तन्ते तासां मध्ये इयमप्येका-दन्तकथा इह जगति प्रख्याता वरीवर्ति कविकुलतिलकः कालिदासः विद्योपलब्ध्यै मिथिलायां उच्चेश्वरी नामधेयं ग्रामं जगाम ( यस्य ग्रामस्य नामधेयमधुना उचैठेति अभिधीयते ) असौ ग्रामः दरभंगानगरस्योत्तरस्यां ककुभि दशक्रोशोपरि वर्तते। तत्र एका गरीयसी संस्कृतपाठशाला आसीत्, तस्यामेव विद्यामध्येतुमारेभे कालिदासः। कालिदासस्य प्रतिभाभ्रासे अतीव कुण्ठितासीदत एव असौ साधारणतः विद्यामभ्यसन् कालमतिवाहयन्नासीत्। तत्र लुमनि नामिका एका

अल्पीयसी नदी विद्यते यस्या उत्तरपश्चिमकोणे एकम् अतीव सुन्दरं मन्दिरं कालिकादेव्याः विद्यते तत्रत्या कालिकादेवी अतीवोग्रा वर्तते कयापि मनःकामनया यदि तत्र कोपि तद्भक्तो गच्छति तदास्याः कृपया तस्य मनः कामनामवश्यमेव सफलतामधिगच्छति पुरा मन्दिरं परितः निविडा अरण्यानी आसीत् या खलु मृगेन्द्रशार्दूलादीनां जन्तूनां सुखनिवासस्थानमासीत् अधुनापि किंचित्काननं वर्तते किन्तु सिंहादीनां निवासस्थितिर्नास्ति। तत्रत्यायाः संस्कृतपाठशालाया अध्यापकस्येयं निर्विकल्पकी प्रतिज्ञा आसीत् यत् प्रति प्रत्यूषं प्रति सायङ्कालं च भगवत्यादेव्याः अवश्यमेव पूजा करणीयेति। संस्कृतपाठशालोक्तसरितः दक्षिणतट आसीत् तस्याश्चिह्नमधुनाऽपि विद्यत एव अध्यापकमहोदयः स्वप्रतिज्ञानुसारेणैव भगवतीं पूजयितुं प्रातः सायं गतागतं विदधन् सुखेनासात्, कालस्य गतिरव्याहतैव विद्यत इति कदाचिद्वर्षर्तोरागमआविर्बभूव तथापि अध्यापकमहोदयो भगवतीमर्चितुं सायं प्रातः गमनागमनं विदधन्नेवासीत् लोकानामियमुक्तिः सत्यैवास्ति यद्यदा परमकरुणाकरोभगवान् परमेश्वरः समीहते तथा सर्षपं गिरीन्द्रं गिरीन्द्रं च सर्षपं विदधाति अस्योदाहरणीभूतः कालिदास एवास्माकं प्रतिभाति अधुनास्य भाग्योदयस्य वेला संजायते। एकस्मिन् दिवसे भगवान् भास्करः दिवसादेव मुशलधारं ववर्ष, एवं वृष्टिः सञ्जाता यत् कुत्रापि पृथिवी न निरीक्ष्यतेस्म तथापि वृष्टिप्रतिरोधोना भवत् भगवान् वा नरमणिः अस्ताचलशिखरमारोहोत् गाढान्धकारश्च दशसु दिक्षु स्वं प्रभुत्वं वितेतान, असत्पुरुषसेवेव दुष्टयो जनेभ्यो न किंचिदपि कार्यं वितरन्तिस्म अथासावध्यापकः स्वकीयवार्द्धक्यात् तस्मिन्दिने सन्ध्याकालीनं भगवती पूजनं कर्तुं स्वमसमर्थं ज्ञात्वा स्वनित्यक्रियायां बाधाश्च दृष्ट्वा स्वशिष्यान् प्रत्यूचुः, भोः भोः शिष्याः। अस्ति कश्चित् एवंभूतश्छात्रोभक्तः यो मम प्रतिनिधिर्भूत्वा भगवतीं पूजयित्वा च आगमिष्यति यदा कोऽपि तस्योत्तरं न ददौ तदा कालिदास उच्चैरुवाच गुरो भवन्निदेशं कर्तुं वयं समर्थाःस्मः तदाकर्ण्य अतीव हर्षितचेता अध्यापकः व्याजहार, तात! अनया तवभक्त्या वयं अतीवप्रसन्नाः स्मः गच्छ त्वरितमेव तव मनोरथतरुः फलिष्यति परञ्च यथा मया प्रतिपाद्यते तथैव करणीयं तवकरकमले मया मषीविन्दुः स्थाप्यते अनेन मषीविन्दुना भगवत्याः देव्याः मन्दिरस्य भित्तिं सचिह्नां विधास्यसि कालिदास तथैवोररीकृत्य तत्रगत्वा च भित्तिं सचिह्नामकृत्वैव भगवतीं कालिकामेव सचिह्नामकार्षीत्। तद्दृष्ट्वा भगवतीं तारस्वरेण जहास वरंब्रूहि वरंब्रूहि इति व्याजहार च। कालिदासोऽपि सर्वेषां श्रुतिस्मृतिपुराणेतिहासानां निखिलानां शास्त्राणां सकलानां कलादीनां च ममाभिज्ञता भवतु इति वरं वव्रे, भगवती अपि "तथास्तु" इति व्याहृत्य तुष्णींभावमाललम्बे। कालिदासोऽपि सकलानां श्रुत्यादीनां परमाभिज्ञो बभूवेत्यलम्।

चन्द्रकान्त पाठकः
काव्यतीर्थः
नटवर हाईस्कूल
रायगढ़

# स्वर्गीय-विद्योदय-सम्पादकस्य परमपंडितहृषीकेशशास्त्रिमहोदयस्य संक्षिप्तजीवनम्।

( वर्त्तमान विद्योदयसम्पादकश्रीभवविभूति भट्टाचार्य्य एम० ए० विद्याभूषणेन शारदायां प्रकाशार्थं प्रेषितम् )

अस्ति खलु वंगेषु पूर्वसागराभिमुखप्रस्थिताया भगवत्या भागीरथ्याः पूतप्रवाहविधौतपश्चिमप्रान्तो भट्टपल्लीतिसुप्रसिद्धो जनपदः स हि कलिकातानगरीत उत्तरस्यां दिशि योजनत्रयमात्रव्यवहितः। इतः प्रायो द्विशतवत्सरपूर्व्वं नारायणेतिसुगृहीतनामधेयः काश्चद्विशिष्ठान्वयसम्भूतः सिद्धपुरुषः स्वकीयालौकिकसिद्धजनोचितकर्म्मपरम्परावलोकनोदितभक्तिविस्मयातिशयाकृष्टचित्ततया स्वयं स्वीकृतशिष्यभावेन हावलदारोपनामकेन तज्जनपदस्वामिना केनचिद्ब्राह्मणेन सानुनयमभ्यर्थतोयशोरान्तर्गताया धूलियापुरेतिप्रसिद्धाया स्ववासभूमेः सदारापत्यः समेत्य तत्र वसतिं कृतवानिति श्रूयते, नारायणः खलु वंगेषु राढीयवारेन्द्रपाश्चात्यवैदिकादिबहुश्रेणीविभक्तेषु ब्राह्मणेषु पाश्चात्यवैदिकश्रेण्यन्तर्गतत्वेनात्मानमङ्गीकृतवान् परं तदादिपुरुषः किमुत्कलदेशीय उत महाराष्ट्रदेशोद्भवः किंवा कान्यकुब्जीय इति तु विशेषतो न ज्ञायते। प्रचरन्ति पुनरुपर्य्युक्तदेशत्रयान्यतमप्रसूतत्वप्रख्यापका भिन्नरूपाः किंवदन्त्यः। अत्यल्पीयसैवानेहसाऽत्रागतस्य तस्य वंशो विस्तृतिं लेभे, येन जनपदोऽयं समन्तात् तद्वंशीयैरेवाधिकृतो बभूव। न केवलं वंशस्य तथाभूता विस्तृतिः तद्वंशीयाश्च सदाचारवत्तया, समुज्ज्वलब्रह्मवर्च्चसेन, न्यायस्मृतिपुराणतन्त्राद्यशेषपारदर्शित्वेन, समधिकधर्म्मनिष्ठया, चान्यैरपि ब्राह्मणोचितसद्गुणैर्वङ्गेष्वचिरेणैव महतीं प्रतिष्ठां लब्धवन्तः, प्रायः सर्व एव सत्कुलजा वङ्गीयब्राह्मणाः परमाग्रहेण तान् दीक्षागुरुपदे प्रतिष्ठाप्य स्वयं शिष्यत्वमुपगम्य च कृतार्थम्मन्या बभूवुः। ततश्च गुरुतैव तेषां जीविका सञ्जाता। तेषां सदाचारवत्तायाः किमन्यद्बहु ब्रवीमि, यत्तेषु बहवः समयप्रभावाद् विपर्य्यस्तपूर्व्वभावा अपि पुनरिदानीमप्यशूद्रप्रतिग्राहिणो निरामिषभोजिनो धर्म्मानुरागिणश्च वर्तन्ते कामयन्ते न च मनसाऽपि श्ववृत्तिम्। इत्थं विस्तृतिमुपगतस्य नानाशाखासम्पन्नस्य नारायणवंशस्य कस्याञ्चित् पण्डितपरम्परालंकृतायां शाखायां श्रीमतो हृषीकेशशास्त्रिपादस्य जन्माभवत्। न केवलमस्य पितृकुलं मातामहकुलमपि सुप्रसिद्धगौतमगोत्रजा'लमभट्ट' वंशजानामन्यतमद्विद्वत्परम्परालंकृतञ्च जन्मसमयश्चास्य शकाब्दाः १७७२, वङ्गाब्दाः १२५७ गौणज्यैष्ठस्य मुख्यवैशाखस्य वा कृष्णदशमी तिथिः। तदानीन्तस्य पितृकुलं, मातृकुलञ्च सम्यग्गुणमासीत्। तथाहि जन्मसमये पितृकुले पितामहचरणा मातापितृचरणावकृतदारपितृव्यचरणाश्च वर्तमाना आसन्। पितृव्यचरणस्य परिणयस्तस्य शैशवावस्थायामेव बभूव पितामहचरणास्त्वस्य नवीने वयसि दारकद्वयमात्रं प्रसूय परलोकप्रस्थितायां स्वपत्न्यां पुनर्दारपरिग्रहपराङ्मुखाः स्वयं माता पिता च भूत्वा

शिशुपुत्रद्वयं सर्वप्रयत्नैः संवर्द्धयामासुः । निज-विमातरञ्च समुचितभक्तिश्रद्धाभ्यां सम्पूज्य स्वगृहस्य सर्वाध्यक्षकर्म्मणि स्थापितवन्तः । मातृकुले च सदारा मातामहपादाः सपत्नीका मातुलाश्च त्रय आसन् । उभयत्र तु स एवैकमात्रं बालापत्यं जातः । ततश्चोभयपक्षीयाणां निरतिशयस्नेहभाजनमासीत् । अथ समतीते पञ्चमे वर्षेऽस्य यथाविधि विद्यारम्भः सञ्जातः । वर्षेणैकेनैव वङ्गाक्षराणां लेखने पठने चास्य नैपुण्यं सञ्जातम् । तोऽसौ "मुग्धबोधाख्यं" पद्मनाभविरचितं संस्कृतव्याकरणं पठितुमारब्धवान् । त्रयोदशवर्षे वयसि तेन व्याकरणशास्त्रे समीचीनव्युत्पत्तिर्लब्धा, संस्कृतवाक्यरचनाशक्तिश्च प्रदर्शिता, विरचितानि चानुष्टभा छन्दसा बहूनि सुगमगीर्व्वाणगिरा पद्यानि, व्याकरणमधीत्यैव तस्य हितोपदेशप्रमुखाणां बालपाठ्यसंस्कृतनिबन्धानां विनैव गुरूपदेशमर्थाववोधे शक्तिः सञ्जाता । अत्रावसर एव तत्पिता सहचरैस्तस्य तथाविधां शक्तिमवलोक्यानन्दपरम्परामनुभवद्भिः कयापि सर्वतोऽनुरूपया सत्कुलजया कन्यया सहास्य पाणिग्रहणकर्ममहोत्सवोत्तरं सम्पादितम् । पितामहचरणास्तस्य शिरोमण्युपाधिकानन्दचन्द्रनामानो वाग्मिनः सुकवयः सर्व्वशास्त्ररहस्यविदो वङ्गेषु, तदानीं लब्धप्रतिष्ठेषु विद्वत्स्वन्यतमा आसन् । न केवलमेते सुधीजनसहचराणां सर्व्वसद्गुणानामाश्रयभूता वपुरप्येषामखिलमहापुरुषलक्षणाङ्कितमाभ्यन्तरतेजोगाम्भीर्य्याभिव्यञ्जकमनन्यसाधारणं, सकृद्दर्शनमात्रत एव दर्शकहृदयाकर्षकमासीत् । अथ प्रकृतमनुस्रियते— ततो वर्षचतुष्टयं यावत् काव्यालङ्कारछन्दोग्रन्थानामनुशीलनं कृतमनेन । अथ सप्तदशवर्षे वयसि नव्यन्यायमध्येतुं प्रवृत्तोऽभवदसौ । प्रथमं वर्षमेकं महामहोपाध्यायश्रीयुतराखालदासन्यायरत्नसकाशादधीत्य निजपितृव्यपादानां तर्करत्नोपाधिकयादवचन्द्रशर्मणां शिष्यत्वं प्रतिपेदे । न्यायशास्त्राध्ययनसमयएवान्तरान्तरा वङ्गेषु लब्धप्रतिष्ठस्मृतिशास्त्राध्यापकश्रेणीमारूढानां स्मृतिरत्नोपाधिक-मधुसूदनशर्म्मणां स्वपितृचरणाना चरणमूलमुपेत्यायं नव्यस्मृतिनिबन्धानामपि पाठनं शुश्राव । इत्थं समतीतानि त्रिचतुराणि वर्षाणि ।

अथादृष्टस्य प्राबल्याद्भावश्यम्भाविभावानामवश्यंभव्यतया वा नियतिनिर्देशस्यालङ्घ्यतया वा तस्मिन्नवसरे तस्याङ्गलभाषाशिक्षायां गरीयसी प्रवृत्तिः सञ्जाता । तदानीं तद्वंशीयाः सर्व्वे एव तद्भाषाशिक्षाया न केवलं प्रतिकूला आसन्, अपि तु तच्छिक्षणं हि षष्ठमिव महापातकं विशेषपातित्यकारणं मन्यन्ते स्म, येन तत्स्वजनास्तदिच्छोपरोधमनुचितंमन्यमाना अपि तस्य तत्कार्मद्वारा पातित्यस्पर्शशङ्कयेव प्रबललोकवादभिया च न तं तत्कर्म्मानुष्ठातुमनुमेनिरे, प्रत्युत बहुविधसान्त्वनवचोभिस्तं तथाविधोद्यमात् तत्कालं निवर्तयामासुः । किन्तु—

"क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत् ।"

गुरुजनाज्ञया कियत्कालं तादृशीं बलवतीमिच्छामवरुद्ध्य पूर्व्ववदनन्यमनसा संस्कृताध्ययने वर्त्तमानोऽप्यसौ न तामेकान्ततः परिहातुं शशाक; अल्पवयसैव समयेन तथा निरुद्धप्रसरा सेच्छा बाष्पसन्ततिरिव पुनः पूर्व्वावस्थातः प्राबल्यमाप, अनन्योपायश्च हुगलीकालेजाख्यविद्यालये चाध्येयानं स्वग्रामे निवसन्तं जयगोपालवन्द्योपाध्याय-

नामानं कमपि तीक्ष्णधियं छात्रमनुनीय तस्मै तत्पाठ्यसंस्कृतपुस्तकाध्यापनमङ्गीकृत्य च तत्सकाशात् "अथवा विद्यया विद्या" इतिप्राचीनन्यायमनुसृत्यातिगोपनेनाङ्गलभाषामध्येतुं प्रवृत्तोऽभवत्। वर्षत्रयं तथैवाधीत्य प्रवेशिका (Entrance) परीक्षोपयोगिपुस्तकानामनायासार्थबोधशक्तिस्तथाङ्गलभाषायामावश्यकवाक्यरचनानैपुण्यञ्चास्याभवत्, तथा ह्यपरे विद्यार्थिनो विद्यालयेषु यथाविध्यध्ययनतो द्वादशवत्सरैर्यत्फलं लभन्ते, वर्षत्रयमात्रमनियताध्ययनेन तेन तत्फलं लब्धम्। अथ क्रमेण तदपि रहस्यं सामाजिकेषु प्रकाशमियाय, येनास्य ग्रामे महदपयशः कलङ्कश्च महान् सञ्जातः। तदाकर्णनेन स्वजनाः खल्वस्य मनसि नितरां व्यथां प्रपेदिरे, तिरस्कर्तुमारेभिरे च तं सर्व्वदा रहसि। इत्थं भग्नोद्यमोऽसौ संस्कृताध्ययनेऽपि पराङ्मुखः किंकर्त्तव्यविमूढः स्थितः। यावदसौ जयगोपालवन्द्योपाध्यायोऽपि वि० ए० परीक्षायां विफलमनोरथो लज्जया स्वजनमुखदर्शनमपि तापहेतुं मन्यमानो वङ्गदेशं विहाय सुदूरपञ्चनदाभिमुखं प्रतस्थे। ततश्च वर्षद्वयं तस्य दिवसानि दुःखदुःखेनैवातीतान्यभवन्। एकत आङ्गलभाषाशिक्षाया व्याघातेन महान्मनस्तापोऽन्यतश्च संस्कृतशिक्षादरशैथिल्येन स्वजनकृतगुरुतिरस्करणजनितसन्तापः। इत्थं द्वौ सन्तापौ मिलित्वा मनसोऽस्य महान्तं विक्षेपं जनयामासतुः। नाहाराभिरुचिर्न निद्रा नापि समानवयोबन्धुजनसम्भाषणप्रीतिरभवत्। एतस्यामवस्थायां गृहावस्थितिरसह्यदुःखदैवाभवत्। तेन सोऽपि द्विसप्तत्युत्तराष्टदशखृष्टाब्दस्य (१८७२ ई०) प्रारम्भे गुरुजनाननामन्त्र्यैव केनापि वालमित्रेण सह निभृतं पञ्चनददेशाभिमुखमेव प्रस्थितः। तदानीं जयगोपालवन्द्योपाध्यायः पञ्चनदान्तर्गत "गुजरान्वाला" नामधेये जनपदे कस्मिंश्चित् मिशनरिविद्यालये द्वितीयशिक्षकपदमधिष्ठित आसीत्। स तत्रैव तत्समीपे जगाम। बहुदिवसानन्तरं परस्परसम्मिलनसुखमनुभवन्तौ तावुभावेव परमानन्दसन्दोहाप्लुतचित्तावभूताम्। मासमेकं वन्द्योपाध्यायः सादरं तं स्वसमीपे संरक्ष्य तदानीन्तनपञ्चनदमहाविद्यालयाशेषकार्य्यसम्पादकसभयाचिरप्राह्वनयोद्घोषितासु परीक्षासु "प्राज्ञ" तिनामधेयामादिमसंस्कृतपरीक्षां प्रदातुमेनं लवपुरे ("लाहोर"—नगरे) परीक्षाया दिवसत्रयपूर्व्वं स्वव्ययेनैव प्रेरयामास।

अथायं लवपुरं समेत्यैव तदानीन्तनपञ्चनदमहाविद्यालयकार्य्यसम्पादनसमितेः प्रधानसदस्याभ्यां श्रीयुक्तबाबूनवीनचन्द्ररायचौफपण्डितश्रीयुतराधाकृष्णगोस्वामिभ्यां मिलितः ताभ्यांसम्यक् परीक्षितश्च। तौ च तं परीक्ष्य युगपदुक्तवन्तौ "का नाम प्राज्ञपरीक्षा, तुच्छैव सा श्रीमतो विद्यावत्तायाः। नास्मिन् वर्षे "शास्त्रि" परीक्षाया आयोजनमस्ति, ततश्च वर्षेऽस्मिन् संस्कृतोच्चपरीक्षार्थिदातव्यतया निर्द्धारितां विशारदाख्यापरीक्षां ददातु भवान्, भाविनि वर्षे "शास्त्रि" परीक्षां दास्यतीति। तेन सविनयमुक्तम्,—"न मया विशारदपरीक्षानियमावली विदितभूयिष्ठा, नापि तत्पाठ्यानि संस्कृतपुस्तकानि सन्ति मत्समीपे, दिनश्चैकमात्रमन्तरालवर्ति वर्त्तते, किञ्च तत्र दातव्यं शुल्कं न वर्त्तते मत्पार्श्वे, तत् कथं तत्परीक्षां दातुमुत्साहं कुर्य्याम्"। एतदाकर्ण्य तौ सस्मितमुक्तवन्तौ "न कापि चिन्ता कार्य्या,

पुस्तकान्यस्मत्तो गृहाण, अन्यत् सर्व्वमावां पूरयिष्यावः। भवता केवलं परीक्षादिवसे यथाकालं परीक्षागृहे समुपस्थातव्यमिति" एवमुक्तोऽसौ प्रहृष्टात्मा ताभ्यां प्रदत्तानि पुस्तकान्यादाय स्ववासस्थानमाजगाम । आगत्य च त्यक्तनिद्र एकाग्रमनसा पाठ्यपुस्तकान्यवलोकयन्नेव तां निशामनैषीत् । परेद्युः केवलं प्रथमदिनपरीक्षणीयपुस्तकानि पपाठ तत्परेद्युश्च परीक्षारम्भः समभवत् । प्रथमदिवसीयप्रश्नानामुत्तराणि लिखित्वा मेलयित्वा चापरपरीक्षार्थिप्रदत्तैरुत्तरैः सह समुदिताऽस्य हृदये बलवत्याशा । इत्थमुत्तरोत्तरसंवन्धितया चाशया दिवसत्रयं लेखनपरीक्षां दत्वा चतुर्थदिवसे च मौखिकपरीक्षायामुच्चसङ्ख्यां लब्ध्वा सञ्जातस्तस्य मनसि परीक्षासाफल्ये बलवानाश्वासः एवं समाप्तिमुपगते परीक्षाकर्म्मणि, तस्य संस्कृतरचनानैपुण्यं कवित्वशक्तिमपि परीक्ष्योपन्यस्तं विद्वत्प्रवराभ्यां ताभ्यां —"सुचिरमुपकल्पितमस्माभिः संस्कृतभाषायां मासिकपत्रस्यैकस्य प्रकाशनं, परं तत्सम्पादनक्षमपुरुषाभावेन नाद्यापि कार्य्यारम्भः कृतः। साम्प्रतं श्रीमन्तं योग्यपुरुषमुपलभ्याविलम्बेनैव तत्प्रकाशनेच्छा कृता, तद्भवानिहैव स्थित्वा पत्रिकाया अस्याः सम्पादनं करोतु। तदर्थं प्रतिमासं पञ्चविंशतिमुद्राः प्राप्स्यति"—इति तेनापि सविनयं कृतज्ञतां प्रकाशयाङ्गीकृतस्तत्प्रस्तावः । तदवध्येव "विद्योदय"-स्याविर्भावः। अथातीते मासैकमिते समये परीक्षाफलं प्रकाशितमभूत् । परीक्षोत्तीर्णताहेतोः प्रतिमासं द्वादशमुद्रावृत्तिश्चास्य परिकल्पिताऽभवत् । नासौ "गुजरानवाला"—प्रदेशे पुनः प्रत्याजगाम । लवपुरे निवसन्नेव वर्षमेकं नियमपरि-

श्रमेण शास्त्रिपरीक्षापाठ्यपुस्तकान्यधीतवान् समयेनानेनैवाङ्गलभाषाप्रवेशिकापाठ्यपुस्तकानामपि पाठं चकार। अथ वर्षान्ते परीक्षाद्वयी प्रदत्तानेन, (१) शास्त्रिपरीक्षा, (२) आङ्गलभाषायाः प्रवेशिकापरीक्षा च । तत्र "शास्त्रि" परीक्षायामेक एवासौ समुत्तीर्णो बभूव । अयं हि वाल्मीकिरिव कवीनां, ओंकार इव छन्दसां राजकीयशास्त्र्युपाधिभूषितानां तथा वृटिशराजप्रतिष्ठितापरसंस्कृतोपाधिमतामाद्यो ततो हि १८७३ खृष्टाब्दे, शास्त्र्युपाधिपरीक्षा पञ्चनदेषु प्रथममेव प्रवर्त्तिता बभूव, असावेव, तत्र सकलपरीक्षार्थिनामादिम आसीत् । १८७३ खृष्टाब्दीयपञ्चनदविश्वविद्यालयस्य कालेण्डराख्य विवरणीपुस्तकमत्र प्रमाणम् । कलिकाता-संस्कृतविद्यालयस्य समुत्कृष्टछात्राय शास्त्र्युपाधिवितरणप्रस्तावो हि पञ्चनदविश्वविद्यालयस्यानुकार्य्येव वङ्गेषु संस्कृतोपाधिपरीक्षाकल्पश्च सुभृशमर्व्वाचीन, एवं स्थिते कोनामास्य भारतेष्वाधुनिकविद्वद्वृन्दानामग्रणीत्वं प्रतिभायाश्चास्य निरङ्कुशत्वं नाङ्गीकुर्य्यात् । भवतु, शास्त्रिपरीक्षोत्तीर्णताहेतोः पुरस्कृतिं मुद्राशतं तथा प्रतिमासं त्रयस्त्रिंशन्मुद्रावृत्तिश्चास्य कल्पिताऽभवत् ततो वर्षद्वयम् इन्टारमिडियेट् (Intermediate) परीक्षापाठ्यपुस्तकानि यथाविधि पपाठ । किन्तु दैवनिर्वन्धान्न तत्र परीक्षायां साफल्यं लेभे । एतावतैवास्य छात्रावस्था विरतिमाप । ततः परं लवपुरस्थे "ओरियेन्टेलकालेजाख्य (Oriental college) राजकीयविद्यालयेऽन्यतमसंस्कृताध्यापकपदं प्राप्य दशवर्षाणि यावत् तत्र स्वनियोगमनुतिष्ठन् परां प्रतिष्ठां लेभे। एतावान् समयस्तेन परमानन्दे-

ऽतिवाहितः। स्वगृहे पितृपितामहमातृभ्रातृप्रमुख-प्रियपरिजनानां सद्भावात्तत्र निरन्तरं सुखमासीत् कर्मस्थाने च स्वोपरितनविद्यालयाध्यक्षपुरुषाणामसीमानुग्रहलाभेन छात्रेषु च सदध्यापकतानिमित्तकप्रतिष्ठालाभेन प्रतिवर्षं समीप्सितवेतनवर्द्धननिमित्तेन च निर्वाधं सुखमनुबभूव।

अवसरेऽस्मिन्नेतदपि वक्तव्यपक्षे प्रतिभाति प्रथमं तस्याङ्गलभाषाशिक्षाप्रावण्यमवलोक्य प्रायः सर्व्व एव स्वग्रामीणा महत्तराः क्षुद्रतरा अपि तं विविधव्यङ्ग्योक्तिपरम्पराभिरुपहसितवन्तो निन्दुश्चायथादोषानारोप्य तदुपरीति पूर्वमुक्तम्। तेन तु तदानीन्तनान् प्रति न किमपि प्रातिकूल्यमाचरितम्, सोढाश्च तेषां तथाविधाः कटुव्यवहाराः तूष्णीम्। परं मनसि प्रतिज्ञातं यदि कदाचित् प्रयत्नस्यास्य मे साफल्यं भवेत्, तदा यथैतेऽकारणमदिच्छाव्याघातका मूढाः स्वयं प्रवृत्ता एव स्वपुत्रादीनाङ्गलभाषां शिक्षयेयुस्तथैव प्रयत्नः कार्य्यो मया। अथ प्रतिज्ञैषा तस्य समयेनैव सम्पूरिता। नामुष्य प्रयत्नोऽपेक्षितः। लवपुरे तस्य क्रमशः परिवर्द्धमानामुन्नतिमाकर्ण्याकर्ण्य ते हि प्रतिपक्षा ईर्ष्यया मात्सर्य्येण कारणान्तरेण वा परिवर्त्तितमनोभावा एकैकशः स्वपुत्रादीनाङ्गलविद्यां शिक्षयितुं प्रवृत्ता बभूवुः। येनेदानीं भट्टपल्लयामाङ्गलविद्याविदुषामेव सर्वथा प्राबल्यं सञ्जातम्। परं "चक्रवत् परिवर्त्तन्ते दुःखानि च सुखानि च" अत्रावसरे तस्यादृष्टचक्रस्य विपरीतभागः समुत्थितो बभूव। प्रथमं स्नेहमयी जननी तस्य सहसा सान्निपातिकज्वरेणाक्रान्ता दिवसत्रयाभ्यन्तर एव परलोकमियाय, तदानीं स लवपुरे स्थितः वैद्युतिकवार्त्तावहयन्त्रद्वारा प्रेरित वृत्तमिदं विज्ञाय स्वगृहं प्रति चलितः। आगत्य च निरन्तरसुखहास्यपूर्णं गृहं विषमशोकच्छायामलिनं हाहारवमुखरीकृतं विलोक्य हृदयमस्य विदीर्णमभवत्, मूर्च्छितश्च क्षितितले निपपात। अथ तत्पितामहचरणाः कनीयान् भ्राता चान्ये च स्वजनाः सर्वे शोकविह्वलचित्ता अपि ससम्भ्रमं समेत्य तथाविधं तं जलसेकादिशीतलोपचारेण लब्धसंज्ञं कृत्वा विविधप्रबोधवचनैः सान्त्वयित्वा च कथमपि सुस्थं चक्रुः। अथ यथाविधि स्वर्गताया जनन्याः श्राद्धादिकृत्यं सम्पाद्य मासद्वयं स्वगृह उषित्वा पुनः स्वजनैर्लवपुरे प्रेरितो भग्नहृदयेन दुःखदुःखेनैव स्वकार्य्यमनुष्ठातुमारेभे। ततो मासचतुष्टयान्ते सहधर्म्मिणी चास्य शैशवावस्थास्थितं कन्याद्वयं स्वजनांश्च परित्यज्य परलोकं प्रस्थिता बन्धुवर्गाणां पूर्व्वोत्पन्नं शोकोच्छ्रायं द्विगुणं वर्द्धयामास। एतद्वृत्तमपि तस्मै यथाकालं स्वजनैः प्रेरितं, किन्त्वसौ गृहमनागत्यैव तत्रत्यैर्बन्धुवर्गैः सममहर्निशं शोकोपशमोपायभूतानि बहुविधानि क्रीडाकौतुकानि कुर्व्वन्नगाधं शोकसागरमुत्तर्त्तुमियेष। कालेन लघूभूतश्च प्रथममतिदुःसहत्वेन प्रतीयमानः शोकावेगः सार्द्धैकवर्षान्ते गृहमागत्य पितृपितामहचरणैः सनिर्बन्धमाज्ञप्तः पुनर्दारपरिग्रहं चकार। सा इदानीं तद्गृहस्वामिनी संवृत्ता। तस्यामसौ षट्पुत्रान् कन्याञ्चैकामुत्पादयामास। पुत्रेषु चत्वार एव साम्प्रतं वर्त्तन्ते। ज्येष्ठः श्रीभवभूतिभट्टाचार्य्यः कलिकातागभर्णमेण्टसंस्कृतविद्यालयस्यान्यतमोऽध्यापकः, मध्यमश्च श्रीभवविभूतिभट्टाचार्य्यः कलिकाताविश्वविद्यालयसर्व्वोच्चसंस्कृत (एम. ए) परीक्षायां समुत्तीर्णः। अपरौ तु द्वावनुजाव-

धुना विद्यालये विद्यामभ्यस्यतः । अथ द्वितीयदारान् परिणीय स पुनरेव लवपुरं प्रत्यागतः, पूर्व्वतः सुस्थतरहृदयेन स्वकार्य्यं कर्तुमारेभे ।

अहो दुर्दैवपाकः !

"एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ती" त्येषः

श्लोकस्तस्मिन्नक्षरशो यथार्थीबभूव । ततो वर्षान्ते पुनरेकमात्रस्य प्राणेभ्योऽपि प्रियतमस्य कनीयसो भ्रातुः परलोकप्रस्थानवार्त्ता तदन्तिकमुपगता तं पूर्व्वतोऽप्यधिकतरं शोकविधुरं कृतवती । इत्थमुपर्य्युपरि दुःसहशोकशल्योपहतं तदीयहृदयं नितरां भग्नमभवत् । स सर्वथा निरुत्साहः स्वजीवितेऽपि सम्यक् श्लथादरो बन्धुभिर्मधुरवचनैरहर्निशं प्रबोध्यमानः कथं कथमपि निजकर्त्तव्यकर्माणि निर्व्वाहयामास । समागते तु ग्रीष्मकालीनानध्यायावसरे नितान्तभग्नहृदयेन स्वगृहमाजगाम । अहो यदितः पूर्व्वं नन्दनकाननम् इव सर्वतः सुखकरमासीत् श्मशानमिव महादुःखकरं हाहारवपूर्णमवलोकयामास तद्गृहम् । अशीतिपराणां वर्षीयसां पितामहचरणानां तथा वार्द्धक्यमुपेयुषां पितृपादानाञ्च दुःसहशोकोच्छ्वासविधुरां शोचनीयामवस्थामवलोक्यायं सदुःसहमपि स्वशोकं कथञ्चिल्लघूकृत्य तां पारसान्त्वयितुमारेभे । क्रमेणैताम् कथञ्चित् प्रकृतिस्थान् विधाय पुनर्लवपुरमागतः पूर्व्ववत् स्वकार्य्यमनुतस्थौ । लवपुरे पुनरागमनात् परं वर्षमेकमतीतम् । तदुपरि दुर्ग्रहकोपस्य तथापि न शान्तिरभवत्, प्रत्युत पूर्वतो भृशं ववृधे । ये खल्वेतावत्पर्य्यन्तं वर्षीयांसोऽपि दुःसहशोकावेगविधुरा अपि षोडशवर्षीययुवान इव शोकविधुराणां शेषपरिजनानां प्रधानावलम्बनभूता आसन्, येषां महार्घोपदेशवचनपरम्परया निगृहीतोपर्य्युपरिसंघटमानसुदारुणशोकावेगाःपरिजनवर्गाः स्वस्वकर्म्मनिरता आसन्, ते परमविद्वांसो ज्ञानवतामग्रेसराः पितामहपादा अस्य द्व्यशीतितमवर्षे वयसि नश्वरमानवदेहं विहाय निर्व्वाणमगमन् । अथ तथा प्रधानावलम्बनभूतानामेकान्तपुत्रवत्सलानां पितृदेवानामन्तर्धानेन प्रथमत एव निरन्तरातिविषमशोकापातभग्नहृदया वीतधैर्य्याः पितृपादा अस्य अनाथा इव असहाया इव अवसन्नहृदया निश्चेष्टा निरुत्साहा दुःखदुःखेन समयमतिवाहयितुमारेभिरे । तेषां तथाविधं दशापरिणाममवलोक्य तान् विहाय तथातिदूरदेशेऽवस्थानमात्मनो भविष्यदुन्नतिपरम्पराकारणमपि नास्मै रोचते स्म । प्रथमं पितृचरणान् स्वकर्मस्थाने नेतुकामः तं सन्निर्व्बन्धमनुरुरोध, न तु तेभ्यः प्रस्तावोऽयं रुरुचे । अत्रावसरे कलिकाताराजकीयसंस्कृतपाठशालायां संस्कृताध्यापकपदमेकं शून्यमभवत् । तदानीन्तनतद्विद्यालयाध्यक्षेण महामहोपाध्यायेन महेशचन्द्रन्यायरत्नेन सममस्य पूर्व्वतएव प्रगाढपरिचयः स्थितः । सोऽपि तस्मिन् विशेषेण स्नेहवानासीत् । तेन चास्य समीपे तत्पदग्रहणं प्रस्तुतम् । सोऽपि तथाभूतपदग्रहणं स्वोन्नतिप्रतिबन्धकीभूतं जानन्नपि तदानीन्तनावस्थोचितं मन्यमानो बन्धुवर्गैर्भूयोभूयो निषिध्यमानोऽपि प्रबोध्यमानोऽपि स्वोन्नतेः पितृशुश्रूषां श्रेयसीं विचिन्त्वानः पदमेतदङ्गीचकार । एतावानेवास्योन्नतिसमयः । अथाधःपतनसमयसमारम्भः । अत्रमेतदाख्यानद्वारा पाठकानामस्योपर्य्यनादरोत्पाद-

नेन। स्वदेशागमनाद्दशवर्षान्ते पितृचरणा अस्य स्वर्लोकमारूढाः। ततो विपुलसंसारभार एकाकिनस्तस्योपरि पतितः। किन्तु स स्वभावसिद्धासीमसहिष्णुतया सुदक्षकर्णधार इव बहुविघ्नादिपरिवृतं संसारार्णवं सुखमतरत्। अविचलितधर्मबुद्ध्या कर्त्तव्यमार्गात् कदापि न भ्रष्टः, सुदृढशास्त्रप्रत्ययेन प्रभूतार्थलालसामप्यगणयित्वाशास्त्रीयविषयेषु कदापि न पदं चकार। कालक्रमेण वृद्धत्वमापन्नः चिरराजसेवालब्धां पेन्सनाख्यवृत्तिं लब्ध्वा वर्षचतुष्टयमात्रं तामुपाभुंक्त। तदर्थस्य अल्पत्वेऽपि स्वकीयकर्तव्यपथात् लेशमात्रमपि न स्खलितः, चिरलालितस्य विद्योदयाख्यस्य संस्कृतमासिकपत्रस्य प्रकाशनञ्चावरोद्धुं न शशाक।

पण्डितश्रीहृषीकेशशास्त्रिणश्चरितप्रसङ्गे तदानीन्तनप्राच्यप्रतीच्यविद्यालयाध्यक्षस्य पञ्जाबविश्वविद्यालयरेजिष्टारपदमलङ्कुर्व्वतः डाक्-र डि, डब्ल्यू लिटनारमहोदयस्य विद्वज्जनादराश्रितवत्सलत्वगुणग्राहित्वादिधर्म्माणामनुल्लेखेन न केवलं चरितमिदम् असम्पूर्णं तिष्ठेदपितवश्यकर्तव्यपालनजनितो महानधर्म्मोऽपि भवेदिति विविच्य चात्र महात्मनस्तस्यापि किञ्चित् कथ्यते। स हि महात्मा न केवलमाङ्गलभाषाभिज्ञानामग्रणीरासीत्, परं ग्रीक्लाटीनफ्रेञ्चप्रमुखासु प्रतीच्यभाषासु विशेषाभिज्ञता-सम्पन्न-स्तथारव्यपारसीकपोस्तोदुर्दू हिन्दीप्रमुखासु भाषास्वपि तत्तद्देशजात इव सम्यक् व्युत्पत्तिं लेभे, भारतवासिनां सर्व्वविधसमुन्नतिकामः प्रकृतबन्धुरभवत्। तस्यैव महात्मनः अविश्रान्तप्रयत्नेन समुचिताभिश्चेष्टाभिश्च पञ्जाबविश्वविद्यालयस्य प्रथमाविर्भावः सञ्जातः। पञ्जाबविश्वविद्यालयसूत्रपातादनन्तरमेवासौ कस्मिंश्चित् रहस्यभूते कर्म्मणि दौत्यकर्मकरणाय सर्वप्रधानराजपुरुषेण भारतभूमेः पाश्चात्यसीमान्तेषु प्रहितोऽभवत्। ततश्च शास्त्रिणः प्रथमलवपुरगमनावसरे नासौ महात्मा तत्र स्थितः। पियारसननामधेयः कश्चिदपरश्वेताङ्गस्तदानीं तत्कर्माण्यनुतिष्ठति स्म। विद्वत्कुलधुरन्धरोऽसावपि प्रथमक्षणादेव शास्त्रिणि विशेषतः प्रीतिमान् सानुग्रहदृष्टिश्चाभवत्, चकार च शास्त्रिणं प्राच्यविद्यालयसंस्कृताध्यापकपदे स्थापयितुं महान्त प्रयत्नम्। तदीयेनानुग्रहेणैवास्य तत्पदलाभे कृतकृत्यता सञ्जाता। अथ डाक्तरलिटनरमहोदयो यदा तदागन्तुककर्माणि साधयित्वा लवपुरं प्रत्यावृत्य स्वपदं पुनरधिचकार, तदा पण्डितोऽसौ प्राच्यविद्यालयसंस्कृताध्यापकपदे स्थितः। डाक्तरलिटनरमहोदयस्य तु स्थितेऽपि भारतवासिनामुपरि निरतिशयप्रेमणि पाश्चात्यशिक्षाविकृतमस्तिष्केषु वङ्गदेशीयेषु काप्यप्रीतिः स्वभावत एव स्थिता। ततश्चासौ निजाधिकारान्तर्गतविद्यालये वङ्गदेशीयं तमध्यापयन्तमवलोक्य तदुपरि दर्शनक्षण एव सावज्ञदृष्टिं निक्षिप्य तेन सहानादरव्यवहारं कृतवान्। किन्तु तथाविधानादरभावो न चिरस्थायी बभूव। स्वल्पीयसैव कालेनेतरपण्डितासुलभानां तदीयासाधारणगुणगणानां परिचयं प्राप्य न केवलं तिरोहितस्तदुपरि सावज्ञभावः, प्रत्युत परस्परेण समं बन्धुत्वं प्रादुर्भूतम्। ततः प्रभृति निरन्तरमेव पण्डितस्यास्य समुन्नतये स्वयं चेष्टते स्म। सर्वेष्वेव स्वकर्मसु तमन्तरङ्गं कृतवान्। तेन सहामन्त्रणमन्तरेणासौ विद्यालयसम्बन्धि किमपि कर्म न चकार। शास्त्रिणो लवपुरसम्बन्धत्यागात् मासद्वयपूर्वं निरवकाशविश्रान्त-

परिश्रमेण डाक्तरमहोदयस्य स्वास्थ्यभङ्गः संवृत्तः । येनासौ वर्षद्वयं यावत् स्वकर्मतो विश्रामं लब्ध्वाङ्गलभूमौ गतवान् । स चेत् तदानीं लवपुरे अस्थास्यत्, तदा शास्त्रिणं कथमपि स्वदेशमागन्तुं नान्वमंस्यत् । यतोऽसौ स्वदेशयात्रायाः प्राक् राजकीयप्रतीच्यविद्यालये (Lahore Government College) तदानीं वर्त्तमानस्य संस्कृताध्यापकस्य पेन्सनाख्यवृत्तिप्राप्तिसमयमदूरभाविनमवलोक्य तत्पदे शास्त्रिणं स्थापयितुं तदानीन्तनप्रधानराजपुरुष न् सनिर्बन्धमनुरुध्य स्वदेशं गतवान् तैश्च तत्तथैवाङ्गीकृतम् । किन्तु—

"प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहु साधनता ।

विदितैतत्सर्ववृत्तान्तोऽपि दुर्ग्रहकुटिलकटाक्षविषयीभूतः शास्त्री त्वरितत्वरितं स्वदेशमागत्य तदर्थं दुर्ग्रहैः सङ्घटितं पदं जग्राह । नात्मप्रतिष्ठां न भविष्यदुन्नतिपथानर्गलतां, न डाक्तरमहोदयस्य तदुपरि निरतिशयस्नेहान्, नापि पञ्चनदे निजप्रतिष्ठामुख्यसहायभूतस्य रायश्रीनवीनचन्द्रस्य सनिर्बन्धमनुरोधं विगणय्य स स्वदेशमेवागतः । अथ वर्षद्वयान्ते लिटनारमहोदयः शास्त्रिणमवलोक्य निरतिशयं चित्तक्षोभमवाप । स स्वयमविलम्ब्य कस्यचिदावश्यककर्मणो व्यपदेशेन तं प्रत्यावर्त्तयितुं कलिकातानगरे समेतः तस्मै प्रस्तुतराजकीयप्रतीच्य विद्यालयसंस्कृताध्यापकपदेन समं पञ्चापविश्वविद्यालयसहकारिरेजिष्टारपदमपि दातुमङ्गीचकार । शास्त्री च स्वजनहस्तेषु वृद्धानामसहायानां शोकाविधुराणाञ्च पितृचरणानां रक्षणावेक्षणभारं सानुनयं विन्यस्य पञ्चनदाभिमुखं पुनश्चलितः । किन्तु मासाधिककालं तत्र स्थातुं न शशाक । विरुद्धग्रहा हि तदुन्नतिप्रतिबन्धस्य नोपायान्तरमवेक्षमाणाः तस्य शरीरे दारुणजीर्णज्वररोगस्य सञ्चारं कृतवन्तः । येनासौ प्रत्यहं प्रतिक्षणं परिक्षीणशरीरधातुरात्मनो मृत्युं प्रतीक्षमाणस्तस्थौ । लिटनारमहोदयस्तु तस्य तादृशीं शरीरावस्थां विलोक्य तमधन्यानामग्रेसरं स्पष्टभाषया निर्द्दिश्य तस्यै गमनागमनव्ययव्यपदेशेन मुद्राणां द्विशतीं प्रदाय स्वयमेव स्वांशं प्रस्थापितवान्, किन्तु न तं विसस्मार । कालेन स पेन्सनाख्यवृत्तिं लब्ध्वा स्वदेशं गतोऽपि यावज्जीवं प्रतिमासं विद्योद प्रकाशसाहाय्यार्थमस्मै पञ्चविंशतिमुद्राः प्रददौ । तस्य स्वर्गारोहणादेकवर्षानन्तरं तत्पुत्रेण तद्दानस्यावरोधः कृतः । एतन्मात्रमस्य चरितम् । अथेदानीं तत् कृतानां निबन्धानां नाममात्रेण परिचयं दत्वा प्रबन्धोऽयमुपसंह्रियते ।

किञ्चातः पूर्व्वं तद्गतमवश्यज्ञातव्यं किमप्यन्यदपि प्रस्तूयते, विद्यते किल वङ्गसाहित्यस्य कृतेऽशेषतः कृतप्रयत्नस्य तस्य लोकोत्तरा ख्यातिः । कति नाम स्वनामख्यातानि सामयिकपत्राणि तस्यालौकिकप्रतिभासुषमाकलितप्रबन्धप्रसूनैः मण्डितान्यासन्, कति चाङ्गलसंस्कृतग्रन्थास्तदनुवादालोकं लभमाना वङ्गीयपाठकेषु नलिन्य इव सौरकरस्पर्शात्, कुमुदिन्य इव चन्द्रकिरणावलेपात् विशदा विकसिताश्चैव देदीप्यन्ते, तेषु च वङ्गेषु धर्म्माद्याचारेषु प्रमाणत्वेन गृहीतानां स्मार्त्तभट्टाचार्य्यापरनामश्रीमद्रघुनन्दनविरचितानां "स्मृतितन्त्रनिबन्धानां वङ्गानुवादोऽस्याक्षयकीर्तिमुद्घोषयति, यावदेव वङ्गेषु हिन्दुसमाजः स्थास्यति तावदेवास्य सा कीर्ति-

रक्षुण्णा वर्तिष्यते। समीचीनमेवोक्तं वङ्गीयविद्वत्कुलवरेण्यैर्महामहोपाध्यायचन्द्रकान्ततर्कालङ्कारमहोदयैः शास्त्रिणमुद्दिश्य—"परं हर्षपरम्परापरतन्त्रचित्तोऽयाहं वृत्तोभवत्कृतमनुवादं दृष्ट्वा कतिपयानां तत्वनिबन्धानां, कृत्याऽनया हि भवतोऽस्मत्समाजः स्वयं रघुनन्दनादपि भवत्सविधे चिरं कृतज्ञताकलितः स्थास्यति, यतोह्येतावत्कालं दुर्गमसंस्कृतेन निबद्धतया ते ते प्रबन्धाः साधारणजनहृदयेष्वनारूढपदा, सुष्टिमेयविद्वन्मात्रालोचनविषया एवासन्, अधुना तु ते भवतः सरलप्राञ्जलभाषानुवादेन सम्यगुन्मीलिता इव विकसिता इव प्रस्फुटिता इव निखिलवङ्गवास्तव्यानां मनःसमाकर्षणसमर्था भवेयुः, भवेदमीभिश्च कानाम परोपकृतिः समाजस्याधुना प्रबलधर्म्मविप्लवसंक्षोभकरेऽस्मिन् दुर्दिने" इति। एवं हि बहुधा वङ्गभाषा तदुपचारात् परं सम्भाविता लोकलोचनेष्वभूतपूर्वां श्रियं धत्ते। वङ्गेषु न कोप्यस्ति यो न जानाति तस्य सुप्रथितं नाम। सुविरला एव जना जायन्ते ये नामैवं ख्यातिं लभन्ते। अस्य च बहवोऽन्तेवासिनो देशेषु प्रख्याताः केचिच्च तेषां महामहोपाध्यायपदसमलङ्कृताश्च सञ्जाताः येषां खलु कलिकाता-संस्कृतविद्यालयप्रधानाध्यापकमहामहोपाध्याय-श्रीप्रमथनाथतर्कभूषण, पण्डितप्रवरनानादर्शनपरमाचार्य्य—श्रीपञ्चाननतर्करत्न—पण्डितप्रवरश्रीदुर्गाचरणवेदान्तशास्त्रि—पण्डितप्रवरश्रीवीरेशनाथकाव्यतीर्थप्रमुखाः अध्यापनकर्म्मणि वङ्गेषु परां प्रतिष्ठामापन्नाः।

प्रचरतितरां विमलशशधरकरोज्वलं श्रीमद्धृषीकेशशास्त्रिणां यशो निखिलभारतेषु, मन्ये बाणभट्टाद्यु पभुक्तयशसो न कथमपि तल्लघीयः। बाणभट्टरचनारीत्या तल्लेखनपद्धतिं तुलयद्भिर्गुणग्रहणैकव्रतधरैः सुदूरहरिद्वारान्तर्गत—ज्वालापुरस्थमहाविद्यालयाध्यापकान्यतमैर्विद्वद्वरैः श्रीमद्भिः पद्मसिंहशर्म्मविद्याविनोदमहोदयैः सुष्ठु खलु विचारितम्,—

"निबन्धानेतानवलोक्य न केवलं जीवति खलु संस्कृतभाषेति प्रत्ययः सुदृढो भवति, सन्तीदानीमपि बाणसरणिमनुसर्तुं तदतिशयितुञ्च शक्ता लेखकधौरेयाः ये हि स्वप्रतिभाबलेन नवनवान् प्रकारानुद्भाव्य गद्यकाव्यानां ह्रेपयन्ति "निर्जीवासंस्कृतभाषे" तिवादिनः समुल्लासयन्ति साहित्यचन्द्रचकोरचेतांसि, प्रीणयन्ति विबुधजनमनांसि प्रकाशयन्ति चात्मनोऽसाधारणं वैदग्ध्य, संस्कृतानुरागश्चेत्यादि विचारपरम्परा विचक्षणसहृदयहृदयमधिकुर्व्वन्ति। आबाल्याद्धीयाना वयं विद्योदयं नितरां निर्वृतिमाप्नुमः, निर्व्याजं कथयामश्च कादम्बरीप्रणेतुर्वर्णनशैली यदि केनाप्यंशेन क्वाप्युपलभ्यते, तर्हि विद्योदयसम्पादकनिबन्धेष्वेवेति। अतएव सत्त्वेयोष्याः खलु विद्योदयतत्त्वाद्दृक्लोकोत्तरनिबन्धपिपठिषवो जनाः। प्रकाशनीया च जन्मान्तरापन्नबाणश्रीहृषीकेशमहाविदुषां यशश्चन्द्रिका, यदालोके सञ्चरन्निदानीन्तनसंस्कृताध्येतृवर्गो न प्रस्खलेत् रचनाभ्यसनमार्गे" * * * * इति विचारयद्भिरस्माभिर्निबन्धानामेषां प्रकाशनं सर्वात्मनाभिनन्दितमेव।"

श्रीमद्विद्याविनोदमहोदयाः शास्त्रिणां संस्कृतनिबन्धेषु एतावत् पक्षपातिनः सञ्जाताः यद् विद्वत्सकाशे तान् निबन्धान् प्रकाशयितुकामाः स्वयमेव तान् संगृह्य स्वव्ययेनैव मुद्रयितुमारेभिरे। किन्त्वहो दैवदुर्विपाकः! पूजनात् प्रागेव स्वनिलयं

प्रस्थिताभीष्टदेवता ! परमभक्तानां सभक्तिप्रदत्त-बलिं—मुद्रितात्मनिबन्धपुस्तकमद्गृहैव गतास्ते महापुरुषा देवनिलयम् । अतीव कुक्षण एव मार्गशीर्षमासीयपञ्चदशरजनी प्रभाता यस्मिन्नेव दिवसे अन्तकेनेव प्रबलज्वरेण ते आक्रान्ताः । स ज्वरः क्रमशो जटिलतामापद्यमानो दारुणसान्निपातिकविकारेण परिणतः सुदक्षभिषक्चेष्टा अपि विफलाश्चकार, येन मार्गशीर्षमासीयत्रयोविंशवासरे विहाय नश्वरदेहं अविनश्वरयशसः शास्त्रिणः प्रमुक्तकण्ठं रोरुद्यमानान् परिवारान् प्रबलशोकपीडितानगण्यबन्धुमित्रशिष्यांश्च परित्यज्यामरधाम प्रस्थिताः ।

तत्कृतसंस्कृतपुस्तकानि ।

(१) सुपद्मव्याकरणव्याख्यानम् ।
(२) कवितावली ।
(३) राजपुत्रागमनम् । ( अधुनादुर्लभत्वमाप्तम् )
(४) प्राकृतव्याकरणम् । (इंरेजी-अनुवाद-सहितम्)
(५) संस्कृतश्रुतबोधः ।
(६) प्रबोधचन्द्रोदयनाटकव्याख्या ।

तत्कृतहिन्दीपुस्तकानि ।

(१) छन्दोबोध
(३) अर्थसंग्रहानुवादः
(४) दत्तकचन्द्रिकानुवादः
(५) हिन्दीव्याकरणम्

} एतानि लवपुरे लालामिहिरचन्द्रेण प्रकाशितानि इदानीं लभ्यानि न वेति न ज्ञायन्ते ।

तत्कृतवङ्गभाषालिखितपुस्तकानि ।

(१) उद्वाहतत्त्वानुवादः ।
(२) तिथितत्त्वानुवादः ।
(३) प्रायश्चित्ततत्त्वानुवादः ।
(४) श्राद्धतत्त्वानुवादः ।
(५) मलमासतत्त्वानुवादः ।
(६) शुद्धितत्त्वानुवादः ।
(७) मेघदूतपद्यानुवादः ।
(८) शाण्डिल्यसूत्रभाष्यानुवादः ।

शास्त्रिणां मृत्युसंवादं यानि वङ्गीयप्रसिद्धसामयिकपत्राणि घोषयामासुः, अत्र प्रसङ्गे तेषामनुल्लेखेन चरितमिदमसम्पूर्णं तिष्ठेदिति एव तेषां कतिचिदुल्लिख्यन्ते—

Statesman :—The famous Oriental Scholar late of Lahore and Calcutta Sanskrit Colleges, and Editor Vidyodaya of Bhatpara, Pandit Hrishikesh Shastri breathed his last at his residence (Bhatpara) on the 9th. Instant at the age of 65. He had a profound knowledge of all branches of the Sanskrit Shastras and edit d and compiled innumerable works in Sanskrit, Bengali and Prakrita.

Daily news :—Death of a Pandit. A correspondent reports that Pandit Hrishikesh Sastri, who was a famous oriental scholar late of the Lahore and Calcutta Sanskrit Colleges and Editor "Vidyodaya" of Bhatpara died at his residence at Bhatpara on the 9th instant at the age of 65.

Englishman :—The death took place on Tuesday of Pandit Hrishikesh Shastri, the famous Oriental scholar at his Bhatpara residence. Pandit Hrishikesh was 65 years of age and was a recognised authority on Sanskrit literature. He was Professor of the Calcutta Sanskrit College at the time of his death. Formerly he held a

similar appointment in the Lahore Sanskrit College. He was the author of several standard works in Sanskrit, Bengali, Hindi, and Prakrita and editor of the Vidyodaya, pulished at Bhatpara. By his death Oriental learning loses one of its most profound scholars.

Empire :–Pandit Hrishikesh Sastri, the wellknown oriental scholar, late of Lahore and Calcutta Sanskrit Colleges and Editor of " Vidyodaya " of Bhatpara, breathed his last at his residence ( Bhatpara ) on Tuesday at the age of 65. He had profound knowledge in all branches on Sanskrit Shastras and edited and compiled innumerable works in Sanskrit, Hindi, Bengali and Prakrita. His loss is irreparable in the Oriental linguistic world.

Telegraph :—Pandit Hrishikesh Shastri at first professor sanskrit Oriental College, Lahore and then of the Government sanskrit College Calcutta, died on Tuesday last at Bhatpara at the age of sixty five. His marvellous command over many languages extorted admiration even from many a European scholar of distinction. His ably conducted 'Vidyodaya," a monthly sanskrit Magazine of merit, the first of its kind in India, having a circulation even to England and Germany, has at present been running in its forty third year, an age seldom attained by any oriental magazine. His works in the field of Sanskrit, Bengali and Hindi literature are as meritorious as they are numerous in short, as an oriental scholar, he was one of the most luminous of the galaxy of stars that have even now been shining in the literary firmament of India with the waning lustre of sanskrit learning. What is more, he was a pious and orthodox Hindu possessing independence of opinion and strength of mind not to be overpowered by the inducements and temptations of pecuniary interests at the sacrifice of his religion and conscience. Bengal is today much the poorer at the loss she has sustained by the death of Pundit Hrishikesh Shastri, as a man of his type, at once uncovetous and strong-minded, is a rare object in our society now-a-days.

* प्रसङ्गेऽस्मिन्नेतदप्यवश्यं वक्तव्यं यत् शास्त्रिणां परलोकगमने वङ्गीयसाहित्यपरिषदेकशोकसभामाजुहाव । यत्र सभापति-महामहोपाध्याय-श्रीयुत-हरप्रसादशास्त्रि सि, आई, इ, महोदयः शास्त्रिणां लोकातिगपाण्डित्यं विनयसौजन्यादिकविविध-सद्गुणराशींश्च सम्यक् समालोच्य तस्य प्रतिभामयजीवितस्य घटनावलीम् एकैकशः समुल्लिख्य चाज्ञापयत् शास्त्रिणां वियोगे वङ्गमातुरेकः सुसन्तानो नष्ट इति । समवेतसभ्यजनास् तत्र शास्त्रिण उपलक्ष्य गभीरशोकं प्रकाश्य तेषां शोकार्त्तपुत्रेभ्यः गभीरसहानुभूतिसूचकं पत्रमेकं प्रेरयामासुः ।

* वङ्गाक्षाराणामत्राभावान्न वङ्गीयपत्रैः प्रकाशितं शास्त्रिमहोदयस्य शोकवृत्तान्तमत्र पाठकेभ्यः समुपहर्तुं प्राभवम् । ( शा० सं० )

## पद्मावती-परिणयचम्पूः

[ श्रीमता महामहोपाध्याय रघुपतिशास्त्रिणा निर्मिता ]

उपसृत्य च परिलसन्मालूरतोरणराजिभिः स्फुटीभवन्मारकताभं नक्तेशमौलिमपि राजराजप्रीतिभाजं ग्रीवायामसितमपि असितं सर्वावयवेषु गोचरमप्य गोचरं दुष्कृतादृशां विषममपि चतुर्थपुरुषार्थप्रियं शेषपरिचितमप्यशेषदेवेशं गानमाकान्तमपि विगानबहिर्मुखं पञ्चमुखमपि प्रपञ्चविमुखं वामीकृतप्रियमपि वृषभवाहं नागेन्द्रहारमपि मुक्ताहारसेव्यमनवरत वारासारस्तिमिताकारमपि दहनमूर्तिं पाण्डुरेणाघघनेन शरदं जटाकलापेन हिमं भालदेशेन शिशिरं विप्रप्रत्यर्पितप्रत्यग्रमालतीकुन्दकुमुदकल्हारकैरवकुरवकाशोकदामभिः कुसुमसमयं तृतीयेन विलोचनेन निदाघमनस्तमितरजनिरमणमणिनिर्झरधाराभिः प्रावृषं सभाजयितुं यौगपद्येनागतानिव मानयन्तं स्मितेन सम्भावयन्तं स्फटिकमणिशिलानिर्मितलिङ्गमधिकृतप्रकाशं कोटिकलानिधिनिकाशं प्रसन्नदृगम्भोजप्रक्रियाभिः पूरिताकाशं साधितगिरिकन्यकासकाशमनवकाशं श्रुतीनां शैलमानन्दसुतीनां पिनाकपाणिमद्राक्षीत् । सरभाद्दष्टाङ्गस्पृष्टभूपृष्ठं दण्डवत्प्रणिपत्योत्थाय च प्रह्वः पुटितपाणिः प्रार्थयामास ।

शम्भो भूतदयानिधे निरवधे
　　चैतन्यभृच्छेवधे
प्राप्तस्याचिरात्म-
　　पादसविधे भक्तैनसां संविधे ।
दत्तस्यान्तनितान्तकान्त-
　　पारितोदान्तश्रियां गोचर-
कान्ताशान्तकृतान्तकान्तकिरण
　　ग्रस्तं प्रभो पाहि माम् ॥ २६ ॥

जय कामारे जय कामारे
　　निभृतं क्षिप्तो बहिरयं
जनताऽऽपायप्रभुनापाय-
　　प्रेत्यादायावति निरयम् ।
तमनमदीनमदोजोधायक
　　कायकपाटविपाटनतः
किमिति कृतं सुकृतं किल तत्स्या-
　　द्विरमतु यत्सदुपाटनतः ॥ २७ ॥
क्रियन्ति कुर्यां नियतो न मांसि
　　स्मरावदातानि यतो नमांसि ।
मनोऽपि तादृङ् मम विद्यते न
　　स्तुयां कथं भो विषमाक्ष तेन ॥२८॥
विधेये विधेया कृपा स्वामिनेति
　　श्रुतेरर्थमुच्चैर्भवानन्वमस्त ।
तमाश्रित्यदासे सदासेवकेऽस्मिन्न-
　　मोघेप्रभो नामनी स्वे कुरुष्व ॥२९॥

सविनयमित्थमशेषेशेन शेषशायिनाऽभ्यर्थितो व्योमकेशाऽपाङ्गतरङ्गिताभिर्वीचीभिरानन्दमये सरस्वति प्लावयन् करकमलोत्फालितपूरितपाणिपल्लवपुर श्रीपतिं स्वप्रसादलक्ष्मणाऽऽङ्कयन् व्यसनवारया कुबेरकथाकुतुकाऽऽकुल आलोकसरणितः क्षिप्रमन्तरितमात्मानं दूरयांबभूव । प्राप्तप्रसादश्च मनोऽवसादं तिरयन्नचिरयन्मङ्गलं गणयन्नहोदेवाधिदेवस्य चन्द्रशेखरस्य प्रपन्नवत्सलतां यदेकपद एव दृष्टमात्रस्त्रिविधं तापमपाजहारात एव महादेव इति गीयत इति भावयन्नेव मदनकदनसदनतः स्वं बहिः प्रापयामास ।

बहिः प्राप्य पश्यन्नपश्यन्तमोज-
　　स्तडित्संहतीनां मनः सन्धिबन्धम् ।

कुमारीगणं तासु मध्येस्फुरन्तीं
वसन्तश्रियं रूपिणीं काञ्चिदार्च्छत् ॥३०॥

किञ्चित्पुर उपसृत्य
प्राघुणिकीभूय भूतपतिभवने।
श्रीपतिरवलोक्य स्त्रीं
श्रीरिति मेने ननन्द चात्यर्थम् ॥ ३१ ॥

अपरिचितां मनुजनुषाऽ-
नूढतया भूयसी धुरं गतया।
निर्वर्ण्य सोऽवरुद्धां
चिरं चिचाय स्मराङ्कयं भूयः ॥ ३२ ॥

अथानुयोगं प्रति कैटभारिः
करोति कामं कुतुकेन यावत्।
तावत्स ताभिर्ददृशेऽबलाभि-
राश्चर्यविस्फारितवीक्षणाभिः ॥ ३३ ॥

अहो अहो कोऽयमहोऽभिरामं
महोम्भिरामन्त्रितकोटिकामम्।
तन्वन्नतन्वञ्चितकान्तिराहुः
किमेतमिन्दुं पुनरेति राहुः ॥ ३४ ॥

यदि भानुमान्न स शीत-
गुर्यदि वा विधुर्न दिवोदयः
किमु युक्तिभिः कमनीयता-
भर एव भेदकतापरः
उदपादि येन विरञ्चिना
सुदतीसखी न इयं यथा
निरमायि तेन परः पुमान-
नुरूपसम्पदसौ किल ॥ ३५ ॥

इति सरभसमालापशालिनीनां विलासिनीनां वचसा साचीकृतग्रीवमावर्जिताङ्गयष्टिरलिकपल्गुदृग्विभ्रममनभ्रसुधावर्षं किं किमितिगर्भित-हर्षं व्याहारपराकरपरागपूरितवयस्याज्यरावतं। सा हंसाकर्षणचटुलचरणावीषदुत्क्षिपन्ती तां दिशमाकलयांचकार यामशिश्रियच्छ्रीनिवासाभिधानो महानिधिः। अटव्यटनखेदादिव परभागं गतयाऽरुणतया भक्तानुरक्ततां कलयता तलयुगलेन शोभितमेकादशानामपि रुद्रमूर्तीनां शशिशकलमौलितां भालयितुमुत्पादितान् दशेन्दूनत्युच्चपदप्रापणोपकारमाननेनानवरतं नखस्थितया न स्वरूपेण सेवमानान् भावयन्तं प्रकटशिलीमुखमुखौ सव्यसाचिनः स्मरस्य निषङ्गाविवोदितपञ्चाङ्गुलीके परिस्रवल्लावण्यप्रणालीभूतकनककाण्ड इव जङ्घयेत्तरणभयादिव बद्धगुल्फग्रन्थिरचने प्रकाशयन्तं पद्मभूप्रभवप्रभूतप्रभावप्रभावनप्रभुवापिकावारिसंवारिस्तम्भाविवोरू धारयन्तं कनककिङ्किणीकणनकलकलितनाभीह्रदे जगन्ति जरयन्तं पीतपटपुटितकटितटविलसद्वनमालया पुरुषायितं पद्मायाः पल्लवयन्तं कौस्तुभमणिव्याजतः सत्वगुणप्रधानतां प्रथयन्तं व्यथयन्तं महांसि श्लथयन्तमंहांसिस्तनांकिणेन परिणाहिना श्रीरङ्गाङ्कणेन श्रीवत्सलक्ष्मणा करुणाकामगवीवत्सेन वत्सेन विभ्राजमानं शेषस्पर्द्धयेव भुवनभरधारणायायतौ बाहू पञ्चानां महाभूतानां प्राणानां च पृथक् प्रार्थितकल्पपञ्चशाखौ धृतदशनखाब्जावव्यब्जद्वयशोभिनौ चक्रधारकावपि परचक्रविदारकौ जगदगदङ्कारावपि सगदौ मुहुरीक्षमाणं कमलकमलारुन्तुदेन चन्द्रमोविधुन्तुदेव वदनेन काममपि परमां पुष्यन्तमीक्षणाभ्यां पुष्यवन्तौ श्लिष्यन्तमति सुभगललाटतटमनञ्जुनीलालककलितकिरीटकोटिं कोटिकन्दर्पलावण्यं कविवचोदवीयसं यवीयसं कमपि कमनीयाकृतिमवलोकयांचकार दिव्यपुरुषम्।

द्वेोऽपि दिव्याकृतिमीक्षते स्म
तामीक्षयैवाहृतसर्वभावाम् ।
भावान्तरप्राणपटुं चकार
स्वे चेतसीदं किमदृष्टपूर्वम् ॥ ३६ ॥

किं कुन्तला अमी किं वा कमलालिङ्गिनोऽलयः ।
अभिचन्द्रं तमोबाधाऽगाधा किमनुधावति ॥ ३७ ॥
अङ्गिनालिककस्तूरी पङ्करसङ्करमङ्कनम् ।
अथवा द्विजराजस्य माननायकलङ्कनम् ॥ ३८ ॥
कुङ्कुमान्तरिते नीले स्निग्धे वा भवतो भ्रुवौ ।
सन्धितारुणकह्लारकुसुमेषुधनुः किमु ॥ ३९ ॥
अध्यासामासतुर्नासामिषुधी किं ससायकौ ।
चेतोभुवो जगज्जेतुमात्तदीक्षे किमक्षिणी ॥ ४० ॥
द्विजद्युतिस्मितकलाकवलीकृतरागयोः ।
आभैषाधरयोः सान्ध्यावष्टमीन्दू अनूहते ॥ ४१ ॥
कुण्डलालङ्कृते एते श्रुती किं जीवभार्गवौ ।
श्रयतो रूपनरूपन्ने तन्त्रिते बालरक्षसः ॥ ४२ ॥
बाहूयुवाहूतिचटूमृणालप्रियतापटू ।
फणपाणी किमु बद्धू वासुकेरदितावद्धू ॥ ४३ ॥
रक्षोविक्षोभकस्यापि मम सङ्क्षोभकारणम् ।
अधिवक्षोऽवधिः क्षोदलम्पदोऽक्षोदयैकदिक् ॥ ४४ ॥
उदरं क्षुदरम्भावभित्तिभाति किमन्तरम् ।
गण्डशैलनितम्बानां बद्धसोपानभूमिकम् ॥ ४५ ॥
ऊरू किमिन्दुजित्त्वर्या वदनेन विराजतः ।
नाभीह्रदप्रतीरोद्यत्कदलीव्रततिद्वयम् ॥ ४६ ॥
चरणौ किं वितरणौ कलहं कलहंसयोः ।
वासार्थिनोः सरोजाते मकरन्देन तुन्दिलैः ॥ ४७ ॥

एवमन्योन्यमतिकौतुकेनेक्षमाणयोः शिक्षमाणयोः पञ्चशरसमरक्रमरभसश्रमरससेवनमजनि काऽपि दशा कशाघातलमुद्यज्जवबन्चूर्तिचणचरणयोर्वरकिशोरयोरिव वर्णानीयतमा । जडाविव शून्याविव ग्रहग्रस्ताविव मूकाविव बधिराविव क्षणमलक्ष्येतां तौ मतौ यमिनां गतौ दमवतां धुर्यपदमभ्याशवर्तिना जनेन । श्रीनिवासस्तु पौरुषेण कथञ्चिदवलम्ब्य धीरतां जलकणक्लिन्नकण्टकितकायः स्वरं साधयन्नाराधयन्कष्टमस्पष्टवर्णमचीकमत किञ्चिदपि वच उच्चारयितुम् ।

नितम्बिन्यो यूयं वदत वदत स्थ द्युतिभर-
क्रमाक्रान्ताशाः काः कुत इह वने सञ्चरत च ।
इयं का वा धन्या जयति मनुजन्याधिसुषमा-
भुवं वन्यावन्या अनुवहति देवीत्वपदवीम् ॥ ४८ ॥

इत्थमत्यर्थमायासेन कथं कथमपि पञ्चषाणि वाक्यानि कथयति कमलाकान्ते प्रान्ते क्लान्तेङ्गितां वयस्यां विलोकयन्त्यो वृथा व्यथापथाद्गतसञ्चारां विचारान्तरं चिन्तयन्तीं मन्त्रयता मनसा दूयता हृदयेन क्लाम्यता वदनेन निष्क्रियेण पाणिपादेन स्थगितामिव सुप्तामिव मत्तामिव कीलितामिव स्मरशिलीमुखशङ्कुभिः सम्भावयन्त्यो विस्तरेणोत्तरदानाय मञ्जुघोषां नाम राजदुहितुरन्तरङ्गपरिचारिकां प्रार्थयांचक्रुः सुन्दर्यः । सा च राजकुमारीचित्तरङ्गचरी सहचरी वक्तुमुपक्रान्ता तदभिमुखी प्रससार ।

## चतुर्थः स्तबकः ।

देव, श्रूयतां यदि कौतूहलं नोवृत्तान्तमवगन्तुम् । अस्ति भुवनत्रयप्रथितमहिमा हिमालय इवार्यावर्तसीमावलम्बनं विन्ध्याचल इव पराभूताखिलभूभृत् पुरन्दर इव स्वरुच्छायः पयोधिरगाधतायां पृथिवी सहिष्णुतायां कल्पपादपः परोपकृतौ सुकृतौ समुत्पादितशरीरः सोमवंशप्रसूतिः सकलभूमण्डलसामन्तकिरीटकोटिसभाजितपदनखेन्दुराकाशराजो नाम भुवनपालः । तस्य च प्रजापति-

शिल्पकलाकुलकुलायः पतिव्रताभवधूर्वहा वधूः कौमुदीव चन्द्रमसः सर्वाङ्गसुन्दरी धरणी नाम त्रिवर्गसाधनम्। तयोश्च द्यावापृथिव्योरिव यशोभिर्विष्टपत्रयं धवलयतोरलौकिककेलाभिः क्रीडतोरतिचक्राम यौवनं न पुनरपत्यं प्रादुरासीत्। ततश्च तयोरसमानयोरपि दूयमानयोः प्राग्भवीय-दुरितदूरीकरणाय गुरुरध्वरचर्यामादिदेश। अथोपाध्यायादिष्टो भूपतिः कनकहलेन भूमिं मार्जयन्नकस्मादेव ततो महीप्रदेशादुद्भूतां दिव्याकृतिं कन्यामद्राक्षीत्। विस्मयस्तिमितमनाश्च विचारयति यावत्तावदेवान्तरिक्षगता दुन्दुभिध्वानैः सममश्रूयत वाक्।

आकाशराजेमां कन्यां गृहाणास्याः प्रसङ्गतः।
श्रेयोऽतुलं प्स्यसे भूयो नन्दनं वंशवर्द्धनम् ॥१॥

गुरोरमोघसङ्कल्पतया स्वीयात्पुण्यपरिणामाद्-व्योमवाण्याः सत्यतया च स राजाऽपत्यरत्नमण्डितः पण्डिताग्रणीर्धरणीसम्मतेनेमां दुहितृत्वे प्रतिजग्राह, सुतनिर्विशेषं च पालनलालनपोषणादिभिरन्वगृह्णादपरा पद्मेति जानानः पद्मावतीति नाम्नेमां जगत्यप्रथयद्व्यथयच्च रम्भाद्यारम्भप्रतिपन्नगर्वं विधातारम्। अतिक्रान्तशैशवा चेयं किशोरी सममस्माभिः पित्रोरनुमतेह विपिने वसन्तलक्ष्मीविलोकनाय प्राप्तवती, वयं चास्याः सख्यः परिचारिकाः स्म इत्येषाऽयोनिजा सीतेव जनकानन्दहेतुराकाशराजस्य सुतां सुतारनयना विराजतितराम्। श्रीमतस्तावत्कुलं गोत्रनामनी च ज्ञातुमिच्छामो, ब्रवीत्वायुष्मान् यद्ययं जनः श्रवणयोग्यो मतो भवेदेवस्येति ब्रुवाणा व्यरंसीत्। श्रीनिवासस्तु तस्याः सरस्वत्यासरस्वत्यानन्द-मये प्लुत इव किञ्चित्किर्मीरितान्तःकरणोऽभ्यभाषत। अयि सुदति!

न ब्रुवन्ति कवयः स्वयमद्धा-
ख्यातिभाञ्जि कुलगोत्रपदानि।
सन्निदर्शनमदो भवतीनां
स्वामिनी न कलवाचमवोचत् ॥२॥

भवेदसावप्यमनुष्यजन्मा
समुष्यतेऽधिक्षितिहेतुपूर्तम्।
अमुष्यवृत्तान्तमशेषमेषा
विदुष्यलम्भोत्स्यति पञ्चषाहैः ॥३॥

यथा किलास्याः कथिता जनुः कथा
यथा च रम्या कृतिराद्भुता पथा।
दृशोर्ममास्या वलिता मनोरथा-
स्तथानुमन्ये भवितैनया प्रथा ॥४॥

इतिब्रुवाणेन रमाधवेन
पश्चाशुगोज्जासितकायकेन।
परागपावर्तितसैन्धवेन
स आश्रमः क्रान्तधियाभिपेदे ॥५॥

गते च तस्मिन्कुसुमायुधोपमे-
ऽप्रमेयरागादिव साधिताग्राः।
अत्यर्थनिश्वासपरा परागा
उवाच साऽऽक्रान्तमुखोपरागा ॥६॥

स्वप्नः किमालोकि मयाऽत्र सख्यो
ब्रूताभिमुख्यो बत मां न कस्मात्।
न स्वप्नभोग्यानि श्रृतामि तापः
पीयूषगमीवलनादुदेति ॥७॥

पूर्वस्मिन् क्षणआसी-
ज्जगदमृतं सुखमनन्तभव्यपदम्।
तदिदानीं विषमन्ध-
बन्धनमिन्धनमनग्निसर्वगदम् ॥८॥

क यातं दृगम्भोजयोः सिञ्चदश्चत्-
सुधासीकराँश्चेत आह्लादहेतु ।
मनः प्राणजीवानतीवाग्यगृह्णा-
द्यदद्धा मतं धामतन्तौ श्रुतीनाम् ॥९॥

वदत वदत भो भो किं किमेनद्वयस्याः
किमपि मयि मतेयं प्रक्रिया वोनुयस्याः ।
अधिकमधिकपोलं ज्ञातमासीन्न वस्तु
प्रकृतिविकृतिभूत्या आपदा यो न वस्तु ॥१०

विलपन्तीमतिवेलं
कुररीमिव चक्रसहचरीमिव ताम् ।
दत्ततमा योषाणां
मञ्जुलघोषा कथञ्चनावोचत् ॥ ११ ॥

अयि राजतनये विदितनये किमर्थमत्यर्थमनर्थकमायास्यतेऽलैाकिकश्रेयःसम्पद्भाजना पजनोजनोऽधिकतरं किमितिकलुषीक्रियते जगदञ्जनं निरञ्जनं लोचनयुगलं निर्भरनिश्वासाहतिविसंस्थुलो ग्लानिमानीयतेऽधराभोगो विषादेन सुधामहतीमारोप्यते कुमुदबान्धवो जीवितसंशयमानाय्यते सकलः सखीसमूहो विरोधिनोऽपि चक्रसारसहंसपरभृताऽतिखिद्यन्तो विरमन्ति केलाभ्यः कैव कथा सेवकलोकस्य तदुत्तिष्ठावलोकय सुधाधवलतरङ्गैरपाङ्गैरुज्जीवय वागमृतासारैः । क्रीडस्व स्वयमस्माभिरधिमध्यन्दिनं गन्तुमीहस्व राजभवनमतिक्रान्ते किल काले कदाचिद्दूयमानमानसै पितरैा कुप्येतां न प्रेक्षावानैन्द्रियजालिकेन सुमुग्धवृत्तिको भवितुमर्हति यत्क्षणं स्थातुमपि नाशक्नोच्छक्तुमपि सङ्कुकोच कस्तस्मिन्नसितवपुषि मोघजनुषि प्रेमाणमातन्याज्जनितास्यवन्याकन्याभवस्याकाशराजस्य सर्वतो धन्या कथमन्यायपथे पदमाधातुमीहेथा, मन्यामहे संन्यासमेवास्य दुरभिनिवेशस्य श्रेयो न हन्याद्भवत्याः कृते स तीक्ष्णदण्डो धरणीपतिरस्मान् सकला अपि सहचरीः, प्रणम्यसे शिरःशेखरन्यस्तकरकमलयुगलाभिरालिभिः सविनयमभ्यर्थ्यसे गृहानभिगन्तुमिति । सा च राजकुमारी कामकोदण्डकदर्थिता सखीभिरभ्यर्थिता न किञ्चनभाषत केवलं मुक्ताफलस्थूलैरश्रुभिः स्तनैा क्षालयन्ती शिबिकामारुह्य मन्दिरमभिप्रतस्थे । साकमेव राजकुमार्या सकलः सखीनां जनः परिपतितप्रचुरनूपुरं पुरं प्रविवेश ।

व्याधिबाधितसर्वाङ्गः साधिताधिकचेतनः ।
श्रीनिवासोऽपि सैाधाग्रमारुह्यापीपचत्तनुम् ॥ १२ ॥

चन्द्रोऽपि दहति मन्द्रो वातः स्वैरोऽपि धूनोति ।
आवश्यकेऽपि कृत्ये प्रवर्तितुं संभ्रमीति दूनोति ॥१३॥

विपरीतवृत्तिकं तं
विलोक्य वकुलाऽऽकुलान्तराऽवादीत् ।
स्वामिन्किमद्यशेषेऽ-
शेषेशोऽपि प्रयासमायासि ॥ १४ ॥

शैार्यधना धैर्यधना भवादृशोऽल्पीयसा निमित्तेन ।
मुह्यन्ति न प्रकारः कतमः सतमः प्रवर्तकोऽ गीतः ॥१५॥

वद भव दयालुरेषा
यज्ञवराहाङ्घ्रिपङ्कजनिदासी ।
दूरयिता दुःखोदधि
मेधि विभो मयि चिराय विश्वासी ॥१६॥

आकर्ण्यवाक्यमीशः
किञ्चिदुदञ्चितशिराः शयनदेशात् ।
सम्मार्जिताक्षियुगलः
संस्तभ्यात्मानमाददे वाचम् ॥ १७ ॥

अयि मत्प्राणत्राणकले बकुले किं कथयाम्यद्यतनं क्लेशकारणं सर्वथा दूनमेव दुनोति देवो मानि[illegible] न [illegible]ऽप्येधांसि विषयीक-

रोति किं किल चिन्तितवान्मृतमारणोपायनिर्माणवेलायां वेधा न रजोऽन्धीभूतसमस्तलोचनः स विवेक्तुमीष्टे खलु सा सहचरीसरस्वत्यपि गान्धारराजतनयेव पतिमन्धमवाप्य मन्ये स्वमन्धितवती सहजं विज्ञानमनर्थकः प्रसादोऽपि यज्ञमूर्तेः कोलवपुषो भवतीति विमृशतोऽतितरां दूयते मनो वनोपगतस्यापि मम नोच्छिनत्ति कदर्थनां शमनोवरमनोदनभोजनोजीवो न पुनर्गरलगिलितरसास्वादनस्तदभ्यर्थयेद्रुततरं प्राणप्रयाणप्रकारवितरणाय भवतीं न पुनः कायगोपनायेति वदन्नेव मोहमभिपेदे जगज्जीवातुर्नारायणः। सा च तस्यानर्हां गर्हापदमापदमवलोक्य चिन्तयांचक्रे किमयं सकलजगन्नियन्ता प्राकृत इव विकृतिमापन्नो मुह्यति बलवदस्वस्थो लक्ष्यते। किमत्र प्रतिकर्तव्यं प्रायः कन्दर्पः कन्दलितः फलेन योजयन्नत्रापराध्यति नान्यत्सन्तापकारणं स्यादिति न तदुचितेनैवाचारेणोपचरितव्यः स्वामी भर्तृभद्रप्रधाना हि भृत्यानां धर्मधुरा।

आनीय शैवाललताः सरोभ्यो-
न्यधत्त तद्वक्षसि कौस्तुभाङ्के।
मृणालमालानितमङ्गभित्ता-
ववीभरच्चन्दनदारुधक्त्तौ ॥ १८ ॥

सरोजदलनिर्मितव्यजनवायुनाऽशिशिरस्थलाम्बुजनिकेतकीकुसुमगन्धवाःसेचनैः
तथा कृतवती यथा प्रभुरपव्यथात्मा पुनः।
प्रफुल्लवदनाम्बुजो वच उदाहरन्नीक्षितः ॥ १९ ॥

बकुले किमाकुले मयि
बाहरुपचारैः समीहसे कुशलम्।
यद् जीवनमिच्छसि मम
तत्तनु शशशृङ्गसज्ञनां युक्तिम ॥२०॥

किं मुधा जल्पितेनाथ नाथ ब्रूहि चिकीर्षितम्।
द्रुतमेव कृतं विद्धि, स तयैवं नुतोऽवदत् ॥ २१ ॥

अयि वत्सले पुनः क्षीरसागरमन्थनात्सुधामुत्पाद्य सुराणाममरीकरणसम्बन्धिनं निर्बन्धमनुरुन्धानाभृशं पर्यनुयुनक्ति तदाऽवहिता भूत्वाऽऽकर्णय दुरदृष्टस्यास्य व्यसनवागुराबन्धनहेतुभूतमुदन्तम्। अद्यप्रभातायां शर्वर्यामस्ताचलमभिलाषुके रमासोदर्ये कुमुदबान्धवे सङ्कोचमञ्चत्सु कुमुदेषु सतोभावेन चन्द्रमसमनुसरन्तीषु तारासु स्तेन इव प्राभातिको वातो मुष्णन् पद्मवनेभ्य आमोदं मन्दमन्दमान्दोलयन् केतकीः संचारयन्मालतीसुमनःप्रसृतिं पिबन् प्रस्रवणशीततरशीकरान् निर्भरमुत्कातां निनाय मानिनीमनु मम मानसम्। उत्कलिकाऽऽकुलश्च भृशं दूयमानः स्वमात्रसहायो वनविलोकनेन मनो विनोदमभीप्सुर्दूराद्दुद्गमम्। तत्र कस्मिंश्चिदवकाशे सकाशे निभृतमाकाशे ध्वनिमश्रृणवं पलायमानानां भीतानामिवाबलानाम्। उपगम्य चापश्यं मत्तं मत्तङ्गजं विकुर्वाणं ततस्त्रस्ताश्च कुमारिका इतस्ततोधावतीरप्सरस इव सुरलोकादवतीर्णास्तासु चैकां राजदुहितरं मृदुहितरङ्गधुनीतरङ्गसङ्गभङ्गकवलितमङ्गललसदङ्गत्वङ्गदङ्गदप्रभाभिरामां रामां प्रभवन्तीं नवं तीर्थराजं विभावयितुं मुक्ताकलापचितसिन्दूररचितचित्रकबरीभरेण निटिललुनद्धमृशशिशकलितकुङ्कुमितमध्यभागभ्रूयुगलेन च मदर्थमेव मन्ये वेधसा स्वकौशलमलं भावयताऽऽविर्भाविता नितान्तलावण्यलहरिकां काञ्चित्कुमारिकाम्।

रामजीलालशर्मणः प्रबन्धेन प्रयागस्थ 'हिन्दी प्रेसे' मुद्रिता
चन्द्रशेखरेण च दारागञ्ज, प्रयागतः प्रकाशिता।

# शारदाग्रन्थमाला

विदितमेवैतत् शारदाप्रणयिनां यत् साम्प्रतं विज्ञानबहुलेऽपि काले भारतीयेषु विशेषतः संस्कृतज्ञेषु न विलोक्यते विज्ञानाभिरुचिः। केचन विज्ञानानुशीलनाय समुत्का अपि ग्रन्थाभावात् नात्मनो मनोरथं सफलयितुं शक्नुवन्ति। संस्कृतग्रन्थप्रकाशका हि तेषामेव ग्रन्थानां प्रकाशनं साधु मन्यन्ते, येषां सुखेन विक्रयो भवेत्, यत्प्रकाशनेन च भवेद् धनागमः। अतएव संस्कृते साम्प्रतमभिनवा ग्रन्था न प्रकाश्यन्ते। अतएव च दिनाद्दिनं भवति ह्रासः संस्कृतविद्यायाः।

समयानुकूलमेव शिक्षणं फलति। परिष्कृतिनिपुणा दक्षिणादिभिः सत्क्रियन्ते स्मेत्यभवत् प्रचारः संस्कृतज्ञेषु परिष्कारस्य, साम्प्रतं नामशेषास्ते दक्षिणादातारो यजमानाः। साम्प्रतिकी शिक्षा आत्मनो लक्ष्यमभियाति। साम्प्रतं विज्ञानशिक्षैव बहुमता जगति। विज्ञानप्रचाराय बहुप्रयतन्ते पाश्चात्या विद्वांसः तेषां संसर्गात् भारतेऽपि विज्ञानशिक्षणं श्रेयसे मन्यते।

शारदानिकेतनतः कापि "शारदाग्रन्थमाला" अचिरादेव प्रकाशयिष्यते। अत्र वैज्ञानिका एव ग्रंथाः मुद्रापयिष्यन्ते। प्रतिवर्षं चत्वारो ग्रंथाः प्रकाशयिष्यन्ते। ये शारदाग्रन्थमालाग्रन्थान् गृहीतुमिच्छन्ति, तैरावेदनीयोऽव्यवस्थापकः। मुद्रिते प्रथमे पुस्तके, तत् वी० पी० पर्यायेण प्रेषयिष्यते। त्वर्यतां संस्कृतज्ञैर्विद्वद्भिः, ग्राहकत्वमङ्गीकर्तव्यञ्च शारदाग्रन्थमालायाः। ये हि शारदाग्रन्थमालायाः पूर्वतो ग्राहकाः भविष्यन्ति, तेभ्योऽर्द्धमूल्येन शारदाग्रन्थाः प्रदीयेरन्।

निवेदनस्थानम्

शारदाग्रन्थमालाया व्यवस्थापकः।

दारागंज, प्रयाग।

---

## संस्कृत-शिक्षा

संस्कृत सीखने की सर्वोत्तम पुस्तक। इसके द्वारा कारक का पूरा पूरा ज्ञान हो जाता है। इसके पढ़ लेने से संस्कृत के छोटे छोटे वाक्यों का बनाना और समझना सहज हो जाता है। पुस्तक के अन्त में शब्द सूची दी गई है, जिससे बहुत से शब्द और उनके अर्थ मालूम हो जाते है। जो लोग संस्कृत सीखना चाहते हैं उनके बड़े काम की पुस्तक है। मूल्य केवल ≠) आने का टिकट भेजिए।

मिलने का पता—

शारदानिकेतन।

दारागंज, प्रयाग।

# लेख-सूची



---

## नियमाः

१—शारदा प्रतिमासं प्रकाश्यते ।

२—एता अभिनवाश्च विषया अत्र सम्यगालोच्यन्ते । वैज्ञानिकाः शिल्पकलेतिहासदर्शनसाहित्य-विषयकाः प्रत्नग्रन्थतत्त्वालोचनात्मकाश्च सुरुचिरा निबन्धाः प्रकाश्यन्ते । प्रथितमहिम्नां विदुषां लेखैरियं विभूषिता भवति ।

३—भारते ब्रह्मदेशे सिंहले च, अस्या वार्षिकमग्रिमं मूल्यं ३) रूप्यकत्रयम् । तदितरेषु देशेषु च (8 Shillings)

४—यस्यां संख्यायां यस्य लेखः प्रकाशितो भवेत् सा संख्या तस्मै विना मूल्यं प्रदीयेत

५—आत्मनः पत्रोत्तरमिच्छद्भिः प्रेषणव्ययः प्रेषणीयः । अदत्तशुल्कं पत्रं नैव गृहीतं भवति । पत्रिकायामस्यां विज्ञापनं दातुमिच्छद्भिरावेदनीयो व्यवस्थापकः ।

६—आदर्शसंख्यां लिप्सुभिः पञ्चाणकलभ्यं शुल्कपत्रमवश्यं प्रेषणीयम् आदर्शसंख्या वी. पी. पर्यायेण नैव प्रेष्यते ।

लेखप्रकाशने सर्वथा प्रभवति सम्पादक एव ।




मासिकी संस्कृतपत्रिका

तृतीये वर्षे | विद्ययाऽमृतमश्नुते | संख्याः ५—८

## पद्मावती

( ऐतिहासिकी घटना )

विदितमेवास्तीतिहासरसज्ञानाम्विदुषाम्भारते वर्षेऽस्मिश्चित्तौरनगरस्य दुर्गस्य च माहात्म्यम्। यस्य प्राप्त्यै बाबर-अकबर-अलाउद्दीनप्रभृतयो यवनशासकाः शश्वदुद्योगङ्कुर्वन्तोऽपि विफलमनोरथाः सञ्जाता, वीरक्षत्रियाणान्दोर्दण्डप्रभावात्। यत्रैवैते, बप्पाराउल, समर्षि, रहुपान्यान्यराणासंज्ञकाः बहवः प्रतापशालिनः पुरुषर्षभा राजपुत्रा उदपद्यन्त। येषां स्मरणमात्रेणैवाधुनापि शरीरेषु वीरताचिन्हं प्रादुर्भवति। अत्रैव १३३१ तमेवैक्रमेऽब्दे राणालक्मसीनामधेयो राजकिशोरः सिंहशावक इव स्वल्पीयस्येव वयसि पैत्र्यं सिंहासनमारूढवान्।

तस्य बाल्यात् नरितृव्योभीमसीराणा शत्रुनिराकरणसमेतं शासनकार्ये साहाय्यङ्कुर्वन् प्रतिवसतिस्म तत्संरक्षकरूपेण, सत्यप्रतिज्ञस्य सुक्षत्रियस्यास्यैव राणाभीमसीवीरसिंहस्य राजपत्नी पतिव्रतासीत् वीरयुवती पद्मावती। यस्या असाधारणलावण्यस्य शीलसरलतामाधुर्यादिगुणस्य च चर्चा देशदेशान्तरेषु चन्द्रचन्द्रिकेव प्रकाशिता समभूत्। निशम्य तस्यास्तदमीमसौन्दर्यं, शीलसरलतामाधुर्यादि गुणांश्च, बलवता कामेन जर्जरतास्प्रापितः पठान सुलतानदेहलीपतिरालाउद्दीनः।

अथ [illegible]विजयिनीम्प्रतापशालिताम्,

किं धनेन सम्पत्त्या वा, किंवा प्रयोजनमखिलया राजसामग्र्या, स्त्रीरत्नादिकेन च, देदीप्यमानान्यपि राजमन्दिराणि दृश्यन्तेऽन्धकारमयानि, निखिलाश्च राजदारा व्यर्थमेतत्सर्वं हृदयस्थां प्राणप्रियां पद्मावतीम्विना किमन्यत्प्राणा अपि भारायन्त इति मनस्यवधार्य कामावेशप्रमत्तो यवनराजो योग्यायोग्यश्चाधमत्यानेकानेकसहानुयायिभिरश्वारोहैर्गजारूढैरथस्थैः पदातिभिर्यवनैश्चतुरङ्गिणीभिश्च सेनाभिस्सुसज्जितस्सेनाग्रसरो भूत्वा चित्तौरनगरोदुर्गमदुर्गमरौत्सीत्।

अथ चाहर्निशं युद्धङ्कुर्वतापि तेनाभीष्टसिद्धेः किमपि चिह्नन्नालब्धि, तथा वीरराजपुत्राणामलौकिकीम्वीरताञ्च दृष्ट्वा खिन्नमना छलनातत्परो भेदप्रयोगाय राणाभीमसीपार्श्वम् राजन्! पद्मावतीदर्शनार्थं केवलमागतोऽस्मि नैव योद्धुम्, कृपया तद्दर्शनमयोग्यञ्चेत्तत्प्रतिबिम्बदर्शनम्वाकारय, साफल्यं यातु मे नयनयुगलम्, प्रसन्नश्च प्रतिगच्छामि देहलीम्, इति वाचिकन्दत्वा दूतम्प्राहिणोद् अलाउद्दीनोराजा। श्रुत्वैतद्दूतमुखादलाउद्दीनवचनं सरलहृदयः प्रजावत्सलोराणा भीमसी यदि पद्मावत्या दर्शनेनैव दुर्दैवशान्तिस्स्यात्तदा का हानिः युद्धेन तु परःसहस्राः क्षत्रियस्त्रियः सतीत्वेन मृता मरिष्यन्ति च, एवं राजपुत्रा अपि स्वदेशरक्षारूपाग्नौ प्राणान्मुमुचुः पुनरपि मोक्ष्यन्ति, तथात्वेऽपि का गतिस्स्यादिति न जाने अल्पवयस्कस्यमातृपुत्रस्य धनसेनादिराज्यविनाशनेनाप्यकीर्तिर्भविष्यति। पतिव्रत्यप्रभावात् अग्निवज्ज्वल्यमानां साधुव्रतास्मदीयाम्पद्मावतीन्दृष्ट्वापि किङ्करिष्यत्येष यवनो दुरात्मेति सम्यग्विचिन्त्य चित्तौरदुर्गप्रवेशार्थं [illegible]णानिपुणाय तस्मै यवनाय। ततः सत्यप्रतिज्ञानां राजपुत्राणान्निर्मलचरित्रैः परिचित इत्यतोविगतशङ्कः कतिपयैरेव सैनिकैः परिवृतश्चित्तौरदुर्गं विवेश यवनराजः।

राणाराज्ञाप्युचितातिथिसत्कारानन्तरन्दर्पणद्वयद्वारा पद्मावत्याः प्रतिबिम्बम्प्रादर्शि। ततः आज्येनाग्निरिव तस्य दुरात्मनोयवनस्य कामवह्निरत्यन्तञ्जज्वाल। अथ किङ्कर्तव्यताविमूढोऽपि धैर्यमवलम्ब्ययेन केनापि विधिनाग्राह्या पद्मावतीति चिन्तयन्नेवोपकार्यामन्वचलत्।

ऋजुस्वभावो राणाराजा आद्वारमतिथिमनुगमनमिति नियममनुरुन्धानो भटैरधिकैरस्य शङ्का जनिष्यते इति मुख्यैः सामन्तैः समेतो तं यवनराजमन्वयासीत्। अथ सञ्जातहर्षेण यवनेनालाउद्दीनेन द्वारान्तिके नातिसैन्यैर्युतो, यवननाथ, यास्यहमिति वदन्नेव दुश्चेष्टितैर्निर्जितद्वास्थैर्यवनराजेरितैः पठानवलैर्बलादाक्रान्तः प्रतिबद्धश्च भीमसीराणा। ततो यवनराज! धनाय यदिदं राजबन्धनन्तद्यथेच्छङ्गृहाण कोषादिति, प्रतिबद्धेषु सैनिकक्षत्रियेषूक्तेषु सत्सु पद्मिनीमभिलषामि नाहन्धनम् अतो यदि पद्मिनीन्दास्यथ तदैव युष्माकं सर्वेषां राज्ञश्च बन्धनान्मुक्तिः,नान्येन केनोपायेनेति कथयत अलाउद्दीनस्य वाक्यं श्रुत्वा वाग्बाणप्रहारेणानुरुद्धास्तब्धाश्च भवन्त ईश्वरम्प्रार्थयन्तिस्म राजसैनिकाः। अथ प्रथमतस्त्वत्र महाराज्ञी पद्मिनी पतिदशां श्रुत्वात्यन्तविह्वला जाता, पश्चाद्धीरतामुपेत्य प्राणेश्वरमोचनोपायस्यचिन्तयत्।

स्वकीयं शरीरमग्नौ प्रक्षिप्यार्यबालाः सतीत्वरक्षणसमर्था किन्तु सतीत्वरक्षणपुरस्सरं प्रबल

शत्रोर्दुष्टयवनस्य हस्तात्स्वामिमोचनम्प्राणोत्सर्गादपि नैव सम्भाव्यते ।

कष्टा समस्या, एकेन साधनेन क्लिष्टेनैव भवति कार्यद्वयस्यसिद्धिः । एकतस्तु भर्तुर्यवनदासत्वम्, अन्यतस्तु सतीत्वभङ्गः, समुज्ज्वले क्षत्रियकुले कालिमा च, किन्त्वेतन्निराकरणन्न काठिन्यम्पतिव्रतायै । "अत्रोक्तिर्यूरोपीयमहाकविमिल्टनस्य, पतिव्रतायाः सुकोमलमपि शरीरम्वज्रमयम् भवति अस्त्राय, एवं तेषु दुर्गमेष्वन्धकारमयप्रदेशेषु सघनवीथिकासु स्वर्गेमर्त्येपाताले च सर्वत्र वा प्रतिहतगमनम्, तस्याः शुभेकार्ये न कोपिविघ्नङ्कर्तुं शक्नोति । न केचन समर्थास्तस्याः पतिव्रतायाः सतीत्वेन पतिव्रत्यभङ्गाय । प्रभविष्णुना विष्णुनाज्ञप्ताः सहस्रशः पार्षदास्तद्रक्षायै तस्याः पार्श्वे सततं सञ्चरन्ति, किं बहुना मृत्युरपि पतिव्रताया वशवर्ती, अहो पातिव्रत्यम् ! अनन्तरं राज्ञी पद्मावतीश्वरं जगदाधारभूतं ध्यात्वा शत्रुपाशात्पतिमोक्षार्थं शठे शाठ्यं समाचरेदितिन्यायमाश्रित्य सप्तशतं शिविकायानानि सुसज्जीकारितानि ।

प्रत्येकेषु तेषु यानवाहकरूपधारिणः षट्षट्क्षत्रियान्नियोज्य शिविकान्तरेऽपि च बहुसंख्यकान् सुसज्जितान् स्त्रीरूपधारिणो योद्धॄन् निवेश्य स्वांगायाङ्कञ्चुकयां करवालविशेषञ्च ( कटार ) निगूह्य स्वयमपि शिविकामारुह्य सप्तशतेन यानैरलाउद्दीनस्य समीपं प्रस्थितवती ।

आगत्य च तत्र जवनिकासमीपे सर्वाणि शिविकायानानि संस्थाप्य, यवनराज अद्यप्रभृति त्वदीयाऽस्मि संवृताहमति परमदयां कृत्वा प्रियतमस्य राणाभीमसी राज्ञोऽन्तिमाय दर्शनायाज्ञा प्रदातव्येति कपटलम्भिश्रं सन्देशं सन्देशहरेण प्रहितवती पद्मावती ।

अथ शीघ्रमेव पद्मावती स्वयमदधीना भविष्यतीति प्रमदेन यथेच्छं कुर्यात्पद्मावतीति प्रतिसन्दिष्टवानलाउद्दीनो यवनराजः ।

अथैयान् विलम्बो जातः, नाद्याप्यागतवती पद्मावतीति, कामातुरः पद्मावतींवशीकृत्य, चित्तौरमपि ग्रहीष्यामि न कथमपि दास्यामि कुक्षत्रियाय बलदर्पिताय भीमसीराज्ञे स्वातन्त्र्यमित्थम्मनसि वितर्कयन् बहिर्निस्सरन्तिकियन्तिशिविकायानानि दृष्ट्वाविस्मितः सन्पद्मावतीयं हस्तान्न निर्गच्छेदिति शङ्कया स्वल्पैः पठानसैनिकैः समेतः सविस्मयं जवनिकादिशमगात् ।

तत्रागत एवालाउद्दीने मायाविनि यवनराजे शिविकावाहाःशिविकाम्प्रक्षिप्य कृत्रिमस्त्रीरूपाणि परिहाय स्वीयान्स्वीयानस्त्रानस्त्रविशेषानुद्धृत्य शिविकान्तरस्थाः कवचायुधधारिणः क्षत्रियभटावेगान्निसृत्य तस्योपरि करिणम्मृगराजइव सहसा परापतन् ।

ततो न चात्र राणाभीमसी, नापि पद्मावती, ममैवासिधेनुकया मदीयैव नासिका कर्तिताधूर्तैरेतैर्हिन्दूकाफिरैः, इतिविचार्य अरेरे वीराः ! तूर्णमागच्छन्तु, अवहन्यन्त्वेतान्दुष्टान्, मागन्तुंशक्नुवन्तु शिविकाः शिविकावाहाश्चेति जल्पन्योद्धॄन्नाह्वयतिस्म ।

भर्तृरक्षणाय यवनयोद्धॄन्प्रतियोद्धुं यवनसैनिकेषु धावमानेषु मार्गमवरुध्यावस्थिता सञ्जाता राजपुत्रयोद्धारः ।

अथ एतेषांविनाशेन विनामार्गं स्वाभीप्सितां पद्मावतीञ्च नैव प्राप्स्यामि इतिमन्यमानो यवन-

सैनिका राजपुत्राणामुपरि वारिधारा इवासिधाराः पातयामासुः। अथास्मासु यावदेकोऽपि तिष्ठेन्न प्रदेयो यवनेभ्योमार्गः।

इतिपरस्परं प्रतिज्ञाय यावन्महाराणाभीमसी, वोरयुवती स्वामिनीपद्मावती चाश्वारूढौ गृहन्न पलायेताम्, तावत्तैरविच्छिन्नं तुमुलं युद्धमकारि। स्वामिशुभमिच्छद्भिस्तैर्वीरै राजपुत्रैः संग्रामभूमौ स्वाम्यर्थं स्वान्स्वान्प्रियान्प्राणान्परित्यज्य प्रसह्य यवनबलमवरुद्धम्। श्रीमान्राणाभीमसी, पतिप्राप्त्यातिहृष्टवदना पतिप्राणा वीरपत्नी महाराज्ञी पद्मावती च, वीरक्षत्रियाणां सीसोदीयकुलावतंसानांस्वभटानाम्प्रशंसांकुर्वन्तौ सकुशलं चित्तौरदुर्गमायाताम्।

अथ तत्र राजधान्यां राणाभीमसी, प्रजाजनानाञ्चेतःस्वानन्दमुत्पादयन् सर्वथाराजपुत्रकुलोज्ज्वलं यशोविस्तारयन् पूर्ववद्भ्रातृपुत्रस्य राज्यभारञ्चोत्या पालयामास।

यवनराजोऽपि अलाउद्दीनः सैन्यनाशान्मनोरथभङ्गाचापेतश्रोकः विक्लवचेतास्सन् स्वकीयान्देहलीराजधानीं व्यावर्तत्।

धन्यास्ते राजपुत्रा ये सर्वदास्वामिहितपरिपालयन्तो नाजीगणन्प्राणान्। धन्यं खलुराजपुत्रीयंकुलं, येषूत्पन्नाः क्षत्रियकुलाङ्गना वीरप्रसविन्यः सतीत्वरक्षणशीलाः संजाता, वर्तमानाश्च तिष्ठन्ति तेष्वेव कुलेषूत्पन्ना प्रशंसार्हा वीरपत्नी देवी पद्मावती, यया च "सतीत्वरक्षणपुरस्सरं" यवनपतेः पाशाद्विमोचितः प्रियः पतिर्भीमसीराणा।

किम्बहुना यस्यावीरपत्न्या अजरामराकीर्तिरद्यापि संशोभते जगतीतल इत्यलम्।

—मङ्गलसिंहगुप्तः एम्. ए.

# धर्मभेदस्तत्परिणामश्च

[ लेखकः श्रीगिरिधरशर्मा चतुर्वेदः, व्याकरणसाहित्याचार्यः ]

आराध्यः सर्वधर्माणां सर्वधर्माश्रयः स्वयम्।
सर्वधर्मादिगश्चापि स मे देवः प्रसीदतु॥

विचित्राः खलु जगति वस्तुधर्माः, परस्परं भिन्नाः। तत्परिणाम एवायं सर्वोऽपि संसारः। एकरसं किल केवलं ब्रह्म, तदितरत्तु सर्वमपि विभिन्नैर्धर्मैराक्रान्तम्। धर्मभेदादेव जगद्विद्योतते, धर्मभेद एव जगति विद्योतते वा। सूर्यः स्वधर्मेणौष्ण्येन सर्वमपि पचति, प्रकाशयति च प्रकाशेन, चन्द्रोऽपि स्वधर्मेणाप्यायनेन सर्वा ओषधीराप्याययति, ता इमा आप्याय्यमानाः पुष्यन्ति, पोषयन्ति च जीवान् स्वधर्मेण। पृथिवी स्वधर्मेण धृत्या सर्वमपि धरति। स एव सर्वेषां धर्मपरिणामभूतः क्रियाकलाप एव संसारः। धर्मभेदो यदि न स्यात्, नायं संसारः स्यात्। एकमेवाद्वितीयं ब्रह्म स्वप्रतिष्ठं स्यात्। सत्ययं धर्मभेदो ब्रह्माद्वैतवादिभिः काल्पनिको वाऽभ्युपगम्यताम्, प्रमाणप्रमेयव्यवहारेऽभिनिविष्टैर्वास्तविको वाऽभिमन्यताम्। तमनुरुध्यैव जगतोऽप्यस्य कल्पनाकल्पितत्वं वस्तुतत्त्वं सेत्स्यति। सेयं सर्वापि वस्तुधर्मकथा दार्शनिकी, नैवास्माभिरत्र प्रपञ्चनीया। इह तु संप्रति पुरुषार्थचतुष्टये प्रधानभूतस्य विहितानुष्ठानलक्षणस्य धर्मस्य सम्बन्धे विचारः प्रवर्त्तनीयः। अस्य हि धर्मस्य ये प्रवर्त्तन्तेऽद्यत्वे विविधा भेदाः ब्राह्मणधर्मः, वैश्यधर्मः शूद्रधर्मः, स्त्रीधर्मः यवनधर्मः खिष्टधर्मः, जैनधर्मः, आर्यधर्म इत्यादयस्ते किंमूलकाः, कथंभूता वा तत्प-

रिणाम इति । इदानीन्तना हि लोका धर्मभेदमेनं सर्वथानर्थोत्पादकमेवाकलयन्ति, आक्षिपन्ति च तत एव विविधविरुद्धधर्म सङ्कुलामार्यजातिम्। चिरन्तना आर्यास्तु चिरन्तनसंस्कारदृढरज्जु-निगृहीता इव धर्मभेदं सर्वथा प्रामाणिकं सर्वार्थ-साधकं चाभिमन्यन्ते । तत एवं विचारोऽस्मिन्वि-षयेऽवश्यं प्रस्तोतव्यः । संबध्नाति चास्माकं धर्मः संस्कृतसाहित्येनैव निबिडम्, संस्कृतसा-हित्यविद एव तत्त्वं परिणामं चास्य व्यवस्थाप-यितुमीशते । तत एव संस्कृतसाहित्यविदां श्रीमतां पुरतः प्रकाशनमस्य विषयस्य सर्वथा साम्प्रतम् । आशासे अतिदुरूहं विषयमिममवल-म्ब्योपतिष्ठतः साहसिकस्य मे पदे पदे स्खलि-तानि क्षमिष्येयुः श्रीमन्तो महाभागाः ।

मान्याः ! महानुभावाः ! द्विविधः खलु धर्म-भेदः विज्ञानकृतश्चाज्ञानकृतश्च । तत्राद्यः सर्वथा-भ्युदयाय, परन्तु सर्वथा विनिपाताय कल्पत इति सुश्लिष्टोऽयं सिद्धान्तः । विषयमिमं परीक्ष-माणेन धर्मस्वरूपं तावत्प्रथममालोचयितव्यं भव-ति । तत्र 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः, इति भगवान् कणादो धर्मं लक्षयति, चोदना लक्षणोऽर्थो धर्मः, इति तु तत्र भवान् भगवान् जैमिनिर्धर्मं व्याचष्टे । तत्र निःश्रेयसमिदं सुखं वास्तु, त्रिविधदुःखात्यन्ताभावो वास्तु, उभयथा-प्ययं ननु चरमोऽभ्युदय एव । उभयत्रापि व्यव-हारेऽभ्युदयपदप्रयोगदर्शनात् । कैश्चिच्च सर्वेषामपि सुखानां दुःखाभावरूपताया एव व्यवस्थापनात् । तस्मान्नास्ति यतः परोऽभ्युदयः कापि कश्चिदपि, तदिदमेव निश्चितं श्रेयो निःश्रेयसमिति व्याहा-परिष्कृत्यायेन कणादेन भगवता पृथङ् निर्दि-ष्टम् । तथा च कणादमते तावदभ्युदयहेतुत्वं धर्म-लक्षणं फलति, जैमिनिमते तु विधिबोधितत्वे सत्यर्थत्वम् । अर्थत्वं चानर्थतानाक्रान्तत्वम्, स्वजन्यसुखावधिकोत्कर्षशालिदुःखाजनकत्वमिति यावत् । अथ भगवान् मनुश्च—

विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत ॥

इति वदन् निर्दोषविद्वदाचरणीयतां हृदया-भ्यनुज्ञाततां च धर्मलक्षणमन्वाह । वस्तुतो ताट-स्थ्येन लक्षयतामेषामृषीणामभिन्नमेव तात्पर्यमिति संक्षेपतः स्पष्टयामः ।

वैयाकरणाः खलु 'ध्रियते इति धर्मः' धर-तीति धर्मः' इति च कर्मणि कर्त्तरि वा धर्मशब्दं व्युत्पादयन्ति । धर्मो हि नाम क्रियारूपो वास्तु, तज्जनितोऽतिशयविशेषो वास्तु, उभयथाप्ययं धर्मिणा ध्रियत एव । सर्वमपि जडचेतनात्मकं जगत् क्रियया नित्यमाक्रान्तम् । नास्ति किमपि तथाविधं वस्तु दृष्टिविषयम् - यत्र नोपलभ्येत कदाचित्काचिदपि क्रिया । वदन्ति खलु दार्शनि-कमूर्धन्याः—

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥

तत्राचेतनं परप्रयुक्तां क्रियां प्रतिपद्यते, चेत-नन्तु द्रव्यं हिताहितप्राप्तिपरिहारावभिसन्धाय स्वयं चेष्टते अस्तां तावत् । अस्यास्तु क्रियाया द्विविधो भवति परिणामः । काचित् क्रिया स्वा-श्रयीभूतं वस्तुस्वरूपं प्रतिष्ठापयति, स्वरूपप्रध्वं-साद्विनिवर्त्तयति । अन्या तु तद्विपरीता यत्रैवोत्प-द्यते, तमेवाश्रयं स्वरूपात्प्रच्यावयति । निदर्शनमत्र निदर्शयामि । ... शाखागहन-

निरुद्धदिक्चक्रवालः कुसुमसौरभझङ्कारितमधुकरनिकरः सुधासहोदरैः फलैराप्यायितनिखिललोकः सुमहान् वनस्पतिः। तत्र काचिदनवरतं प्रवर्त्तते क्रिया, यथामृज्जलादिकमहस्करकराकृष्टमापद्य रसतां तदीयं शाखाप्रकाण्डकुसुमपक्षवादिकमाप्यायतत्तत्स्वरूपं बिभर्त्ति। अन्या तु काचित्कदाचिद्विपरीतैव समुत्पद्यते क्रिया, यथा सन्तान एव समुच्छिद्यते शुष्यंश्च तरुः स्वरूपाच्चरुत्वात्प्रच्यवते, काष्ठतां केवलमुपगच्छति। तत्रैषा द्विविधापि क्रिया यद्यपि धर्मिणा ध्रियते इति प्रथमां व्युत्पत्तिमनुसृत्य धर्मपदव्यपदेश्या प्राप्नोति, अथापि पूर्वा धर्मिस्वरूपं धरति, द्वितीया तु स्वरूपमेवोच्छिनत्ति, नतु धरति। तस्माद् द्वितीयां कर्त्तरि व्युत्पत्तिमवलम्ब्य प्रथमा धर्मः, द्वितीयात्वधर्म इति व्यवहर्त्तुमुचिता। तदित्थं ध्रियमाणः सन् धरति, स्वयं धर्मिणाध्रियते, धर्मिणं च स्वस्वरूपेऽवस्थापयति यः स धर्म इति फलितम्।

अथेदमन्यां रीतिमवलम्ब्यैव व्याख्यायते सन्ति किल सर्वेष्वपि वस्तुषु जडचेतनात्मकेषु विविधा धर्मा इत्यवोचाम तेत्विमे द्विविधाः स्वाभाविकाश्च आगन्तुकाश्च। तत्र स्वाभाविका धर्मा एव वस्तुतः स्वरूपमित्युच्यते। न हि तावदौष्ण्यप्रकाशौ विहाय वन्हेः किञ्चित्स्वरूपमस्ति, न वा शैत्यमाप्ययनं च विहाय जलस्य स्वरूपान्तरं निर्वक्तुं शक्यते केनापि। आगन्तुकास्तु धर्मा वस्तुषु वस्त्वन्तरसम्बन्धादापद्यन्ते विलीयन्ते चेति ते व्यभिचारिण एवोच्यन्ते। योग्यतालक्षणानामेषामुभयविधानां धर्माणां परिणामभूता एव तत्तेषु वस्तुष्वनवरतं प्रवर्त्तन्ते क्रियाः।

एषां चोभयविधानां धर्माणां ध्रियमाणत्वेऽपि स्वभावभूता मुख्याः, आगन्तुकास्तु गौणाः। तत एव स्वभावभूता भावा नित्यं धर्माः आगन्तुकास्तु कचिद्धर्माः स्वभावप्रतिकूलत्वे त्वागन्तुका भावा अधर्माः, वस्तुस्वरूपविनाशकत्वात्। मुख्यधर्मविरोधित्वाच्च। तदित्थं स्वभावभूतधर्मानुकूला क्रिया धर्मः, स्वभावभूतधर्मप्रतिकूला तु क्रिया सर्वथाप्यधर्म इति सुस्पष्टं फलति। विस्तरेण तु समीक्षितमिदं श्रीगुरुचरणानां वेदधर्मव्याख्यानादाविति त एवाधिगम्येत विशेषाभिलाषुकैः।

तदस्माकमत्र विचारविषयीभूते धर्मेऽपि वस्तुधर्मवृत्तमिदमेवमेवानुसन्धेयम्। मनुष्येषु यन्मनुष्यत्वं नाम, तद्यादृशैः कर्मपरैर्यादृशैश्च द्रव्यसम्बन्धैरवस्थाप्यते, ते मनुष्याणां धर्मा इत्युच्यन्ते। यैस्तु मनुष्यत्वमपगच्छति, ते भवन्ति मनुष्याणामधर्माः। एवं ये सभ्यमानिनो लोकाः तेषां सत्सभ्यत्वं यया रीत्या रक्ष्यते, सा रीतिस्तेषां धर्मः विपरीता त्वधर्मः। इत्थमेव वर्णाश्रमधर्मेष्वपि संगमनीयं लक्षणमिदम्। यः खलु पुरुषो ब्राह्मणत्वाभिमानी ब्राह्मण इत्युच्यते लोके, तत्स्वरूपभूतं यदिदं ब्राह्मण्यं नाम निरूपितं शास्त्रेषु, प्रसिद्धं च लोके, तत्संरक्षणनिमित्तभूताः क्रियास्तत्पक्षे धर्मा इत्युच्येरन्, विपरीतास्त्वधर्मा इति व्यपदिश्येरन्। क्षत्रियाणां क्षत्रियत्वपरिपालन शूद्राणां शूद्रत्वादप्रच्युतिश्चैवमेव धर्मस्तद्विपरीतश्चाधर्मः सूक्ष्मेक्षिकयेक्षणीयो धीधनैः। अत एव तु क्षत्रियस्यार्जुनस्य ब्राह्मणोचिततपश्चर्याद्यनुष्ठानं भैक्षचरणं च बलात् प्रतिषिध्य युद्धमेव धर्मत्वेन ग्राहयति भगवान् वासुदेवो भगवद्गीतासु। अत एव च शूद्राणां वेदाध्ययनं यज्ञाद्यनु

ष्ठानं च दृढं निचारयन्ति कल्पसूत्रकाराः । तस्माद्याभिः क्रियाभिर्यादृशैश्च सम्बन्धमापद्यमानैर्द्रव्यैस्तत्तदभिमतस्वरूपं ध्रियते, ते धर्मा इत्याख्यायन्ते । यैस्तु धर्मो स्वरूपात्प्रच्यवते, पतति, ते पातकानीत्यधर्मा इति चोच्यन्ते । उक्तार्थस्य प्रामाण्यसमर्थनाय वचनान्युदाहरिष्यामः—

धर्मो विश्वस्य जगतः प्रतिष्ठा * ( श्रुतिः )

धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥
(महाभारतम्)

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥
(याज्ञवल्क्यः)

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो रक्षणीयो मानो धर्मो हतो वधीत् ॥
(महाभारतम्)

इत्यादि ।

ननु नित्यानि कर्माण्यननुष्ठीयमानानि प्रत्यवायं जनयन्ति, पातयन्ति चाधिकारिणम् । अनुष्ठीयमानानि च न कंचिदतिशयं जनयन्तीत्यस्तु तेषां स्वरूपसंरक्षणमात्रपराणामुक्तरीत्या धर्मत्वम्, काम्यानि तु कर्माणि ज्योतिष्टोमाद्यानि अनुष्ठीयमानानि स्वर्गं प्रापयन्ति, फलान्तराणि वा शास्त्रोक्तानि सम्पादयन्ति, अननुष्ठाने तु तेषां न काचिदपि धर्मिस्वरूपहानिरिति कथमस्तु तेषां धर्मत्वम् । अभ्युदयहेतुत्वस्य त्वदीयेऽर्थेऽननुप्रवेशात् । स्वरूपरक्षामात्रस्य त्वया धर्मपदप्रवृत्तिनिमित्ततया उपगमात् । अभ्युपगच्छन्ति तु सुस्पष्टं मीमांसकाः काम्यानामपि कर्मणां धर्मत्वमिति चेदत्रैवं समादधते केचन । अवनमनोन्नमनरूपेणानिशं प्रवर्त्तमानेऽस्मिन् प्रकृतिचक्रे विनिपाताद्रक्षितानामभ्युदयोऽर्थतः सिद्ध इति सोऽपि धर्मपदप्रवृत्तिनिमित्ततामापद्यत एव । न हि जगति प्राकृतिकं प्रकृतिसम्बन्धि वा किमपि कूटस्थं वस्तु, "चलं हि गुणवृत्त" मित्यभिदधतो विज्ञानपारंगताः सर्वत्रापि परिणाममप्रतिहतमनुजानते । परिणामश्चोन्नतिरूपेण वा स्यादवनतिरूपेण वा, तत्र धर्मेणावनमने विनिवारिते परिशेष्यादुन्नतिरर्थसिद्धैव । तस्मादुन्नतिहेतुत्वमनुक्तमपि धर्मलक्षणेऽनुप्रविष्टमाकलनीयम् । तत एवाभ्युदयहेतुत्वं धर्मलक्षणं बहवोऽभिप्रयन्ति । अभ्युदयोऽपि स्वयं स्वरूपादप्रच्यवमानस्यैवाभिमतः, न हि स्वस्वरूपं विनाश्याभ्युदयं कश्चिदीहेत, स्वरूपविनाशे हि कस्याभ्युदयो व्यपदिश्यताम् । तस्मात्स्थायिभूतान् स्वधर्मानभिरक्षन्नेव सर्वो लोकः प्रवर्तते व्यभिचारिणां धर्माणामतिशयाधानायेति न किमप्यत्र लक्षणेऽवद्यम् ।

परे त्वित्थं समाधिमाहुः स्वरूपं नामेदं स्वत्वाभिमानेऽनुप्रविष्टा यावन्तोऽपि पदार्थाः । तथा च यः स्वर्गकामो भवति । स्वर्गमभिलष्यति स्वर्गेण स्वात्मानमभिसम्बध्नातीति यावत् तस्य पुरुषस्य स्वर्गसम्बन्धोऽप्ययं स्वरूपानुप्रविष्ट एव । एवमेव पुत्रेष्ट्यादिकामस्य पुत्रसम्बन्धो वृष्टिसम्बन्धश्चापि स्वरूपत्वेन व्याख्यातव्यः । तस्यान्तरेण रूपेणाभिनिष्पन्नस्य सम्बन्धस्य बाह्यपदार्थप्रतियोगिकत्वसम्पादकानि कर्माणि तत्संरक्षणपराण्येवेति सुस्पष्टमेषां धर्मत्वमविवादम् । अत एव काम्येषु कामनामप्यधिकारविशेषणतया मीमांसका निरूपयन्ति स्वर्गकामो

*प्रतिष्ठा प्रतिष्ठापकः स्वरूपसंरक्ष इति यावत् ।

यजेतेत्यादौ स्वर्गकामनाविशिष्टः पुरुषोऽधिक्रियते, न तु पुरुषमात्रम् । स्वर्गकामनाविशिष्टस्यैव पुरुषस्य सोऽयं धर्मः । तथा च स्वर्गकामनाविशिष्टः पुरुषो यागं यदि नानुतिष्ठेत् न स स्वर्गं प्राप्नुयादिति स्वर्गसम्बन्धादिच्छाविषयीभूतात्स्वरूपानुप्रविष्टात्प्रच्यवेत तथाविधं विशिष्टं स्वरूपं जह्यादिति सोऽस्याधर्मः स्यात् । यागमनुतिष्ठंतस्तु तथाविधं विशिष्टं स्वरूपमभिरक्षतीत्यवश्यं कामनाविशिष्टस्य काम्यं कर्म धर्म एव । केवलमिच्छाविषयीभूतं तु तं सम्बन्धं बाह्यत्वेनायमेव निष्पादयतीति नित्यात्कर्मणः पृथगुच्यते । ननु भो एवं सति परदारा अभिलष्यतः परद्रव्यं वाभिगृध्यतस्तत्तदिच्छाविशिष्टस्य पुंसस्तत्प्राप्त्युपायानुष्ठानमपि विशिष्टधर्मः स्यादिति चेत्स्यादेव तदंशे । अत एव तु तादृशपुरुषाधिकारेणाभिचारं मारणं वशीकरणमोहनादिकं चामनति भगवती श्रुतिः, स्मरति च स्मृतिः परमागन्तुकस्यास्य धर्मस्य संरक्षणे स्वभावभूतस्य मुख्यस्य धर्मस्य मनुष्यत्वलक्षणस्य स्वरूपहानिर्भवतीति तस्यानर्थत्वं व्यवस्थाप्य धर्मलक्षणे ( चोदना लक्षणोऽर्थो धर्म इत्यत्र ) चार्थपदं विनिवेश्य धर्मत्वमस्य प्रतिषेधन्ति मीमांसकाः । स्वभावभूतधर्मानुकूल्यएवागन्तुकस्य धर्मत्वमिति ह्यवोचाम । इहत्वागन्तुकविशेषणांशसंरक्षणे विशेष्यस्वरूपहानिरापद्यत इति न तस्य मुख्यं धर्मत्वं साम्प्रतमुररीकर्तुम् । यास्तु स्वर्गादिकामनाः स्वभावविरोधगन्धशून्यास्ताः स्वरूपेऽनुप्रवेश्य यागादीनां विशिष्टधर्मता व्यवस्थापनेन कस्यापि विरोधः । तस्मात्कामनाविशिष्टानां काम्यं कर्म धर्म एवेत्यनवद्यम् ।

अथ परेऽन्यथाप्येतत्समर्थयन्ति, यदिदं सुखमहंकारास्पदमात्मा नाम । आनन्दः, पूर्णता च तत्स्वभावः । 'यो वै भूमा तत्सुखम्' 'आत्मनस्तु कामाय सर्वं प्रियं भवती' त्याद्याभिः श्रुतिभिस्तस्य तथात्वबोधनादनुभवसंवादाच्च । केवलमनाद्यनिर्वचनीयाविद्यया स्वरूपमस्य परिच्छिद्यते । ततएवायमभिमानेनाल्पइव, परिच्छिन्नइव, अल्पपरिच्छद इव च भवति । अतएव तु स्वभावेनैव पूर्णत्वलक्षणमानन्दमयमभिवाञ्छति, सुखाभिलाषे तदुपायभूतानधिगताधिगमाभिलाषे च प्राणिमात्रस्यैकमत्यात् तत्रानधिगतस्येष्टस्य तस्य तस्यार्थस्य सम्पत्यापूर्णत्वमात्मनः सेत्स्यतीत्यभिमानेन लौकिक्या दृष्ट्या प्रवर्तमानानां सुखार्थं तत्तदर्थसम्पादनाय प्रयतनं प्रथमोऽयं प्रवृत्तिमार्गः, स्वरूपभूतैवात्मनः परिपूर्णता अविद्यापिधानपिहितेति कण्ठचामीकरन्यायेनाधिगन्तव्यायास्तस्या अविद्यापिधानापनयनमात्रमुपायः, तस्मादपूर्णत्वसमर्थकं तत्तदिच्छातिरोधानेनैव पूर्णत्वमाविर्भावनीयमिति शास्त्रीयां दृष्टिमालम्बमानानां द्वितीयो निवृत्तिमार्गः । तत्र प्रवृत्तिमार्गे अविशुद्धिक्षयातिशयान् दोषान् प्रपश्यद्भिर्महामहिमभिर्महर्षिभिर्निवृत्तिमार्ग एव प्राधान्येनाभिनिवेशः कृतइत्यन्यदेतत् । अधिकारिभेदात्तु मार्गद्वयमपि व्यवस्थापितं तत्रतत्रशास्त्रेषु । तस्मात्काम्यकर्मचितानैस्तांस्तानधिगतान् स्वर्गादीनुपाय पूर्णत्वलक्षणायानन्दाय प्रयतनमिदमात्मनः स्वरूपसंरक्षणमेवेति न तस्य धर्मत्वेकापि विप्रतिपत्ति रुचिता । तदिदं पूर्णत्वं तथाविधमेवेष्टव्यम् यत्परिणामेऽपि क्रमेण पूर्णत्वलक्षणायानन्दायैव कल्पेत । यत्तत्प्रतिपूर्णत्वमिवावभासमानमपि

परिणतौ दुःखलक्षणाया अपूर्णताया हेतुः स्यात् न तत्पूर्णत्वमिष्टलक्षणं प्रवेष्टुमुचितम् । तस्मात्परद्रव्यपरदारादिभिः पूर्णत्वसंपादनमधर्म एव, न तु धर्मः । तस्य परिणतौ दुःखहेतुत्वात् । सर्वा अपि क्रिया यद्यपि परम्परया दुःखस्यैव कारणमित्यभिमन्यन्ते दार्शनिकाः समर्थयन्ति च परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ( पातञ्जलसूत्रम् ) इत्याद्याभिर्द्रढाभिरुपपत्तिभिः, अथापि सा खलु तत्र भवतामेषां परीक्षकदृष्टिः । लौकिक्या तु दृष्ट्या या क्रिया साक्षादेवानर्थहेतुः स्यात्सैवाधर्मत्वेन परिगणनीया । स्वर्गादिहेतुभूता तु यागादिक्रिया न साक्षादनर्थाय कल्पते इति सा धर्म एव । संस्कारद्वारा तु कल्पते चेदनर्थाय, कल्पतां नाम, न तावति लौकिकानामभिनिवेशः । तदित्थं त्रेधा काम्यानां कर्मणां स्वरूपसंरक्षणलक्षणधर्मत्वं समर्थितम् ।

सिद्धमेतेन—स्वरूपरक्षैव धर्मः । धर्मशब्दस्य प्रवृत्तिनिमित्तम्—अथाप्यभ्युदयोऽवश्यं धर्मफलान्तःपाती । तमेवैनमभ्युदयं प्राधान्येन धर्मफलं विवक्षित्वा 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इत्याह तत्रभवान् कणादः । तत्राभ्युदयो लौकिकानां धर्मफलम्, निःश्रेयसं तु तत्त्वविदाम् । निःश्रेयसं चेदं नातिरिच्यते स्वरूपरक्षातः, आगन्तुकं दुःखमपवृज्य स्वरूपप्रतिष्ठापनमेव चितिशक्तेरपवर्ग इति दार्शनिकानां रहस्यात् । तस्मात्स्वरूपरक्षैव मुख्यं धर्मफलं भगवता कणादेनापि विवक्षितमिति न विस्मर्त्तव्यम् । अभ्युदयश्चाप्ययं परिणतिपक्षपाती श्रेयःपदाभिलप्य एवात्र विवक्षितो द्रष्टव्यः, न त्वापातरमणीयः परिणामविरसः प्रेयःपदाभिलाप्यः परागङ्गनाङ्गसंस्पर्शजनितसुखादिः, तस्य विनिपातहेतुत्वेन शोदविद्भिरभ्युदयत्वेनोपगमनसंभवेऽपि प्रेक्षापूर्वकारिणामेवंविधेऽर्थेऽभ्युदयपदप्रयोगासंभवात् । तदाह भगवती श्रुतिः—

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते
उभे नानार्थे पुरुषं सिनीतः ।
तयोः श्रेय आददानस्य साधु
भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ
संपरीत्य विविनक्ति धीरः ।
श्रेयो धीरोऽभिप्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमाद् वृणीते ।
( कठोपनिषद् )

भगवद्गीतास्वपि—

यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ।
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ।
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।
निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ।

तां स्विमां परिणतिमाहालिकादा च विद्वांसेयात्सर्व एव परीक्षन्ते, परं यावत् परीक्षितं यस्य शीलं सामर्थ्यं च, तावदेव स निर्धार्य कर्मणि प्रवर्त्तते । चरमपरिणतिपरीक्षणकुशलास्तु सर्वमपि कर्मफलं दुःखपक्ष एव निक्षिपन्तो निवृत्तिमार्गमेव शरणीकुर्वन्तीत्यास्तां तावत् । इदमप्यत्र न विस्मर्त्तव्यम् मनुष्योऽयं व्यवहारकाले स्वकुटुम्बस्य, स्वजातेः, स्वसमाजस्य, स्वदेशस्य चाप्यंशभूत इवेति सर्वमप्येतदस्य स्वरूपेऽन्तर्भवति । तथा च यथानेन कल्याणायाभ्युदयाय चेष्टितव्यम्, तथैव कुटुम्बस्य

जातेः समाजस्य देशस्य चाभ्युदयार्थमवश्यं प्रयतितव्यम्। न हि कुटुम्बजातिसमाजदेशेष्ववनतेषु कस्यचिदुन्नतिः संभवति, तदवयवभूतस्यास्यापि तदवनत्यावनतत्वात्। यत्र च द्वैधमापतति, भवेत्कयाचित्क्रियया प्रातिस्विकी कस्याप्युन्नतिः, जातिः, समाजस्तु वा तयावनतिमृच्छेत् तत्रावश्यमनेन व्यावहारिकं प्रवृत्तिमार्गमनुसरता सा क्रिया हातव्या भवति। निवृत्तिमार्गे तु कुटुम्बादिषु स्वरूपतैवापोद्यत इति न तदभ्युदयाय पुरुषस्तदात्वे प्रवर्त्तते, स तु केवलमात्मरूपताप्रतिपत्तये प्रयतते, निरभिसन्धि जगतो वा ब्रह्मस्वरूपस्य संसेवनाय प्रयतत इत्यन्यदेतत्। तदुक्तम्—

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्।

अस्य पादत्रयं प्रवृत्तिमार्गपक्षपाति, चरमस्तु पादो निवृत्तिपथिकानामुपादेयः। प्रवृत्तिमार्गे स्वापेक्षया स्वकुटुम्बस्य, तदपेक्षया च जातिग्रामादेः तदपेक्षयापि च समाजस्य देशस्यापि च प्राधान्यं भवतीति कुत्रापि कर्मणि प्रवर्त्तमानेन तेषामपि हितमहितं वालोचयितव्यं भवति। पूर्वपूर्वाभ्युदयसंपादकादपि परापकर्षकात्कर्मणो निवर्त्तितव्यमेव। तथैव स्वरूपेऽपि स्थूलमिदं शरीरम्, सूक्ष्ममिन्द्रियादिकं चापेक्ष्यैवाद्गतिरालोच्या भवति। वाक्षाश्रयत्रापि विभिन्नाः शक्तयः, मेधाशक्तिर्विचारशक्तिर्बलशक्तिः पराक्रमशक्तिः प्रवृत्तिशक्तिरित्याद्यास्तासां सर्वासां सामञ्जस्यं चिन्तनीयतामापद्यते। न ह्येकां शक्तिमुन्नमयता सर्वा अन्याः समुच्छिद्य शक्योऽभ्युदयः केनाप्यासादयितुम्। विरोधे वा या यस्य मुख्या शक्तिः सा सर्वतोभावेन रक्षणीया भवति। सभ्यताया वृत्तस्य यशसश्चापि संरक्षणमनुपदं परामर्शनीयमिति। एवंविधबलाबलविचारपरामर्शपुरःसरमनन्तकालपर्यन्तं परिणतिपरीक्षणप्रवणमीदृशं धर्मतत्त्वं न हि कदाप्यर्वाग्दृशा मनुष्येण स्वबुद्ध्या शक्यमारात्प्रतिपत्तुमितीश्वराज्ञासिद्धेनापौरुषेयेण योगसमाधिवशान्निर्धूताखिलतमोराशिभिरतीतानागतज्ञानकुशलैर्महर्षिभिर्वा प्रदिष्टेन शास्त्रेणैव तदधिगन्तव्यमिति विवेचकाः पश्यन्ति। अल्पेऽपि बलाबले सामान्यः पुरुषो भ्राम्यति, केन कृतेन किं स्यादित्यल्पकालिकमपि परिणामं नावधारयितुं शक्नोति, किमुत सर्वाङ्गीणं चिरन्तनमभ्युदयं विज्ञातुं भवेदस्य शक्तिः। प्रत्यक्षपक्षपातिनो ह्यर्वाग्दृशो महान्तोऽपि पुरुषधौरेया ह्यनागतायां परिणतौ नास्त्येषां बुद्धिबलं सम्यक्। ततश्च धर्मविज्ञाने पुरुषेण न कदाचिदपि समतावलम्बितव्यम्।

तदुक्तमीश्वरगीतासु—

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यविनिश्चये।
किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः। इतिच

एतदेवाभिसन्धाय विधिबोधित एव धर्मो भवतीति भगवतो जैमिनेः 'चोदनालक्षणोऽर्थो धर्म' इति धर्मलक्षणं प्रवृत्तम्।

अतिसामान्यास्तु लोका नैनायिकं बुद्ध्यतिशयमप्यप्राप्ता अनेकविधोत्सर्गापवादसंकुलादनन्तानधिकारिणोऽनुरुध्य यथाधिकारमनेकविधान् धर्मानुपदिशतोऽतिगभीरार्थात् शास्त्रगहनादप्यवधारितुं धर्मतत्त्वमशक्ता इति यथा ते विदुषो यत्कर्मपरायणाननुपश्येयुः, तथैव स्वयमपि तत्तत्कर्मपरायणा भवेयुः, न ह्येतेऽभ्युदयादेकान्ततो वञ्चनीया इति शिष्टाचार एव मुख्यं धर्मलक्षणम् तेभ्य उपदिष्टं महर्षिभिः। तदभिप्रायेणैव च मनो-

भगवत इदं 'विद्वद्भिः सेवितः सद्भिर्नित्यमद्वेषरागिभिः' इति धर्मलक्षणं प्रवृत्तम् । इदमपि च सूक्ष्मदशामतिगभीरविचारगर्भितं वस्तु यच्छुभं कर्मानुतिष्ठन्तमेव पुरुषमन्तरात्मानुमोदते । परिणतिविरसन्तु कर्मापातरमणीयमनुतिष्ठन्नन्तरात्मना प्रतिषिध्यत इव । चौरोऽपि जारोऽपि वा स्वकीये कर्मणि इष्टबुद्ध्या प्रवर्त्तमानोऽपि ततो विस्यदिव क्षणं निवर्त्तते, साहसमधिष्ठाय तु पश्चात्प्रवर्त्तत इति सर्वेषामनुभवसंवादी अवेदर्थ एषः । ततो विज्ञायते अन्तरात्मनोऽस्य क्षेत्रज्ञपदाभिधेयस्य स्वस्वरूपाभिरक्षितरि शुभ एव कर्मणि नैसर्गिकः पक्षपातः ।

आगन्तुकातिशयदोषविशेषकलुषितास्तु दुष्टे कर्मणि प्रवर्त्तन्ते, न तेषामपि हृदयं तदनुमन्यते । तदेवैतदुक्तं मनुना—

'हृदयेनाभ्यनुज्ञातो यो धर्मस्तं निबोधत' इति ।

तदेतत्संसिद्धं संक्षेपतः—एकमेव सर्वेषां धर्मलक्षणानां तात्पर्यम् । स्वरूपरक्षणमेव च धर्मस्य परिणाम इति ।

अथ किं खलु स्वरूपं धर्ममनुतिष्ठताम्—यद्धर्मेण रक्षणीयमित्यपि संक्षेपतो विचार्यमापतितम् । यदिदं निरस्तसमस्तभेदप्रपञ्चं नित्यशुद्धबुद्धमुक्तस्वभावं स्वपरावभासि सर्वगमद्वितीयमात्मतत्त्वं स्वरूपं ग्राहयन्त्युपनिषदः, न तद्धर्मेऽधिक्रियते, शक्यते वाधिकर्तुम् । दिग्देशकालाद्यनवच्छिन्नस्यास्य कर्माधारत्वासंभवात् । न च तद्धर्मेणोत्पाद्यम्, विकार्यं संस्कार्यमाप्यं वा संभवति, कूटस्थतायास्तत्रास्मन्नुपगमात्, सर्वविधविक्रियाप्रतिषेधात् । शास्त्रमपि तत्तद्वर्णाश्रमादिकं तां तामवस्थां तां तां च कामनामधिकारिविशेषणं तत्र तत्रोपाददानं न तस्मिन्निर्विशेषात्मतत्त्वेऽधिकारमारोपयति । तस्माद् व्यावहारिकं देहेन्द्रियान्तःकरणादिविशिष्टमेव चेतनं स्वरूपं धर्मेऽधिक्रियत इति निर्विवादम् । प्रवृत्तिर्नामेयं यद्यपि स्थूल एव देहे समुपलभ्यते लौकिकैः, तथापि न हि चेतनप्रवृत्तिरन्तःकरणप्रेरणमन्तरेण संभवतीत्यपि न विप्रतिपत्तिविषयोऽर्थः । तस्मादन्तःकरणं शरीरं चोभयमपि कर्मानुष्ठातृ, क्वचित्तु कस्यचित्प्राधान्यमित्यन्यदेतत् । सोऽयं देहेन्द्रियान्तःकरणादिविशिष्टश्चेतनः सङ्घातो धर्मानुष्ठाता । तेन चानेन धर्ममनुतिष्ठता स्वभावभूता धर्माः स्वरूपपदाभिधेया रक्षणीयाः । सङ्घातश्चायं प्रत्यात्मं सर्वथा भिन्नो विलक्षणश्चेति नात्र कस्यापि विप्रतिपत्तिरुदियात् । न हि देवदत्तस्य देहेन्द्रियादय एव यज्ञदत्तस्य भवेयुः, ततो विभिन्ना एव सर्वथा ते स्युः । न च सर्वात्मना साधर्म्यमपि परस्परं तेषां स्यात्, भूयसा वैलक्षण्यस्यैव प्रायेणानुभूयमानत्वात् । अस्ति कस्यचिद्देहः स्थूलः परस्य कृशः, कस्यचित्पटुः, परस्य त्वलसः । वातपित्तकफादीनां मूलधातूनां रसासृङ्मांसादीनां धातूनां च तारतम्येन बहून् खलु देहभेदानायुर्वेदविदोऽनुमन्यन्ते । उपलभ्यते चैवमेवेन्द्रियेष्वपि पाटवापाटवादिकृतः परस्परं सुमहान् भेदः । तथैव त्वन्तःकरणस्याप्यपरिसंख्येया एव भेदाः, कस्यचिदन्तःकरणं सत्वप्रधानम्, अन्यस्य रजःप्रधानम्, परस्य तु तामसम् । प्राधान्येऽप्राधान्ये चापि मात्राकृतं सुमहदेव तारतम्यम् । सत्त्वप्राधान्येऽपि क्वचिद् भूयसा रजसा तमसा वानुवेधः स्यात्, क्वचित्तु मात्रयैवानुवेधो दृश्येत । एवमस्य पिशि-

षेषु स्वभावभूतेषु धर्मेष्वपि परस्परमत्यन्तं वैलक्षण्यमप्रतिहतमनुवर्तेत । आगन्तुकैर्भावैरपि अस्ति वैलक्षण्यम् । तद्यथा किञ्चिद्रक्तम् अन्यत्स्वभावत एव विरक्तम् । क्वचित्पटुर्वी मेधा, अपरत्र तु मेधाया मान्द्येऽप्युत्कृष्टा प्रतिभा । किञ्चिद्दयार्द्रम्, अपरं कठोरम् । किञ्चिद्भीरु, अन्यत्तु साहसिकम् । किञ्चित्त्रपाशीलम्, अपरं तु धृष्टम् । न शक्यन्त एवं विधा अन्तःकरणभेदास्तदवान्तरभेदाश्च पुरुषायुषेणापि गणयितुं केनापि प्रेक्षावतेति निर्विवादमेतत् । देश-ग्राम-कुल-समाज-कालादिपरिस्थितिभेदादप्यनन्ता अत्र सम्भवन्ति भेदाः । सत्यपि चैवं वैलक्षण्ये सामान्यमपि तत्र किञ्चिदनुवर्तत एवेत्यपि न तिरोहितम् । न हि शरीरेष्वन्तःकरणादिषु वा परस्परं किमपि सादृश्यं नास्तीति शक्यते वक्तुम्, शरीरान्तःकरणादिव्यवहारस्यैव तेषु तथा सति विलोपापत्तेः । तस्मात्त एतेऽनन्तभेदविशिष्टाः सलक्षणविलक्षणस्वभावाः सामान्यविशेषात्मकाश्चेतनाः संघाता धर्मेऽधिकृताः, आगन्तुकान् प्रतिकूलान् भावानपवृज्य स्वरूपं चैषां धर्मेण रक्षणीयमिति निष्कर्ष एव सिद्धः ।

ततश्च विभिन्नस्वरूपसंरक्षणाय विभिन्ना विलक्षणा एव च धर्मा विनियुज्येरन्निति कः प्रेक्षावानेतन्नानुमन्येत । यथा हि—वातपित्तकफादितारतम्येन विलक्षणस्वभावस्य स्थूलस्य देहस्य स्वरूपसंरक्षणाय क्रमेणोन्नमनाय च, विलक्षणा आहारविहारा भिषग्वरैरुपदिश्यन्ते, न ह्येकस्योपयुक्तं पथ्यं वस्तु तदितरस्यापि पथ्यमेव भवति, दृश्यते तु तत्तस्य प्राणेष्वपि प्रहरत्, कश्चिन्मरिचनिचयेनैव जीवति, परस्तु मरिचदर्शनादप्याकुली भवति, सर्वहितकरत्वेन सुप्रसिद्धं घृतमपि पयोऽप्यन्नमप्युदकमपि वा कस्यचिन्मृत्यव एव कल्पते । तथैव ननु शयनं भ्रमणमवस्थानं वा कस्यचिद्धितकरमपरस्य चात्यन्तं प्रतिकूलं दृश्यते । देशकालादिपरिस्थितिभेदादपि चैषामाहारविहारादिभेदाः कल्पनीया भवन्ति, सत्यपि च सर्वेषां शरीरपोषणपाटवाद्यभिलाषे न बलवद्भिरुपयोज्यानि पौष्टिकानि वस्तूनि निर्बलेनाऽसा समुपयोक्तुं शक्यन्ते, तथा सति तस्य शरीरहानिप्रसङ्गात् । आगन्तुकेषु च ज्वरादिदोषेषु पूर्वं तानपोह्यैवोऽतिसाधकाः प्राकृतिका आहारविहारा उपयुज्यन्ते, न तु दोषसत्तायाम् इत्येवमादिपरस्परमत्यन्तं वैलक्षण्यमायुर्वेदशास्त्रे रूप्याप्यते स्थूलशरीरधर्माणाम् अनुमोद्यते च तत्तथैव धर्मशास्त्रेष्वपि, स्थूलशरीरस्यापि स्वरूपानुप्रविष्टत्वेन तत्संरक्षणस्याप्यावश्यकत्वात् । सत्यपि चास्मिन्नतिमहति वैलक्षण्ये साधारण्येन किमपि सामान्यमप्याहारविहारादौ समनुवर्तत एव, सामान्यांशसंरक्षणाय तस्यात्यन्तमपेक्षितत्वात् तथैवान्तःकरणादिसम्बन्धिष्वपि सर्वेष्वेषु धर्मेषु तुल्यन्यायेनैतदवगन्तव्यम् । सामान्यविशेषात्मका हि सर्वेऽपि संघाता धर्मानुष्ठातार इत्यवोचाम । तदनुरोधेनैव खलु धर्मेष्वपि द्वैविध्यमिदमनुवर्तत एव । सन्ति केचित्सामान्या धर्माः अपरेतु विशेषा धर्माः । मनुष्यत्वरक्षका हि धर्माः सामान्या धर्मा इत्युच्यन्ते, आहालिकमाविद्वदग्रेसरं चैते तथैवाचर्यन्ते । न हि कश्चिदप्युन्मत्तो विषभक्षणादौ स्वरूपविनाशके कर्मणि प्रवर्तते । इदं च मनुष्याणां पश्वाद्यसाधारणं स्फुटं वैलक्षण्यं यत्स-
[illegible] । सम्भूयोन्नतिसाधनं मनुष्ये-

वोपलभ्यते, न तथा पशुषु । तत एव च पारस्परिकसम्बन्धसंरक्षणाय परस्परोपमर्दविघाताय च प्रवृत्ता एषा समाजव्यवस्था अनुवर्तन्ते यदि हि नाम मनुष्यसमाजे तावदन्योन्यमनवरतं मिथ्याव्याहारैः प्रातारयिष्यत् अन्योऽन्यस्य धनेषु प्राणादिषु च क्रूरमचेष्टिष्यत, अन्योऽन्यस्मिन् साधारणेऽप्यपराधेऽत्यन्तमकोपिष्यत, अन्योऽन्यस्य दुःखे समुदासिष्यत, अन्योवान्यस्य दारा अपाहरिष्यत् सुदूरं नूनमथ समाजव्यवस्थाशब्दोऽपि तर्हि समुदसारयिष्यत । सहस्रं च योजनानां शान्तिः पलायिष्यत । तथा च समाजान्तः पातिनः सर्वेऽपि साधारण्येन दुःखभाजोऽभविष्यन् । न च मनुष्यत्वं नाम कथमपि संरक्षितमभविष्यत् । तस्मात्समाजव्यवस्थानि र्वाहेण मनुष्यत्वसंरक्षणाय सत्यम्, अस्तेयम्, अहिंसा, क्षमा, दया, स्वदारतुष्टिश्चेत्याद्याः सामान्या एते धर्माः मनुष्यमात्रस्य नियम्यन्ते । धर्मानेतान् व्यभिचरन्नाचाण्डालं सर्वोपि जनः समाजव्यवस्थाभङ्गकारीत्यधार्मिकः स्यात्, स चायं व्यवस्थापरिपालकै र्नृपादिभिर्दण्ड्येत, तथाविधेन दुष्टेन कर्मणाऽन्तःकरणेऽपि दुरदृष्टोत्पत्त्या कालान्तरेऽपि जननान्तरेऽपि च दुःखमुपभुञ्जीत । तस्मात्प्रच्छन्नमपि नैतानधर्मानाचारन्ति विज्ञाः, कालान्तरोपभोग्यस्य दुःखस्य नियतत्वात्, न हि कर्म कदाप्यफलं संपद्यते, अवश्यन्त्वाचर्यमाणमेव शुभमशुभं वातिशयं कर्त्तर्यादधातीति सुदृढोऽयमार्याणां विश्वासः । तस्मात्समाजे वा रहसि वा न कथमपि सामान्यान् धर्मानतिचरेत् । देशविशेषे कालविशेषे तु वा प्रबलतरं समाजापकर्षमभिध्याय धर्माणामेषां सामान्यानां शैथिल्य-मप्यनुमोद्यते स्मृतिकारैः—

'वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत्'

'एकस्मिन् यत्र निधनं प्रापिते दुष्टकारिणि ।
बहूनां भवति क्षेमं तस्य पुण्यप्रदो वधः' ।

'बुभुक्षितस्त्र्यहं स्थित्वा धान्यमब्राह्मणाद्धरेत्' ।

इत्याद्यासु स्मृतिषु स्फुट एषोऽर्थस्तद्विदाम् । यस्यैकस्य महतः समाजहितकरस्य पुरुषस्य वधेन भवेत्समाजस्य महती हानिः तस्य वधः सर्वथा निवारणीय एव । यस्य तु दुष्टस्य वधेनैव समाजस्य हितम् स एव हन्तव्य एव व्यवस्थापरिपालकैराजादिभिः । समाजव्यवस्थैवं सति परिपालिता स्यात् । दुरदृष्टस्य च तज्जनितस्य निवारणाय प्रायश्चित्तं तत्र तत्रोपदिशन्ति स्मृतिकाराः । एवंविधश्चायमुत्सर्गापवादभावः शास्त्रेष्वेव व्यवस्थापितः शास्त्रैकसमधिगम्यो न तु स्वबुद्ध्या परिकल्पनीयः । तथा सति बुद्धिमान्द्येन महदनर्थप्रसङ्गादिति कृतमप्रकृतप्रपञ्चेन । तदित्थं समाजव्यवस्थासम्बन्धिनो धर्मास्तदितरेऽपि च मनुष्यत्वसंरक्षका धर्मा आयुर्वेदनियमाश्च मनुष्यसामान्याधिकारेण प्रवृत्ताः सामान्या धर्मा इति व्याख्यातम् ।

अथ विशेषांशसंरक्षणाय ये धर्मा आवश्यका भवन्ति, ते विशेषा धर्मा इत्याख्यायन्ते । चैते विशेषाणां स्वरूपाणां भिन्नत्वाद् भिन्ना एव भवन्ति । अधिकारिभेदात् त्रैविध्यं तावत्तेषां प्रथमं व्यवस्थाप्यते ज्ञानम्, उपासना, कर्म चेति । ये खलु सत्वप्रधानाः, विरक्ताश्च जगति पूर्वभवानुष्ठितैर्धर्मैः स्वभावेनैव, एते सर्वेष्वपि कामेषु क्षयातिशयादीन् दोषाननुपश्यन्तः संन्यस्तेतराभिलाषाः सन्तः केवलमनवच्छिन्नानन्दं पूर्णलक्षणं स्व-

स्वरूपमानन्दमेवाभिवाञ्छन्तीत्यविद्यापनयाय विद्यापरपर्यायज्ञानमेवैभिरुपादेयम् । ज्ञानं यद्यपि न धर्मः, धर्मस्य क्रियारूपताया व्यवस्थापितत्वात्, ज्ञानस्य च तद्वैधर्म्यात् नित्यत्वात्, स्वरूपत्वाच्च, तथापि तथाविधज्ञानाधिगमायाविद्यामपनोदितुं श्रवण, मनन, निदिध्यासनेषु प्रयतनं ज्ञानसाधनीभूतशमदमाद्यनुष्ठानं च धर्मो ज्ञानपदेनोपचरितो विज्ञेयः । तस्मिंश्चैतस्मिन्नुत्तमाधिकारिणामुपयुक्ते ज्ञानाख्येऽपि धर्मे पुनरुत्तमत्वेनाभिमतेष्वधिकारिष्वपि परस्परं सत्वविशुद्धितारतम्याद् विलक्षणा मननप्रकारास्तेषु तेषु दर्शनेषूद्भाव्यन्ते । न खलु सत्वप्रधानो भोगेषु च सांसारिकेषु विरक्त इत्येतावता सर्वोऽपि जनस्तुल्यतामापद्येत । न सर्वोऽपि तुल्यमेव तपोऽनुष्ठातुमिन्द्रियाणि वा विजेतुं प्रभवेत् । नवा सूक्ष्मतमं तत्त्वमवगाहितुं तुल्यमेव सर्वस्य सामर्थ्यं भवेत् । तत एव तत् साधनान्यपि कृच्छ्रचान्द्रायणादीनि विभिन्नानि स्मरन्ति धर्मसूत्रकाराः । स्थूल-सूक्ष्म-सूक्ष्मतर-क्रमेण चात्मतत्वमवबोधयितुं प्रयतन्ते न्यायसांख्यवेदान्तप्रभृतीनि दर्शनानि । एषामेव च हिताय तासु भूमिकासु शुद्धाद्वैतविशिष्टाद्वैतद्वैताद्वैतशुद्धद्वैताद्विज्ञानान्यपि कथंचिदुपयुज्यन्ते, अधिकारिभेदादेव च भक्तिरपवर्गो वा प्राप्य एषां भवति इति नैतद्विस्तरभियेह प्रपञ्चयिष्यामः । परिपक्वानां चैषां सर्वविधविधिनिषेधातिगत्वमपि शास्त्रेष्वेव समनुबोध्यते । त इमे ज्ञानेऽवान्तरभेदाः ।

ये तु स्थूलशरीरादौ शिथिलीभूतात्मबुद्धयोऽपि द्रव्य-पुत्र-कलत्रादिषु कथंचिदननुरक्ता अपि च नैकान्ततो जगति विरज्यन्ते, पूर्वाभ्यासवासनाबलेन भूयो भूयोऽपह्रियन्ते, तेषामपरिपक्वानामन्तःकरणस्थैर्यसंपादनाय लोकातिगतत्त्वैश्वर्यसमधिगमाय वा विविधा उपासनाः समुपदिश्यन्ते । न ह्यस्थिरमनसो ज्ञानाधिगमाय शमदमादीनि संसेवितुं प्रभवेयुः, सेवमाना अपि वा साफल्यमनुविन्देरन् । रागेण मनसोऽपहारे शमदमादिपरित्यागसंभवात् । तस्मान्माभूवन्नेत उभय विभ्रष्टा इत्यधिकारानुरूपमुपासनामेव तेभ्य उपदिशति कारुणिकं शास्त्रम् । उपासनाया अपि च तांस्तानधिकारिणोऽनुरुध्य वर्तन्ते भूयांसो भेदाः । दहराद्युपासनासु केचिदधिक्रियन्ते, ईश्वरस्य प्रतीकोपासने परे नियोज्यन्ते । अवताराद्युपासनास्वन्ये प्रवर्तन्ते । देवादयोऽन्यैरुपास्यन्ते । मनुष्याणामेव राजादीनां पित्राचार्यादीनां वोपासनेऽन्येषामधिकारः प्रदर्श्यत इति तां तां प्रकृतिमनुरुध्य सर्वमिदं समञ्जसं द्रष्टव्यम् । प्रतीकोपासनादावपि च तत्तत् प्रकृतिभेदात् सत्त्वरजस्तम आदि प्रधानास्तास्ता पुरुषमूर्तयः स्त्रीमूर्तयश्चोपास्यत्वेन निर्दिश्यन्ते । तदेतत् सर्वमप्यधिकारिभेदात् । नह्यस्थिरं मनः किमपि मूर्तमनालम्बमानं स्थैर्यं कथमपि भजते । तत एव-

अचिन्त्यस्याप्रमेयस्य निर्गुणस्याशरीरिणः ।
उपासकानां सिद्ध्यर्थं ब्रह्मणो रूपकल्पना ॥

इत्यागम आह । मूर्त्तानामपि च तमसानुविद्धं चेतो न ह्येकदैव सत्वप्रधानायां मूर्तौ समासक्तं भवति, सात्त्विकं वा न तामस्यां प्रसज्यते इतीत्थं तारतम्यमिदमधिकारानुरोधादवकल्पत एव । यत्र कुत्राऽप्यवस्थापिते तु चेतसि सिद्धमेवोपास्तिफलम् । स्थैर्यं भजमानं चेदमभ्यासादन्यत्रापि स्थैर्यं भजत एव, तामसमपि च तमो विहाय

सात्त्विकतामापद्यत इतीदं सर्वमुपास्तेरेव फलम्। एतदभिसन्धायैव—

"यथाभिमतध्यानाद्वा"

इति भगवान् पतञ्जलिः स्थैर्योपायं चेतसो निर्धारयति। तस्माद् विविधा उपासनाभेदा एते विज्ञानानुमोदिता एवेति निर्विवादम्।

अथ येषामविजानतां विजानतामपि वा देहादौ सुदृढा स्वरूपवासना, अभिलाषि च तितमां तेषु तेषु मानुषेषु दिव्येषु वा भोगेषु चेतः, त इमे प्रथमं मलापनोदाय तत्तदभिलषितसंसाधनाय वा कर्मस्वेव विनियोज्यन्ते। नह्युपासनायां नियोज्यमाना इमे किमपि फलं ततोऽधिगन्तुं प्रभवेयुः। विषयगर्धिनोऽत्यन्तमस्थिरस्य चेतसः स्थैर्यानुपपत्तेः। यदि कर्म परित्यज्य केवलायामुपासनायामिमे प्रवर्त्तेरन्, विफलएव श्रमो भवेत्। मध्ये मार्गादेव च निवृत्तिरापद्येत। नहि समलस्य चेतसः स्थैर्यमस्तीति भावुका महर्षयः पश्यन्ति कर्म तु द्विविधम्। फलभावनां परित्यज्य मलापनोदायैवेश्वरार्पणबुद्ध्याऽनुष्ठीयमानमेकम्, तत्तत्फलाभिलाषेण च संपाद्यमानमपरम्। आद्यं साक्षादेवान्तःकरणशुद्धये कल्पते। परन्तु तां तां कामनां प्रपूरयद् दृढं शास्त्रेषु प्रत्ययमादधानं शास्त्रोक्तवासनापरित्यागादिद्वारा चेतःशुद्धिं जनयति। नहि सर्वे अपि फलाभिसन्धिमपहाय कर्मसु प्रवर्तितुमुत्सहेरन्। फलवासनानुविद्धास्तु प्रवर्त्तन्तएवानवरतम्। फलं चैतत् सम्यगनुष्ठिते कर्मण्यवश्यमेव सिध्यति। कार्यकारणभावविनिश्चयपुरस्सरमेव तत्तत्फलोद्देशेन तत्तत्कर्मणां विहितत्वात्। सति च कारणे कार्यावश्यंभावात् तदुक्तं भगवता—

"क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा"

गौतमेनापि च परमर्षिणा—

"न कर्मकर्तृसाधनवैगुण्यात्"

इति फलानुत्पत्तिपूर्वपक्षं समादधता सत्यां साधनादिसंपत्तौ फलावश्यंभावोऽङ्गीकृतएव। तया चैतया फलसिद्ध्या दृढ आश्वासः शास्त्रेष्वनुष्ठातॄणां भवति। शास्त्रीयं च कर्म कथमप्यनुष्ठीयमानमपि चेतसि कांचिच्छुद्धिं जनयत्येव। शास्त्रीयप्रक्रियाया एव शुद्धिसंपादकत्वात्। ततश्च शुद्धे चेतसि दृढ आश्वासे क्रमेण शास्त्रोक्तेष्वन्येष्वप्युपदेशेषु बलाद् दृष्टिरेषामाकृष्यत इति तेऽपि वासनाजालं विच्छिद्य शास्त्रोपदेशमनुसृत्यैव कर्मसु निष्कामं प्रवर्तन्ते, ततश्चात्यन्तिकमभ्युदयं गच्छन्ति। किमुच्यतां कारुण्यं शास्त्रस्य ये खल्विमे नितान्ततामसाः, धर्मवार्तायामपि चेतो येषां विद्रूयते, शास्त्रगन्धमपि ये न विश्वसन्ति। कथमपि ये धर्मे न प्रवर्तयितुं शक्यन्ते, शत्रुहनने, धनिकमोहने, परदारवशीकरणे च निरन्तरं येषां नैसर्गिकी प्रवृत्तिः, तेऽपि मा भूवन् सर्वथा जनिलाभवञ्चिता इति तदर्थमिदमभिचारान् मारणमोहनाद्यानुपदिशति। स्वेष्टसम्पादके कर्मणि तेऽवश्यं प्रवर्त्तेरन् तत् सिद्ध्या च शास्त्रेषु कृतविश्वासा अन्यमप्युपदेशं क्रमेणाद्रियेरन्, तथा च मुख्यैरुपदेशैरहिंसास्तेयसत्यादिषु सामान्येषु धर्मेषु विशेषेषु च तदुपयुक्तेषु प्रवर्तेरन्निति क्रमेणाभ्युदयभाजोऽवश्यं भवेयुरिति पश्यति कारुणिकं शास्त्रम्।

तस्माल्लोकहितायै यथामधिकारानुरूपो विभागपुरस्सरं कर्मण्युपदेशोऽन्यान्यशास्त्रेषु।

तदेतत् कर्मात्यन्तगहनमत्यन्तं भिन्नं विलक्षणं च तत्तदधिकारानुरूपं तत्तद्धिताय भवति। नित्यं नैमित्तिकं च केवलं स्वरूपरक्षणायैव। तदपि च स्वरूपभेदाद् भिन्नम्। प्रतिषिद्धा अप्याहारविहारादेस्तत्तत् स्वरूपभेदाद्विभिन्नास्तत्र तत्र प्रवर्तन्ते। यथा स्थूलस्य देहस्य हिता आहारविहारा आयुर्वेदविद्भिरुपदिश्यन्ते, प्रतिकूलाश्च निषिध्यन्ते। अन्नादिभिरेव शरीरस्योपचीयमानत्वात्। तथैव तन्विदमन्तःकरणमपि शरीराधिष्ठितं शरीरेण नित्यसंबद्धमाश्रयगतैर्गुणैर्वायुरिव कुसुमसौरभेण सपृक्तं भवति।

"अन्नमयं हि सौम्य मनः"

इत्याचष्टे भगवती श्रुतिः। इत्थं च मनस उपयुक्ता आहारविहारा धर्मशास्त्रविद्भिरुपादीयन्ते, प्रतिकूलाश्च परिह्रियन्ते। मनश्च यत् सत्त्वप्रधानं, सात्त्विका एव तत्राहारविहारा उपयुक्ताः स्युः। विपरीताश्च प्रतिषिध्येरन्। एवं राजसेषु तामसेष्वपि च योज्यम्। यद्यपि तु सत्त्वप्राधान्यमेवान्तःकरणस्य मुख्यो धर्मः, प्रकाशकत्वात्। आगन्तुकस्तु दोषस्तत्र तामसत्वादिः। स चापनोद्य एव, न तु स्वरूपवत्संरक्षणीयः। नहि मूढेन मौढ्यमेव रक्षणीयमिति कश्चिदभिदधीत प्रेक्षावान् तथापि तु क्रमेणैव वदन्नमनीयं भवति। एकान्तत एव स्वरूपानुप्रविष्टस्यागन्तुकस्यापि विरुद्ध उपचारे स्वरूपोपमर्देनोभयविघ्नप्रसङ्गात्। आगन्तुकमपि हि ज्वरादिं दोषं क्रमेणैव पाचयन्त्यायुर्वेदनिष्णातारः। तस्माद्राजसानां तामसानां च सात्त्विकेभ्यो विभिन्नैव भवत्याहारविहारादिप्रक्रिया। तथैव चैषां रुचिरपि न विरोधिता भवति। न हि सात्त्विकोचितेष्वाहारादिषु ते शक्यन्ते प्रवर्तयितुम्। बलात्प्रयतमानाश्च धर्ममेवोत्सृजेयुः। अधिकारानुरूपमेवाचरणं तस्माच्छ्रेयः। काम्यमपि कर्म कामनानुरूपं विविधफलं विविधशाखं च वर्ण्यते। केषांचिदुत्कृष्टानामुपकाराय वैदिकं ज्योतिष्टोमादि विधीयते, स्मार्तमेव परेभ्यः, साधारणदानादय एव धर्मः साधारणेभ्यः।

ननु भो वैदिकं कर्म यद्युत्कृष्टमभ्युदयजनकं च, किमिति सर्वे तत्र नाधिक्रियन्ते, केषांचित्तदभ्युदयं जनयेत्, परेषां च न जनयेत् इति नैतद् बुद्धिमुपारोहति इति चेन्न सम्यगालोचयन्ति भवन्तः। उक्तं पूर्वम् पौष्टिका अप्याहारविहारा बलवद्भिः समुपयुज्यमाना ये हितं जनयन्ति, न ते निर्बलैस्तथैव समुपयोक्तुं शक्यन्ते। अजीर्णास्ते स्वरूपविनाशं तत्र सम्पादयेयुरिति, व्यायामश्चाय शरीरोन्नतिसाधकोऽपि बलवद्भिर्यादृश उपयुज्यते तथैव निर्बलैश्चेदुपयुज्येत, नूनं शरीरहानिस्तस्य प्रसज्येत। तथैव ननु नितान्ततामसा ये जनाः, उत्कृष्टः सात्त्विकोऽतिशयस्तत्राधीयमानोऽत्यन्तं स्वरूपविरोधात् स्वरूपमेव विनाशयेत्। दूरे तु समुन्नतिः किमन्यद् वैदिकेष्वपि कर्मसु न सर्वेषु सर्वेऽधिक्रियन्ते, वाजपेयादौ ब्राह्मणेतराणां राजसूयादौ च क्षत्रियेतराणामनधिकारात्। अन्येषां तत्र स्वरूपानुकूल्याभावात्। येष्वपि चाधिक्रियन्ते, तेष्वपि क्रमेणाधिक्रियन्ते। अनुष्ठितदर्शपौर्णमासानामेव चातुर्मास्येषु, तदनन्तरमेव च सोमादावधिकारात् कुलक्रमोऽपि बहुषु कर्मस्वावश्यको भवति। पुरुषत्रयं यावद्विच्छिन्नसामैर्न सहसा सोमः शक्यते पातुम्। तस्मात् तत्तदधिकारानुरूपमेव

क्रमेणैव चोन्नतिसाधनं साधीयो भवतीति सूक्ष्मं विवेचयद्भिः स्वयमनुमन्येत । तत एवात्यन्तमुत्कृष्टेषु वैदिकेषु कर्मसु द्विजानामेवाधिकारः, संस्कारक्रमेण, कुलक्रमेण च तैस्तेषां परिगृहीतत्वात् । अन्येषां तु दानादौ पूर्तादावेव चाभ्युदयसाधनीभूतेऽधिकारः । न सर्वेषां सर्वत्राधिकारः । यथा चागन्तुकेन ज्वरादिना दोषेणार्दिता न प्राकृतमाहारविहारादिकमनुशीलयितुं प्रभवेयुः, प्रभवन्तो वा हानिमृच्छेयुः, तथैव पातकेन केनचिदागन्तुकेन दोषेण संसृष्टा यावत् प्रायश्चित्तैस्तमागन्तुकं दोषं नापनुदेयुः, न तावदाधिकारिके कर्मणि प्रवृत्तिस्तेषां साधीयसी भवेत् । तस्माद्यथाधिकारमाचरणमेव सर्वेषां श्रेयः ।

ननु भो ब्राह्मणाद्या यथा स्वावधिकोत्कृष्टं स्वर्गवासादि कामयन्ते, लभन्ते च कर्मभिः, कामनायाः स्वरूपानुप्रविष्टत्वाच्च स एषां धर्म एवाभिमन्यते; तथैव शूद्राद्या अपि स्वावधिकोत्कृष्टं ब्राह्मण्यादि यदि कामयेरन्, कुतस्तर्हि ते कर्मभिर्नाप्नुयुः; कुतो वा स एषामधर्मः स्यात् । क्रमेणैव चेदुन्नतिः साधीयसी, आस्तां क्रमेणैव, शूद्रः प्रथमं वैश्यत्वमधिगच्छतु, अनु क्षत्रियत्वम्, पश्चाद् ब्राह्मण्यम्, कुतस्तु सर्वथोन्नतिस्तस्य प्रतिबध्यते इति चेतदपि निःसारम् । स्वरूपमविनाशयन्नेवाभ्युदयो धर्म इति पूर्वमेव समाहितत्वात् । यः खलु शूद्रकुलोत्पन्नः, शूद्रोचिताः स्वभावा गुणाश्च तत् स्वरूपान्तःपातिनः, तद्विरुद्धाश्चेदनेन धर्मा अनुष्ठीयेरन्, स्वरूपहानिस्तस्य प्रसज्येत । न च स्वरूपहानिर्धर्मः । न च यथा ब्रह्मण्यात् पतितो ब्राह्मणाभिमानं परित्यजति, शूद्रत्वाभिमानं चोपादत्ते इति शूद्रोचिता एव धर्मास्तस्य दिश्यन्ते, तथैवायं शूद्रोऽपि शूद्रत्वाभिमानमपहाय ब्राह्मण्यमभिमन्तुं शक्ष्यति इति साम्प्रतं वक्तुम् । स्वभावस्यानपायित्वेन शुक्रशोणितद्वारा प्रविष्टानां शूद्रोचितानां गुणानां तेन परित्यक्तुमशक्यत्वात् । यद्यप्यन्तःकरणसमवायिन इमेगुणाः, स्थूलशरीरमेव च मातापितृजमिति नान्तःकरणगुणानां शुक्रशोणितजन्यत्वमेकान्ततः सम्भवति । तथापि शुक्रशोणितजन्येन स्थूलेन देहेन नित्यं सम्पृक्तं मनस्तदनुरोधेनैव गुणभाग् भवतीत्यवोचाम, न हि आढ्यस्य देहस्य नान्तःकरणे कोऽपि प्रभाव इति शक्यते केनाऽप्यप्रेक्षावता वक्तुम् । किञ्च पूर्वभवकर्मानुष्ठानजनिता इमेऽन्तःकरणे संस्कारविशेषाः, पूर्वकर्माधीनमेव च तासु तासु योनिषु जन्मेत्यार्याणां विश्वासः, तदाह भगवान् पतञ्जलिः—

सति मूले तद्विपाको जात्यायुर्भोगा इति ।

तथा च येनैव कर्मणा शूद्रादियोनौ जन्तुरयमुत्पादितस्तेनैवावश्यं गुणा अपि तस्मिँस्तथाविधा विनिवेशिता इति क एतान् इदानीमपनयतु स्वरूपनाशमन्तरेण ? । अतएव च सुवर्णकारादीनां तत्तद्व्यवसायनिपुणानां सुनस्तेषु पैतृकेषु व्यवसायेषु स्फुटं जन्मनैव निपुणमतयोऽनुभूयन्ते । ततश्च शूद्रत्वादेः सति शरीरे परित्यक्तुमशक्यत्वाद्, गुणान्तराणां चैकान्तत आधातुमशक्यत्वाच्छूद्रो ब्राह्मणधर्मेषु यदि नियुज्येत, उभयविभ्रष्ट एव स्यात् । न च काञ्चिदप्युन्नतिं साधयितुं प्रभवेत् । समाजव्यवस्था चैवं सति विरोधिता स्यात् । स्फुटं च समाजव्यवस्थाविरोधोऽधर्म इति प्रत्यपीपदाम । ब्राह्मणस्तु यः शूद्रत्वमभिम-

न्येत, पतत्येव सः, स्वनिष्ठब्राह्मण्यपरित्याग एव हि पातित्यमिति सामान्येषु शूद्राद्युचितेष्वेव धर्मेषु सोऽधिक्रियेत, तावन्मात्रस्य तत् स्वरूपत्वात् । समाजव्यवस्थाविरोधदण्डोऽपि चानेन पतनरूपः समुपमुक्तो भवति। अनायाससिद्धं पतनं, दुर्लभा तु समुन्नतिः । तस्मात् स्वधर्माचरणेनैव प्राप्यत उन्नतिः । यस्तु ब्राह्मणादिः स्वर्गाय यागाद्यनुतिष्ठति, जन्मान्तरोपभोग्यं सोऽतिशयमात्मन्याधत्तीति न वर्तमानस्वरूपविरोधस्तेन कृतो भवति । तथैव यदि जन्मान्तरे ब्राह्मण्यवैश्यत्वादिप्राप्तयेऽतिशयविशेषं संचेतुं यतेत शूद्रादिः कामं यतताम् । सोऽस्य स्वरूपाविरोधाद् धर्म एव स्यात् । तदुक्तं श्रुतौ—

"य इह रमणीयचरणा भवन्ति, अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्, ब्राह्मणयोनिं वा क्षत्रिययोनिं वेत्यादि"

तस्माद्यत्र कुले यस्य जनिस्तदनुकूला एव तेनाचर्यमाणा धर्मा धर्मा भवन्ति । निर्विशेषमिदमाश्रमधर्मेष्वप्येवमेवानुसन्धेयम्—

ब्रह्मचर्यगार्हस्थ्याद्यभिमानवतस्तत्स्वरूपभाजस्तत्तदुचितधर्माधिकृतत्वात् । अन्यत् स्वरूपमभिमत्यान्यधर्माचरणे पातित्यप्रसङ्गात्, अयं त्वाश्रमाभिमानो नोपस्थितदेहविरोधी, किन्तु देहसमनियतवर्णाभिमानं स्थाप्य एवेत्येकस्मिन्नपि जन्मनि विभिन्ना आश्रमधर्मास्तदभिमानभाजानुष्ठातुं शक्यन्त इत्यन्यदेतत् । स्त्रीपुंसधर्माणां मिथो वैलक्षण्यमप्येवमेव स्वरूपभेदेन समाधेयम् । प्रजननं हि स्त्रीणां मुख्यः स्वभाव इति तदनुकूला एव तासामादिश्यन्ते धर्माः, विपरीतास्तु गूढशास्त्राध्ययनादयः प्रतिषिध्यन्ते । यया च रीत्या नन्ततेरुत्कर्ष आसां सम्भाव्यते, त एव मुख्या निरूप्यन्त आसां धर्माः, माभूत् स्वरूपेऽपि संकर इति दृढं पातिव्रत्यमासां मुख्यो धर्म आम्नायत इति कृतं बहुना विस्तरेण ।

तदित्थं स्वरूपभेदात् कर्मभेदा इमेऽनन्ता एव, विज्ञानानुमोदिता उन्नतिसाधनीभूताश्चैत इति सङ्क्षेपतः प्रसाधितमेतत् । सोऽयं विज्ञानकृतो धर्मभेद उन्नतिपक्षपाती । अथाज्ञानकृतोऽपि धर्मभेदोऽन्यः प्रवर्तते । अवश्यं सर्वोऽपि निर्विशेषं स्वरूपरक्षायै यतते लोकः । परमज्ञानवशीकृताः केऽपि स्वरूपमेव सर्वं याथार्थ्येन न प्रपद्यन्ते, अन्यथा सत्स्वरूपमन्यथाऽऽन्ये जानते । कया च रीत्या स्वरूपरक्षा सेत्स्यतीति शास्त्रेष्वप्यविश्वस्य स्वमतावलम्बमानाः परे भ्राम्यन्ति । त इमेऽज्ञानकृता धर्मभेदा विविधा एषां भवन्ति । यथा हि य इमे हालिकाः पांसुलपादा नैसर्गिकं वैनयिकं वाऽतिशयमप्राप्ता भवन्ति, स्थूलमेव शरीरं केवलं स्वरूपत्वेन प्रतिपद्यन्ते, नान्यत् किमपि वैदुष्यं वा यशोऽन्तःकरणं वा सभ्यतां वा तेऽभिजानन्तीति केवलं शरीररक्षार्थं ते प्रयतन्ते, स एवैषां दृष्टौ धर्मः । तत्रापि च परिणतौ किं किं सुखकरं, कथं वा भविष्यतीति परिणतिविज्ञानेऽपि मुह्यन्तः शरीररक्षामपि यथोचितं कर्तुं न पारयन्ति । अथ य इमे शिक्षिता सभ्यताभिमानिनः सभ्यतामपि ते स्वरूपानुप्रविष्टामाकलयन्तस्तद्रक्षार्थमपि प्राणपणेन यतन्ते । शरीरेण कथंचित् खेदमनुभवन्तोऽपि सभ्योचितान् वेषव्यवहारान् न परित्यक्तुमनुमन्यते, सैषा स्वरूपरक्षा मुख्य एषां धर्मः अथ येऽधिकं शिक्षिता लोकानुभवकुशला यशोभिलाषुका भवन्ति, यश एव ते मुख्यं स्वरूपमभिमन्यन्ते

यशोऽर्थं च द्रविणं प्राणानपि योत्स्रष्टुं सन्नद्धा भवन्ति । कविकुलगुरुणोपनिबद्धं दिलीपवचनमिदमत्र न विस्मर्तव्यम्—

किमप्यहिंस्यस्तव चेन्मतोऽहं
यशः शरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ॥

स एव एवंविधानां यशोरक्षाऽपि मुख्यो धर्मः । इत्थमेवात्मान्तःकरणादौ परलोके जन्मान्तरे वा नास्ति येषां विश्वासः, एतल्लोकसम्बन्धिन एवैतैरभ्युपगम्यन्ते धर्माः । येषां तु दृढः शरीराद्यतिरिक्तात्मनि प्राणान्तःकरणादौ लोकान्तरे जन्मान्तरे च प्रत्ययः, त इमे लोकान्तरोपभोग्यानेव धर्मान् बहुमन्यन्ते । इहानुष्ठितैः कर्मभिर्यादृशान् संस्कारान् शुभान् अशुभान् वा वयं संचेष्यामः, तदनुरूपमेव सुखं दुःखं वा लोकान्तरेऽपि जननान्तरेऽपि वा भोक्ष्याम इति भवत्येषामनन्यथा कृता प्रतिपत्तिः । अनेकयुगपरिव्यापिनः सूक्ष्मस्य शरीरस्यापेक्षया स्थूलमिदं शरीरं स्वप्नमेव त्वभिमन्यन्ते । अतएव तु सूक्ष्मशरीरस्य भाविसुखाधिगमाय लौकिकं सुखं तृणत्याजमिमे त्यजन्ति । परे चात्मस्वरूपावगतिनिपुणाः स्वरूपानन्दावाप्तये, आमुष्मिकानपि भोगान् स्वप्नपक्ष एव निक्षिपन्ति । भगवता याज्ञवल्क्येन धनार्थं प्रलोभ्यमाना आह तत्र भवती मैत्रेयी "येनाहं नामृता स्यां किं तेन कुर्याम् ? यदेव भगवान् वेद तदेव मे ब्रवीत्विति " यथाहि—भाविबह्वन्नापेक्षया गेहस्थितमन्नादि कृषीवलाः क्षेत्रेषु परित्यजन्ति, तथैव विज्ञानिनां धर्मे भाविलोकान्तरबहुसुखापेक्षया लौकिकाल्पसुखपरित्याग एव द्रष्टव्यः । तत्तु येन तथा प्रतिपद्येरन् कया व्यपेक्षया ते लौकिकानि सुखानि परित्यजेयुः कथं कारं वा परभवार्थं संस्कारान् संचेतुं प्रयतेरन् । यथा यथा तु ये स्वरूपं परमार्थतः परिचिन्वन्ति, तथा तथा तद्रक्षोपायरूपो धर्म एषां गभीरो भवति । परलोकमविजानतां त्वैहलौकिकं सुखसम्पादिका नीतिरेव मुख्यो धर्मः । एवं सामान्यमेव ये स्वरूपत्वेन प्रत्यभिजानन्ति न विशेषपरिचये निपुणा भवन्ति, सामान्येष्वेव धर्मेषु तेऽवलम्बन्ते, विशेषाँस्तु धर्मानुपेक्षन्त एव । तत एव तु वेदबाह्यानामिमे धर्माः केवलं नीतिप्रधानाः समाजव्यवस्थासंरक्षणाय सत्यादिसामान्यधर्मप्रधानाश्च दृश्यन्ते, न तु कर्मतत्त्वमुपासनातत्त्वं भक्तितत्त्वं ज्ञानतत्त्वं वा तेषु विजृम्भितं दृश्यन्ते अनादेः कालात् स्वरूपविज्ञाननिपुणाया दर्शनपारंगताया आर्यजातेस्तु धर्मा मनुष्यजन्मनः साफल्याय शुद्धात्मप्रतिपत्तिपर्यन्तं विजृम्भिता दृश्यन्ते । परिणत्यवधारणप्रवणाश्चैत आर्याः स्वरूपावधारणपूर्वकमधिकारानुरूपं ताँस्तान् धर्मान् व्यवस्थापयन्ति । अत एव चार्यधर्मविज्ञाने परं काठिन्यं दृश्यते, दार्शनिकं विज्ञानमन्तरेण स्वरूपादेरवधारयितुमशक्यत्वात् । इदं चैषां विज्ञानमनधिगत्य य एतान् आक्षिपन्ति, प्रत्यवतिष्ठन्ते, कल्पयन्ति च तद्विरुद्धान् धर्मान् त एषामेते धर्मभेदा अज्ञानकृताः । स्वरूपानधिगमादेव चाधिकारानुरूपमेते विशेषान् धर्मान् व्यवस्थापयितुं न शक्नुवन्ति । केचिद्देशं कंचित् कालं तु वाभिलक्ष्य समाजाभिरुचिं मानयन्त एषां नेतारः कांश्चिद् धर्मान् प्रचारयन्ति । त एते प्रायेण नीतिप्रधाना [illegible] आर्येतराणां धर्माः । न त धर्मतत्त्वं

तेषु याथार्थ्येन विज्ञायन्ते । आर्येष्वपि चेदानीं विज्ञानाभावादधिकारोपयोगं विस्मृत्य परस्परोपमर्देन ये विविधाधर्मा अवलोक्यन्ते, परिणतिश्चापि बहुभिर्न निर्धार्यते, ते सर्वेऽज्ञानकृता एव धर्मभेदाः । अनर्थायैव चैते कल्पन्ते । विज्ञानकृतास्तु धर्मभेदाः सर्वथाऽभ्युदयायैव ।

तदयमत्र निष्कर्षः । स्वरूपविज्ञानपूर्वकं स्वरूपभेदाद्ये धर्मभेदास्ते सर्वथा समुपादेया एव । अभ्युदयहेतुभूता एते । एतानेव चाधिकृत्य भगवद्वचनमिदं प्रवर्तते ।

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

वर्णधर्मा आश्रमधर्मा निमित्तधर्मा गुणधर्माश्च सर्वे विज्ञानकृते सुधर्मभेदेष्वन्तर्भवन्ति । अधिकारानुरूपा उपासनाभेदाश्चापि तथैव । ये त्वज्ञानकृता धर्मभेदा निरुपपत्तिका विशेषधर्मोपमर्दप्रधानाआहारविहारादिसांकर्यसमनुमोदकाः, श्रेया अधिकारानुसारेणोपासना आचरन्तु विद्वेषप्रधानास्ते सर्वथा विनिपाताय कल्पन्ते, स्वरूपरक्षायास्तथाविधेभ्योऽसंभवात् । स्वरूपविज्ञानं विना स्वरूपरक्षाया दूरापेतत्वात् । तस्मादविज्ञैर्यत्नतः समुच्छेद्या इमे । रक्षणीयाश्च श्रेयोभिलाषुका जना धर्म्यः । तथा सत्येव सर्वेषामभ्युदयः सेत्स्यति ।

---

## संस्कृतसाहित्ये विद्याः कलाश्च ।

भो भो विद्याविशारदाः, कलाकोविदाश्च सुधियः,

अद्य संस्कृतसाहित्ये यासां विद्यानां कलानां चोल्लेख उपलभ्यते तद्विषये यथामति किञ्चिन्निवेदयितुं प्रयतामहे ।

यथा खल्वद्य दिने जर्मनभाषाया आङ्गलभाषाया अन्यस्या वा कस्याश्चन जीवन्तीपदवाच्याया भाषायाः साहित्यं, विविधाभिर्विद्याभिः कलाभिश्च समलङ्कृतमुच्यते तथैव जीवन्त्या अपि परुषोक्तिकुशलैर्जनैर्मृतपदेन कलङ्किताया: संस्कृतभाषाया अपि साहित्यं विद्याभिः कलाभिश्चाशून्यमिति नाविदितं संस्कृतसाहित्यसंशीलनरसिकानाम् । तथा हि,

" विद्यते या, विदन्ति यया वा सा विद्या "
इति विद्याशब्दव्युत्पत्तिं निरूप्य शास्त्रकारा अष्टादश विद्याः परिगणयन्ति । तद् यथा—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं च विद्या अष्टादशैव ताः ॥ इति

अत्र, अङ्गानि शिक्षा, कल्पः, व्याकरणम्, ज्यौतिषम्, छन्दः, निरुक्तम् इति षट् । वेदाः ऋग्, यजुः, साम, अथर्वचेतिचत्वारः । मीमांसा ब्रह्ममीमांसा कर्ममीमांसा चेति द्विभेदा । न्यायः प्रसिद्धः । धर्मशास्त्रं स्मृतिग्रन्थाः । पुराणं प्रसिद्धम् । आयुर्वेदो वैद्यकम् । धनुर्वेदः शस्त्रविद्या । गान्धर्ववेदो नाट्यशास्त्रम्, अर्थात् गीतं, नृत्यं, वाद्यविद्या । अर्थशास्त्रं नीतिविद्या । एषां संकलनयाऽष्टादशत्वं भवति ।

आसु च प्रत्येकमनेकेषां सुविस्तृतानां, सभाष्याणां, सटीकाटिप्पणीकानां ग्रन्थानामुपलम्भात्संस्कृतसाहित्यस्य विविधविद्याविद्योतितत्वोक्तिर्न गर्वोक्तिः ।

विज्ञमहोदयाः, विद्याया भेदान्, उपभेदान्, विषयभेदान्, प्रकारभेदांश्चाकलय्य तत्तद्विषये

यावन्तो ग्रन्था महर्षिभिः, ऋषिभिः, पण्डितैश्च निबद्धास्तावन्त ऽर्स्मिन् समये नासन् कस्यामपि जगतीतलप्रसिद्धायां भाषायामिति नेयमतिशयोक्तिः ।

कलाविषयेऽप्यस्माकं पूर्वजैर्यावच्चेष्टितं यावाँश्च ग्रन्थनिवहः समुपनिबद्धस्तावन्नापर्याप्तमस्ति संस्कृतसाहित्यस्य भाण्डारभरणाय । तथाहि—

"कलयति वृद्धितोधनं गृह्णाति, इति कला" एवं कलाशब्दव्युत्पत्तिं निरूप्य शास्त्रकाराश्चतुष्षष्टिं कलाः पर्यगणयन् । तद् यथा गीतम् १ वाद्यम् २ नृत्यम् ३ नाट्यम् ४ आलेख्यम् ५ विशेषकच्छेद्यम् ६ तण्डुलकुसुमबलिविकाराः ७ पुष्पास्तरणम् ८ दशनवसनाङ्गरागाः ९ मणिभूमिकाकर्म १० शयनरचनम् ११ उदकवाद्यम् १२ उदकाघातः १३ चित्रा योगाः १४ माल्यग्रथनविकल्पाः १५ शेखराऽऽपीडयोजनम् १६ नेपथ्ययोगाः १७ कर्णपत्रभङ्गाः १८ गन्धयुक्तिः १९ भूषणयोजनम् २० ऐन्द्रजालम् २१ कौचुमारयोगाः २२ हस्तलाघवम् २३ चित्रशाकापूपभक्ष्यविकारक्रिया २४ पानकरसरागाऽऽसवयोजनम् २५ सूचीवापकर्माणि २६ सूत्रक्रीडा २७ प्रहेलिका २८ प्रतिमाला २९ दुर्वचकयोगाः ३० पुस्तकवाचनम् ३१ नाटिकाऽऽख्यायिकादर्शनम् ३२ काव्यसमस्यापूरणम् ३३ पट्टिकावेत्रवाणविकल्पाः ३४ तर्कुकर्माणि ३५ तक्षणम् ३६ वास्तुविद्या ३७ रूप्यरत्नपरीक्षा ३८ धातुवादः ३९ मणिरागज्ञानम् ४० आकरज्ञानम् ४१ वृक्षायुर्वेदयोगाः ४२ मेषकुक्कुटलावकयुद्धविधिः ४३ शुकसारिकाप्रलापनम् ४४ उत्सादनम् ४५ केशमार्जनकौशलम् ४६ अक्षरमुष्टिकाकथनम् ४७ म्लेच्छितकविकल्पा ४८ देशभाषाज्ञानम् ४९ पुष्पशकटिकानिमित्तज्ञानम् ५० यन्त्रमातृका ५१ धारणमातृका ५२ सम्पाठ्यम् ५३ मानसीकाव्यक्रिया ५४ क्रियाविकल्पाः ५५ छलितकयोगाः ५६ अभिधानकोषच्छन्दोज्ञानम् ५७ वस्त्रगोपनानि ५८ द्यूतविशेषः ५९ आकर्षक्रीडा ६० बालकक्रीडनकानि ६१ वैनायिकीनां विद्यानां ज्ञानम् ६२ वैतालिकीनां विद्यानां ज्ञानम् ६३ वैजयिकीनां विद्यानां ज्ञानम् ६४ इति ।

एतासां काश्चिद् विहाय प्रायः सर्वास्वेव ग्रन्था उपलभ्यन्ते । तद्यथा गीतविषये सङ्गीतदर्पणः सङ्गीतदामोदरः कतिपयेऽन्येऽपि च ग्रन्थाः प्राप्यन्ते । तत्र चैवमुक्तम्—

ऋग्भिः पाठ्यमभूद् गीतं सामभ्यः समपद्यत ।
यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणाः स्मृताः ॥

अथ गीतम्—

मार्गदेशीविभागेन सङ्गीतं द्विविधं मतम् ।
द्रुहिणेन यदन्विष्टं प्रयुक्तं भरतेन च ॥
महादेवस्य पुरतस्तन्मार्गाऽऽख्यं विमुक्तिदम् ।
तत्तद्देशस्थया रीत्या यत्स्याल्लोकानुरञ्जनम् ॥
देशे देशे तु सङ्गीतं तद् देशीत्यभिधीयते ।।
गीतवादित्रनृत्यानां रक्तिः साधारणो गुणः ॥
अतो रक्तिविहीनं यत् न तत् सङ्गीतमुच्यते ।

गानं तु नादात्मकमेव । नादस्तु यदा स्वयं राजते तदा स्वर इति प्रसिद्धः स्यात् । स्वरस्तु षड्ज, ऋषभ, गान्धार, मध्यम, पञ्चम, धैवत, निषादभेदाः सप्तविधाः ।

अथ द्वाविंशतिश्रुतयः स्वरस्थितिश्च·

तीव्राकुमुद्वतीमन्दाछन्दोवत्यस्तु षड्जगाः ।
दयावती रञ्जनी च रतिका चर्षभे स्थिता ॥

रौद्री क्रोधा च गान्धारे वज्रिकाथ प्रसारिणी।
प्रीतिश्च मार्जनीत्येताः श्रुतयो मध्यमाश्रिताः॥
क्षिती रक्ता च सन्दीपिन्यालापिन्यपि पञ्चमे।
मदन्ती रोहिणी रम्येत्येता धैवतसंश्रयाः॥
उग्रा च क्षोभिणीति द्वे निषादे वसतः श्रुती॥

अथ रागाः—

श्रीरागोऽथ वसन्तश्च भैरवः पञ्चमस्तथा।
मेघरागो बृहन्नाटः षडेते पुरुषाऽऽश्रयाः॥

अथ रागिण्यः—

मालश्री त्रिवणी गौरी केदारी मधुमाधवी।
ततः पाहाडिकाज्ञेया श्रीरागस्य वराङ्गनाः॥
देशी देवगिरी चैव वराटी तोडिका तथा
ललिता चाथ हिन्दोली वसन्तस्य वराङ्गनाः॥
भैरवी गुर्जरी रामकिरी गुणकिरी तथा।
बाङ्गाली सैन्धवी चैव भैरवस्य वराङ्गनाः॥
विभाषाचाथ भूपाली कर्णाटी वडहंसिका।
मालनी पटमञ्जर्या सहैताः पञ्चमाङ्गनाः॥
मल्लारी सोरटी चैव सावेरी कौशिकी तथा
गान्धारी हरशृङ्गारा मेघरागस्य योषितः॥
कामोदी चैवकल्याणी आभीरी नाटिका तथा।
सारङ्गी नट्टहम्बीरा नट्टनारायणाङ्गनाः॥

विशेषाऽऽकाङ्क्षिभिः सङ्गीतदर्पणादौ द्रष्टव्यम्।

अथ वाद्यविषये—

तालेन राजते गीतं तालो वादित्रसम्भवः।
गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते॥
ततं शुषिरमानद्धं घनमित्थं चतुर्विधम्।
ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरं तथा॥
चर्मावनद्धमानद्धं घनं तालादिकं मतम्।

तत्र ततं यथा—

अलावणी ब्रह्मवीणा किन्नरी लघुकिन्नरी।
विपञ्ची वल्लकी ज्येष्ठा चित्रज्योषवती तथा॥
हस्तिका कुब्जिका कूर्मी शाङ्गी परिवादिनी।
त्रिशवी शतचन्द्री च नकुलौष्ठी च ढंसवी॥
औडम्बरी पिनाकी च निषन्धः शुष्कलस्तथा।
गदावारणहस्तश्च रुद्रोऽथ शरमण्डलः॥
कपिलासोमधुस्यन्दी घोणेत्यादि ततं भवेत्।

तत्र शुषिरं यथा—

वंशोऽथ पारीमधुरीतित्तिरीशङ्खकाहलाः।
तोडहीमुरलीबुक्काशृङ्गिकास्वरनाभयः॥
शृङ्गं कापालिकं वशचर्म वंशस्तथाऽपरः।
एते शुषिरभेदास्तु कथिताः पूर्वसूरिभिः॥

तत्र आनद्धं यथा—

मुरजपटहढक्का विश्वको दर्पवाद्यम्।
पणवघनसरुञ्जा लावज हुत्रिवल्ल्यः॥
करठकमठभेरी स्यात् कुडुक्का हुडुक्का।
झनसमुरलि झल्ली दुक्कली दौण्डिशाना॥
डमरुटमुकिमड्डुः कुण्डलीस्तुङ्गनामा
रणमभिघटवाद्यं दुन्दुभी च रजश्च॥
क्वचिदपि डुडुकी स्याद्दर्दुरं चाप्युपाङ्ग-
प्रकटितमवनद्धं वाद्यमित्थं जगत्याम्॥

तत्र घनं यथा—

अनुरक्तं विरक्तं च द्विविधं घनवाद्यकम्।
गीतानुरक्तमनुरक्तं विरक्तं तालसंश्रयम्॥
करतालः कांस्यवलोजयघण्टोऽथ शुक्तिका।
कम्बिका पटवाद्यं च पद्यतोघं च घघरम्॥
झझ्झातालं मञ्जीरकर्तर्युङ्कर इत्यपि।
द्वादशैते मुनीन्द्रेण कथिता घनसंज्ञकाः॥

एतेषां वाद्यानां निर्माणविधिर्वादनविधिश्च सर्वोऽपि शास्त्रेषूक्तो वाद्यरसिकैस्तत्तद्ग्रन्थेभ्योऽधिगन्तव्यः।

अथ नृत्यम्—

देवरुच्या प्रतीतोऽयस्तालमानरसाऽऽश्रयः ।
सविलासोऽङ्गविक्षेपो नृत्यमित्युच्यते बुधैः ॥

तत्र नृत्यभेदाः—

ताण्डवं च लास्यं द्विविध नृत्यमुच्यते ।
पेलविर्बहुरूपं च ताण्डवं द्विविधं मतम् ॥
अङ्गविक्षपबाहुल्यं तथाऽभिनयशून्यता ।
यत्र सा पेवलिस्तस्याः मङ्गादेशीति लोकतः ॥
छेदनं भेदनं यत्र बहुरूपा मुखावली ।
ताण्डवं बहुरूपं तद्वारुणागलमुद्धतम् ॥
छुरितं यौवतं चेति लास्यं द्विविधमुच्यते ।
यत्राभिनयाद्यैर्भावै रसैराश्लेषचुम्बनैः ॥
नायिकानायकौ रङ्गे नृत्यतश्छुरितं हि तत् ।
मधुरं बद्धलीलाभिर्नटीभिर्यत्र नृत्यते ॥
वशीकरणविद्याभं तल्लास्यं यौवतं मतम् ।
गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः ॥
लयतालसमारब्धं ततो नृत्यं प्रवर्तते ।

सर्वासामपि कलानां विषये तत्तद्ग्रन्थेभ्यः प्रतीकादौ प्रदत्ते विस्तरभयम् । ततश्च प्रसिद्धानामेव विषये निरुच्यते ।

अथ वास्तुविषयः

एतद्विषयेऽपि गरुडादिषु भूमिपरीक्षण, गृहभेद, गृहनिर्माणादयो विषयः सुविस्तरेणोक्ताः । तद् यथा—

सुरेभ्यः पुरतः कार्यं दिश्याग्नेय्यां महानसम् ।
रूपनिर्गमणे येन पूर्वतः सत्रमण्डपम् ॥
गन्धपुष्पगृहं कार्यमैशान्यां पट्टसंयुतम् ।
भाण्डागारं च कौबेर्यां गोष्ठागारं च वायवे ॥
उदगाश्रयं च वारुण्यां वातायनसमन्वितम् ।
समित्कुशेन्धनस्थानमायुधानां च नैरृते ॥
अभ्यागतालयं रम्यं शय्याऽऽसनसपादुकम् ।
तोयाग्निदीपशुभृत्यैर्युक्तं दक्षिणतो भवेत् ॥
गृहान्तराणि सर्वाणि सजलैः कदलीगृहैः ।
पञ्चवर्णैश्च कुसुमैः शोभितानि प्रकल्पयेत् ॥
प्राकारं तद्बहिर्दद्यात् पञ्च हस्तं प्रमाणतः ।

इत्यादि

अथ धातुवादः—

सुवर्णं रजतं ताम्रं लौहं कुप्यं च पारदम् ।
वङ्गं च सीसकं चैव इत्यष्टौ देवसंभवाः ॥

तत्र सुवर्णम्—

दाहेऽतिरिक्तमथ यच्च सितं छिदायां ।
काश्मीरकान्ति च विभाति निकाषपट्टैः ।
स्निग्धं च गौरवमुपैति च यत्तुलायां
जानीत देवकनकं मृदुरक्तपीतम् ॥
तत्रैकं रसवेधजं तदपरं जातं स्वयं भूमिजं
किंचान्यद् बहुलोहसङ्करभवं चेतित्रिधाकाञ्चनम् ।
तत्राऽऽद्यं कलपीतरक्तमपरं रक्तं ततोऽन्यद् यथा
गौराभं तदितिक्रमेण गदितं स्यात् पूर्वपूर्वोत्तमम् ॥

एवं सुवर्णादीनां तत्र तत्र तारतम्यपरीक्षणविधेः पात्रादिनिर्माणकथायाश्चोपलब्धत्वेन सुवर्णादिधातूनामुपयोगार्थमपेक्षिताः कला बहोः कालात् पूर्वं भारते सुपरिचिता आसन्निति सिध्यति ।

अथ मणिरागविज्ञानम्—

वर्णाधिक्यं गुरुत्वं च स्निग्धता च तथाऽच्छता ।
अर्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः ॥
बालार्ककरसंस्पर्शाद् यः शिखां लोहितां वमेत् ।
रञ्जयेदाश्रमं वाऽपि स महागुण उच्यते ॥
वमेच्छिखां लोहितां वा पद्मरागः स उत्तमः ।
अन्धकारे महाघोरे योऽन्यस्तः रुन् महामणिः ॥

पद्मकोषे तु यो न्यस्तो विकाशयति तत्क्षणात् ।
पद्मरागवरो ह्येष देवानामपि दुर्लभः ॥

एवं च विस्तारभयादस्माभिश्च बहु विवर्णयितुमशक्येऽपि मणीनां गुणदोषयोर्युक्तिकल्पतर्वादौसम्यग्वर्णितत्वादेतस्मिन्नपि विषये सन्ति बहवो निबन्धाः ।

इदानीं वयं बहुमतीकोद्धारमात्रे कृते श्रोतॄणां वैरस्यशङ्कया कलाविषये यथाऽस्माभिः प्रयत्नोऽनुष्ठेयस्तथा स्वमतं प्रकाशयामः—

आसीदवश्यमस्मिन् सततलभ्ये भारते कदाचित्स पुण्यतमः कालो यस्मिन् ब्राह्मणादारभ्य तन्तुवायपर्यन्तम् सर्वेऽपि जनाः संस्कृतोपनिबद्धग्रन्थद्वारैव स्वस्वापेक्षिता विद्याः कलाश्चाशिक्षन्त । परं संस्कृतभाषाया अस्माकमेव वा दौर्भाग्यवशाद् वेदमात्रविषयोऽपि शूद्राध्ययननिषेधः कैश्चिदपि महामतिभिरध्ययनमात्रपरतयाव्याख्याय, संस्कृतभाषायाः पठनपाठनशैलीब्राह्मणेतरेषु त्रिष्वपि वर्णेषु प्रतिरुद्धा । ब्राह्मणाश्चापि पठनपाठनयजनयाजनादिषु समुपयुक्तान् वेदवेदाङ्गपुराणेतिहासकाव्यसाहित्यादिग्रन्थान् कथंचिदभ्यस्तवन्तः कलाशिक्षकान् ग्रन्थाँस्तु न लेशमात्रतोऽपि । एवं च ब्राह्मणैरनावश्यकत्वात्तदितरैश्चानधिकारशङ्कयाऽनभ्यस्यमानास्ते ते ग्रन्थाः, महता परिश्रमेण प्राचीनैर्विद्वच्छिरोमणिभिर्विरचिता अपि कालेन क्षीयमाणा अत्यल्पतामाप्नुवन् । येचकेचन सन्ति तेऽपि पाठ्यग्रन्थेष्वप्रविष्टत्वात्तथा विरलतामध्यगच्छन् यथासतोऽपि तान् महान्तो महान्तो विद्वाँसोऽपि नेति वदन्ति ।

भो भोः सुरसरस्वतीसौभाग्यसंविधानसंसक्तस्वान्ताः सहृदयाः, यदि भवन्तः सत्यमेव संस्कृतसाहित्ये विद्यमानानां कलाग्रन्थानां प्रचारं वाञ्छन्ते तर्हि कश्चिदेको ग्रन्थालोकनकौतुकी कोविदः कलाग्रन्थगवेषणाय नियुज्यतां तेन च संगृहीतान् कलाग्रन्थान् विद्वत्समितिषु समुपस्थाप्य सारासारविचारपुरस्सरं ततो लघुलघून् बहून् ग्रन्थान् विरचय्य तेषां पठनपाठनप्रचारः क्रियताम् ।

अस्माभिः कियन्तं कालमेव कलाविषयगवेषणधिया केचन प्राचीना ग्रन्था: पर्यालोचितास्तेषु चानायासेनैव भूयान् कलाविषयः समधिगतः । तद् यदि कानिचिद् वर्षाणि नैरन्तर्येणाऽस्मिन् विषये संस्पृहतया यत्नो विधीयेत तर्हि किं नाम न लभ्येत सन्तानसहोदरात् संस्कृतसाहित्यात् ।

अपि विज्ञमहाशयाः, क्षणं विचार्यताम् । अपि क्वचिदवलोकितो भवद्भिः संस्कृतपुस्तकसाहाय्येन कलापाठनप्रबन्धः ? मा भूवन्नाम काश्चन नवनवाः कलाः संस्कृतसाहित्ये परं या याः प्राचीनतमा अपि भवादृशामस्मादृशां चापेक्षावशादभावं प्राप्ताः प्राप्नुवन्ति च । पाश्चात्यदेशेषु यत्र कलानामतिविलक्षणो विस्मयोत्पादकश्च प्रचारः प्रभावश्चास्ति तत्र यावन्तो धनिनः सन्ति प्रायस्ते सर्वेऽपि पूर्णतया विद्यामभ्यस्य तत्साहाय्येन सततं ताँस्तान् कलाग्रन्थान् विचारयन्ति तेषां सिद्धान्तं परीक्षन्ते स्वानुभवसिद्धान् नवनवाँश्च विषयान् तेषु संयोजयन्ति । सम्पत्तिशालित्वाच्च ते स्वापेक्षितान् सर्वान् पदार्थान् संचित्य महता परिश्रमेण तत्संयोगवियोगद्वारा नवनवाः कला आविष्कुर्वन्ति । अस्माकं देशे तु धनिकैः पुरुषैर्विद्याभ्यासो विडम्बनेत्युच्यते । ये च दीनास्ते तु वर्तमानसमये शिक्षाया महर्घतया पठितमेव न प्रभवन्ति । क्व पुनः

प्राचीनग्रन्थाध्ययनमननादयः । ये तु मध्यस्थित-यस्तेऽपि वृत्त्यर्थमावश्यकतया इङ्गिशभाषामेवाभ्य-स्यन्ति । ये केचनाभ्यस्यन्ति संस्कृतं तेऽपि लब्धप्रचारान् तांस्तान् ग्रन्थानभ्यस्यैव स्वपाण्डि-त्यं पूर्णं मन्यमानाः कलाविषयाभ्यासमीषत्करं मन्यन्ते । वस्तुतस्तु कलैवार्थकरी, तथा चोक्तम् ।

प्रभुभिः पूज्यते विप्रः कलैव न कुलीनता ।
कलावान् मान्यो मूर्ध्नि स्वत्सु देवेषु शम्भुना ॥

नास्माभिः सुदूरं गन्तव्यम् । इहैव वृन्दावने विद्यमानस्य प्रेममहाविद्यालयस्य पाठ्यक्रमे क्षणं दृष्टिर्निपातनीया । न खलु तत्र भवद्भिः संस्कृत-साहित्ये सतामपि कलाग्रन्थानां नामविलोकयितुं शक्येत । यद्यं तादृशे भारतीयवित्तेन भारतीयजन-प्रयत्नेन च प्रचाल्यमाने विद्यालयेऽपि नास्माकं कलाग्रन्थानामादरः स्यात्तर्हि कुत्र स्यादिति चिरं चिन्तयन्नपि नाहं ज्ञातुं प्रभवामि ।

विद्वन्मणयः ! क्षणं विनियम्यतां मन्युः । श्रूयतां च विनीततरमिदं वचः । यदि भवद्भिः केवलं शेखरव्युत्पत्तिवादादिग्रन्थाभ्यास एव संस्कृताभ्यास इति सिद्धान्तोऽभ्युपेयते तर्हि न नाम सहस्रवर्षोत्तरमपि स्यात् संस्कृतभाषाश्रि-तानां कलानां प्रचारः । अथचेद् भवद्भिः शास्त्रा-ध्यापनवत् कलाध्यापनमपि स्वकर्तव्यं मन्येत तर्हि न स्याद् विलम्बस्तस्य कालस्योपस्थितौ यस्मिन् संस्कृतकलानां प्रचारो भूयान् भूयान् भवेत् ।

अस्तु साम्प्रतमहमेतन्निवेद्य स्वनिबन्धं समा-पयामि यत् कलाल्पत्वादस्मिन् समये मया संग्र-हीतुं न पारितं यतः कलाविषयनिरूपणाय भूयसः श्रमस्य समयस्य चावश्यकताऽस्ति । तद्यदि सम्मे-लनेन मत्प्रस्तुत[illegible] भारः स्वयं सोढुमङ्गीक्रियेत तर्हि यथासाध्यं सम्यक् संशोध्य ग्रन्थजातं कंचनसाराऽऽत्मकं नवं कलाग्रन्थं संपादयेयम् ।

—

## संस्कृतभाषाया अभ्यर्थना ।

[ लेखक, श्रीसूर्यनारायण शर्मा आचार्यः ]

भो भोः सभ्यमहाशयाः ! शृणुत मे
दीनां मुहुः प्रार्थनां
कस्मान्मामपहाय पूर्वपुरुषैः
सस्नेहमासेविताम् ।
काऽप्यन्यैव नवानवा प्रतिदिनं
भाषा समाश्रीयते
किं पत्नीं परिणीय सभ्यपुरुषै-
र्माता समुत्सार्यते ॥ १ ॥

सर्वे मां प्रहसन्ति किंच निगद-
न्त्येषा मृता निष्ठुरं
श्रुत्वैतत्परिमुच्यतेऽश्रुसरणि-
र्नेत्रैर्हि सदा खिद्यते ।
नाहं मृत्युमुपागताऽस्मि यदपि
प्रेत्सुस्तथाऽप्यस्म्यहं
यस्माद् दुःखविदूयमानमनसो
मृत्युर्वरं जीवनात् ॥ २ ॥

युष्माकं च महद्यशोऽत्र विषये
यत्पूर्ववृद्धाऽऽश्रितं
पन्थानं न परित्यजन्ति कथम-
प्येते कुलीना इति ।
तस्मात्कीर्तिविधायिनीं दृढतरां
स्मृत्वा प्रतिज्ञां निजां
मत्कारुण्यविधौ निधाय च दृशं
मां वारयध्वं भयात् ॥ ३ ॥

वेदा मय्यखिला अपि प्रियसुता
मय्येव धर्मा अपि
श्रीसाहित्यसुधाकरोऽप्यथ मयि
श्रीराजनीतिर्मयि।
मत्साध्या विषयो भवन्ति भवतां
सर्वे विवाहादयो
ब्राह्मण्यं च मयार्पितं ह भवतां
ज्ञानं मयैवार्पितम् ॥ ४ ॥

एतान् साधुगुणानवेक्ष्य गुणिनः
सर्वे भवन्तः स्वयं
दुष्टामां परुषाक्षरैर्विकलितां
मामुद्धरन्तां सुताः।
चेद् युष्माकमगात् समृद्धिमतुलां
तृष्णा धनानां तदा
त्वभ्यस्यन्त्वपरामपि प्रियसुता
मां पालयन्तो मुदा ॥ ५ ॥

उद्धारं मम कुर्वतो हि भवतः
सर्वे गुणानां गणाः
प्राप्स्यन्ति स्वयमागतैर्गुणगणैः
किं नाऽत्र संसिध्यति।
संसिद्धेषु मनोरथेषु च सुखं
संभुज्य तल्लौकिकं
स्वान्ते ज्ञानमहोदयाद् भवभयाद्
मुक्तिं लभन्तां भुवाम् ॥ ६ ॥

आदौ या परिनिर्मिता भगवता
लोकत्रयीस्वामिना
यस्यां वेदवचांसि सर्वविषयं
यस्यां महाभारतम्।
यस्यां चाखिलदर्शनानि बहुना
किं जल्पितेनैव वा
साऽऽहं कुक्षिधृताखिलाद्भुतगुणा
श्रीभारती भारती ॥ ७ ॥

---

## संस्कृतसाहित्यम् तच्छिक्षा च

[लेखकः—श्रीप्रेमवल्लभशर्मा व्याकरणतीर्थो न्यायशास्त्री]

सुरासुरनराधिपावनतमौलिमालालसत्—
किरीटतटविस्फुरन्मणिमरीचिनीराजिता
अशेषभुवनावलीवृतघनान्धकारावलि-
प्रवालनपटीयसी भुवि विराजते भारती।

### 'संस्कृतसाहित्यम्'

असाधारणचमत्कारशालिनः संस्कृतसाहित्यस्य गौरवं कस्य नामाक्षरजुषो न विदितम्? लौकिकालौकिकशिक्षाप्रदस्य परमाद्भुतस्य सरसशब्दावलीसंवलितस्य परप्रमोदास्पदस्य नितान्तरमणीयस्यास्य साहित्यस्य नूनं न किमपि समकक्षतां धत्ते। परमो महिमा, असाधारणो गरिमा, चेतसां सन्तर्पणो मधुरिमा, अविच्छिन्ना शृङ्खला, मनोमोदकरी पीयूषनिःस्यन्दिनी शब्दावली, कलिमलापहा समुत्कर्षकारिणी निखिलजनतासन्तारिणी शिक्षा चेत्यादयोऽनेकेऽनन्यसाधारणोज्वलगुणहाराः संस्कृतसाहित्यमेवालङ्कुर्वन्ति। विपर्येष्वसन्देहं, गहनतमस्यापि विषयस्य विवेचनपद्वीं मेधां, सभाचातुर्य्यं, नयज्ञतां, धार्मिकभावमन्यदुर्लभं पारलौकिकमकलुषं ज्ञानञ्च सद्यो जनयति वितनोति च स्वसेविनस्तत्। नूनं किल नीतिशिल्पादेर्लौकिकस्याऽऽत्मज्ञानादेरलौकिकस्य यागादेर्लौकिकालौकिकस्य च सर्वार्थसिद्धेर्विषयस्य शिक्षणे निरतस्याऽस्य न जातु जगति साहित्यान्तरमनुकृतावपि प्रभवति। आलोक्यतां नयने विस्फार्य, विचार्यताञ्च क्षण-

मयधाय, यत्र केवलमाध्यात्मिकमेव, आधिदैविकमाधिभौतिकञ्च विषयं सुबहु प्रतिपादयन् भगवान् वेद इव कतमोऽपरग्रन्थः कस्मिन्नाम साहित्यान्तरेऽविच्छिन्नधारमप्रतिरुद्धासिद्धान्तम् यावधि ससंमानं प्रचलन् परिदृश्यते? परिवर्तनपटीयसि जयति वैदिकधर्मपटपरिवर्तनमिव चिकीर्षद्भिरनेकैर्विद्वद्भिः कृतेष्वपि परः शतेष्वाक्षेपेषु बद्धपरिकरं प्रतिमल्लतापदमाहृतेष्वपि मीमांसादृढेषु तर्ककर्कशेषु वैदिकसिद्धान्तेषु समासादिता कीदृशी कियती वा स्वकार्ये सफलता। कियन्तो नु तदीयाः सिद्धान्ताः समुन्मथिता इति सूक्ष्मया दृष्ट्या विचार्यताम्. निःसाराणां केवलं शब्दच्छलाकवितानां तदाक्षेपाणां कियत्कालं जगत्यवस्थितिरित्यपि मनाक् चिन्त्यताम्। अतएव परमगभीरतयैवैतद्देशीयैरिव देशान्तरीयैरपि सधन्यवादमनुमान्यते समान्यते च सोऽयमनादिः संस्कृतसाहित्याङ्गं भगवान् वेदो विद्वद्भिः। गाढान्धतमसविलीनेष्वेव नवसभ्यदेशेषु, गर्भावस्थितास्वेव देशान्तरीयासु सभ्यजनतासु सभ्यतासु च स्फुरज्ज्ञानमहर्षिचेतःस्वाविर्भूतेन ज्ञानराशिना साहित्याङ्गेनामुना सुबहु कृतं देशस्य समाजस्य च, बहवो ह्यतज्ज्ञानामृतरसं निपीयाऽमरत्वमासादिताः। उज्ज्वलशिक्षाप्रभावितेऽत्र संपन्नाऽलध्वी समृद्धिरितिस्मृतमेव विद्वत्समाजस्य। ज्ञानधनत्वादेवैतद्विषये साधूच्यते सुधीभिः यदिहास्ति तदन्यत्रेति। यत्र विदुषां बुद्धेरपि प्रवेशोनास्ति सोऽपि विषयस्तत्र स्पष्टमुद्घुष्टो वेदे। सृष्टिप्रपञ्चस्य प्रत्यक्षदृश्यमानतया कथञ्चित्संशयाज्ज्ञानसंभवेऽपि परमसूक्ष्मः प्रलयावस्थागतोऽपि परोक्षो विषयःस्पष्टमुक्तस्तत्र। तथाहि निरस्तसमस्तप्रपञ्चप्रलयावस्थानिरूपणप्रकरणे परमात्मदेवताका प्रजापतिदृष्टा त्रिष्टुप्।

'नासदासीन्नो सदासीत्तदानीं नासीद्रजो नो व्योमापरोयत् किमावरी वः कुहकस्यशर्मन्नंभः किमासीद् गहनं गभीरम्' प्रथमेन सदसद्विलक्षणमनिर्वाच्यं जगन्निदानं, द्वितीयेन दृश्यमानपृथिव्यादिभूतनिषेधः, तृतीयेनावरकनिषेधो भोग्यप्रपञ्चवद्भोक्तृप्रपञ्चस्याऽप्यभावश्चतुर्थेन 'इदमग्रे सलिलमासी' दित्यस्य निराकरणञ्च सूचितानि।

तर्हि किमासीत्तदेत्यपि स्पष्टमुक्तम्—तथाहि "तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमा इदम् तुच्छेना भ्वपिहितं यदासीत्तपसस्तन्महिना जायतैकम्"। इति व्यवहारदशायामिव प्रलयावस्थायां न किञ्चिदवगम्यते, सर्वस्याऽपि प्रपञ्चस्य कारणसंगमेनाऽविभागापन्नत्वात् सदसद्विलक्षणं भावरूपाज्ञानं हि तदा समाच्छन्नमिति तत एव स्रष्टव्यपर्यालोचनरूपस्य तपसो महिम्ना भावरूपोऽयं प्रपञ्च आविर्भूत इति यावत्। एवमन्यदपि सृष्टिप्रकरणं सुविस्तरं तत्र निरूपितम्—

"कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् सतो बन्धुमसति निरविन्दन् हृदि प्रतिष्ठ्या कवयो मनीषा' इत्यादिना। तदिदं कियद्गभीरमल्पीयसा शिक्षितं भगवताऽनेन।

किञ्च—

"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते"

"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः
तत्र को मोहः कः शोक एकत्वमनुपश्यतः"

"यो सावादित्ये पुरुषः सोऽसावहम्"

'अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते'

इत्यादीनि सुधासीकरासारकिराणि अनेकानि वचांसि पुरुषं सांसारिकदुर्वासनामलिनात्वधः प्रतिनिवारयितुं कामं प्रयतन्ते। कीदृशैश्चातिमृदुलैरनल्पैरन्यैरपि मन्त्रैर्ब्रह्मतत्वं प्रतिबोधितं भगवतेति न विवेचनावसरः। किं बहुना, पित्रोर्विचारमय मस्तिष्कमेव प्रथमं वितन्यते गर्भबालस्येति सांप्रतिकानां वैज्ञानिकानामपि सिद्धान्ते, यैर्वेदमन्त्रैर्गर्भाधानाभिधोऽयं प्रथमः संस्कारो वितन्यते ते मनाक् विचार्यन्ताम् ज्ञायताञ्च कियद् गौरवमावहन्तीति। तथा हि –

"विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु
आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते"

इत्यनेन मन्त्रेण जगत्सृष्टिप्रक्रमेणैवाऽऽत्मनि प्रजापतित्वमारोपमञ्जनको गर्भमादधाति। एवमाधिदैविकाधिभौतिकयोर्विषययोः। स्पष्टं प्रकाशकान्यन्यान्यपि सुबहूनि मन्त्ररत्नानि वेदे तत्र तत्रोपलभ्यन्ते। एतमेव भगवन्तं वेदमग्रे कृत्य पल्लवितः पुष्पितः फलितश्च स संस्कृतसाहित्यकल्पपादपः। अथर्वचतुष्कया ऋग्यजुःसामरूपया त्रय्या, आयुर्वेदधनुर्वेदगान्धर्ववेदतन्त्रेतिचतुष्टयोपवेदोपबृंहितया नूनं जगत्त्रये सुबहूपकृतम्, उन्नतां गतिं प्रापिताः सदेवासुरयक्षोरगन्धर्वादयो लोकाः।

षड्भिस्तदङ्गभूतैः सूक्ष्मतस्तदनुप्रविष्टरूपैः शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषैः पुराणन्यायमीमांसाधर्मशास्त्ररूपैश्चतुर्भिरुपाङ्गैरपरैश्चानेकैः काव्यनाटकालङ्कारादिग्रन्थरत्नैरामूलचूलमभिव्याप्तः संस्कृतसाहित्यपारावारः। अगाधेऽप्रमेयेऽस्मिन् पारावारे, यथा यथा अस्य तलमन्विष्यते तथा तथा हस्ते क्रियन्तेऽभिनवानि स्फुरद्रोचींषि ग्रन्थरत्नानि।

येन क्रमेण वेदोऽध्येतव्यः यथा च क्षिप्रं बुद्धिविषयतामवगाहते गभीरतरमपि तत्तत्वम् सोदात्तानुदात्तस्वरितस्वरः च्छन्दोदैवतादिज्ञापिका शिक्षा। सरलेन दृष्टान्तदर्शितेन पथा, हि तत्र शिक्षिता वेदाध्ययने स्वरादिपरिज्ञानरीतिः यथा—

'चाषस्तु वदते मात्रां द्विमात्रां वायसोऽब्रवीत्
शिखी त्रिमात्रां वदति मात्राणामितिसंस्थितिः'

इत्यत्र मात्रापरिज्ञानरीतिः। एवं—

'गुरोरनुमतं कुर्यात्पठन् नान्यमतिर्भवेत्
ऊर्ध्वभागे तृतीये तु करं विन्यस्य वामतः
प्रसन्नमानसो भूत्वा किञ्चिन्निम्नमधोमुखम्
प्रणवं प्राक्प्रयुञ्जीत व्याहृतीस्तदनन्तरम्'

इत्यादिना शिष्योपयोगिनी शिक्षा च तत्र विधृताः। घोष घोषं खिन्नस्वरैरपि रात्रिन्दिवं कृतश्रमैरपि या न लभ्यते सम्प्रति वेदबोधलक्ष्मीः, नूनं यथोचितशिक्षानादरस्तत्र हेतुः, कथमन्यथा ब्रह्मघोषमुखरितदिक्चक्रवालेऽस्मिन्नेव भारते प्रागिवाऽधुनापि न भवेयुः साङ्गोपाङ्गवेदमर्मज्ञा अनेके विद्वज्जनाः? यस्यैव पादार्चनाय परिचयन्ते व्याकरणादयोऽङ्गग्रन्थास्तस्मिन्नुपेक्षाधियो ननु विद्वांसोऽप्युपेक्षिता एव भगवता वेदेन। अस्तु। एकैकमपि ग्रन्थरत्नं नूनं परमुज्ज्वलयति संस्कृतसाहित्यमुखम्। महर्षिपाणिनिरचितस्यैव कस्य नाम व्याकरणान्तरस्य सामर्थ्यं यद्देववाणीमिव कामपि भाषामन्यां तथा परिष्कुर्यात्। नूनं प्रचलन्तीष्वपि भूखण्डेष्वखण्डं परः सहस्रासु भाषासु परिष्करणनिरतेष्वपि संख्यातिगेषु विद्वद्धौरेयेषु प्रदीयमानास्वपि महाराजाधिराजैः सुबहु

सहायतासु नाद्यावधि कस्या अपि भाषायास्ताद्दशं व्याकरणमुद्भूतं यस्य संस्कृतभारतीव्याकरणस्यैवासन्देहकरोऽलाक्षरो बह्वर्थसाधकश्च महिमा स्यात्। वेदस्य मुख्यमङ्गमिदं व्याकरणम् अतएव मुखत्वेनाऽस्य व्यवहारः—यथा

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते
ज्योतिषामयनञ्चक्षुर्निरुक्तं श्रोत्रमुच्यते ।
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम्'

इति

अर्थविशेषाश्रयणेन संस्कारविशेषेण समन्ताच्छ्दान् कुर्वदिदं व्याकरणसंज्ञं भवति । नवधा चेदं भिद्यते—यथाऽऽहुः—

'ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्
सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्' इति

अत एव हनुमन्तमुद्दिश्य लक्ष्मणं प्रति भगवता रामचन्द्रेणोक्तं 'सोऽयं नवव्याकरणार्थवेत्ता' इति। अंशतः श्रुत्या चेदमनुमोद्यते तथा हि 'वाग्वै पराच्यव्याकृता अवदत्' इत्युपक्रम्य 'तामिन्द्रो मध्यतोऽवक्रम्य व्याकरोत् तस्मादियं व्याकृता वागुच्यते' इति । अत एव नैषधकृच्छ्रीहर्षोऽपि

'स्वं नैषधादेशमहो विधाय
कार्यस्य हेतोरपि नानलः सन्
तं स्थानिवद्भावमधत्त दुष्टं
ताहक् कृतव्याकरणः पुनः सः'

इत्यत्रेन्द्रस्य व्याकरणकर्तृत्वं निर्दिदेश । एवं चान्यदप्यनुमातुं शक्यते यथा सम्प्रति पाणिनीयचान्द्रसारस्वतशाकटायनानि व्याकरणानि मुद्रितानि प्रचलितानि चोपलभ्यन्ते, एवं यथा पूर्वोक्तश्लोकनिर्माणकाले नवानां व्याकरणानां प्रचार आसीत्तथैव ततः प्राक् अन्यान्यपि व्याकरणानि भारते वाऽन्यत्रापि वा संस्कृतभाषायाः प्रचरितान्यासन्निति । अत एव पाणिनीयसूत्रेषु स्फोटायनपौष्करस-गालवादीनां मतानि निर्दिष्टान्युपलभ्यन्ते । परं 'सोऽयं नवव्याकरणार्थवेत्ता' इति वाल्मीकिवचस्तु रामायणनिर्माणकालेऽपि नवैव व्याकरणान्यासन्निति बोधयति, अथवा नवानां व्याकरणानामधिकप्रचारान्नवव्याकरणार्थवेद्धति कविनोक्तम् । एवं सत्यपि रामायणनिर्माणकालः पाणिनीयव्याकरणरचनाकालादर्वागापततीति तु न वाच्यम् अनादित्वात्संसारस्य हनुमतोऽपि भगवदवताररूपत्वात्कल्पान्तरीयव्याकरणस्मरणाच्छ्रद्धालूनां तदुपपत्तेः । व्याकरणभेदेन भिन्नेषु शब्दरूपेषु साधुत्वासाधुत्वनिर्णयेऽपि पाणिनीयं व्याकरणमेव प्रभवति तस्य महेश्वरप्रसादलभ्यचतुर्दशसूत्रानुगामित्वात् । अत एव लौकिकवैदिकाखिलशब्दसाधुसंस्कारविधायकतयाऽप्यस्यैव समादरोऽपि । एतस्यैव वेदाङ्गत्वं मेने नागेशः, तथा हि स चतुर्दशसूत्रीव्याख्यानप्रसङ्गे 'तं खल्विममक्षरसमाम्नायमित्याचक्षते न भुक्त्वा न नक्तं प्रब्रूयाद् ब्रह्मराशिः' इति शब्देन्दुशेखरस्थितकातन्त्रव्याकरणोक्तिरीत्या शब्दप्रतिपादकब्रह्मराशित्वेनाऽस्यैव वेदाङ्गत्वं निर्दधार । अतएव छान्दोग्येऽपीदमेवोपक्रम्य 'वेदानां वेदः' इत्युक्तम् । शब्दानुशासनमस्य मुख्यं प्रयोजनम्, अवान्तरप्रयोजनानि प्रयोजनप्रयोजनानि वा रक्षोहागमलघ्वसन्देहादीनि च भगवता भाष्यकृता सविस्तरं दर्शितानि ।

विभिन्नप्रकरणोक्तान् मन्त्रान् यः प्रयोगक्रमे कल्पयति स अग्निवेश्यादिमहर्षिप्रणीतो ग्रन्थजातविशेषः कल्पः । बहवोह्येतद्ग्रन्थाः आग्निवेश्यकल्पसूत्रादिसंज्ञाभिरुच्यन्ते ।

पादयति विरामादिप्रतिपादको तद्व्यवस्थापकश्च पिङ्गलादिमहर्षिरचितो ग्रन्थविशेषश्छन्दःशास्त्रम् । वैदिकशब्दानामभिनवया कयापि व्युत्पत्त्या साधको यास्कमहर्षिप्रणीतो ग्रन्थविशेषो वेदव्याकरणापराभिधेयो निरुक्तम् । अपूर्वा ह्यस्य महर्षेर्वेदमन्त्रार्थनिर्वचनशैली । न च विद्वद्भिर्न समादृता । वेदभाष्यकृत् स सायणाचार्योऽपि पुराणादिप्रतिपादितकथानुसारेणाऽर्थं वेदमन्त्राणां निरूपयन् 'अत्रेदं निरुक्तम्' इति निरुक्तमतं शिरसा समादद्रे एवं स्वमतेन वेदमन्त्रान् निर्ब्रुवन् भगवान् यास्काचार्योऽपि 'अत्रैतिहासिकाः' इति पौराणिकमतं स्वीचकारेत्युभयोर्न विरोधः । तत्तत्कर्मानुष्ठानकालनिर्णयाय फलादेशादिबोधाय च लग्नादिविस्तृतो निबन्धविशेषो ज्यौतिषम् । गणितपारदृश्वभिर्निखिलं ज्योतिश्चक्रं बुद्धाववस्थाप्याविष्कृतमिदं परमाद्भुतं ज्योतिश्चक्ररत्नमुल्लासयत्संस्कृतसाहित्यपारावारं सर्वप्रथममेतदेव भारतं चमत्करोतितराम् । अहो, अनिर्वचनीय एव एतद्देशप्रसूतानां ज्योतिर्विद्याविचक्षणानां विद्याप्रभावः, यतो न केवलं भूचराणामिव, किन्तु गगनचराणामपि गतिं हस्तामलकीकुर्वज्ज्यौतिषमिदं शास्त्रं संस्कृतप्रणयिनां परमस्य चमत्कारस्य गौरवस्य चाऽऽस्पदम् । नूनं सम्पादितमनेन संस्कृतसाहित्यस्य विस्मयकरश्च स्मयकरश्च गौरवम् । तदेवं संस्कृतसाहित्यरत्नभूतानि वेदाङ्गानि संक्षेपतो निरूप्य तदुपाङ्गान्यपि संक्षेपतो निरूपयामि । तत्र च भगवान् याज्ञवल्क्यः—

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।

इति पुराणादिचतुष्टयस्य वेदाङ्गत्वमाह । प्रधानाङ्गानि तु प्राक् प्रतिपादितानि षट् । नैषधकृच्छ्रीहर्षोऽपि तेषां प्रधानाङ्गत्वमेव संवदति, तथा हि

'अमुष्य विद्यारसनाग्रनर्तकी
त्रयीव नीताङ्गगुणेन विस्तरम्
अगाहताष्टादशतां जिगीषया
नवद्वयद्वीपपृथग् जयश्रियाम् ।'

अतएव षड्भिरङ्गैश्चतुर्भिरुपाङ्गैः सहिता ऋगादिचतुष्टयीति चतुर्दशत्वम् । अस्तु । उपाङ्गेषु प्रथमं पुराणमेवाऽऽलोचनार्हम् पुराणोपपुराणभेदेन वेदवत् पुराणस्यापि द्वैविध्यम् । श्रीमद्भगवद्व्यासमुनिनाऽऽविष्कृतास्त इमे सर्वेऽपि ग्रन्थाः वेदवदनादिपुरुषनिश्वासरूपा एव । यं वेदपुरुषमधिकृत्य भगवती श्रुतिः--

'यन्मनसा न मनुते येनाहुर्मनो मतम्'
'यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति'
'श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह
वाचः स उ प्राणस्य प्राणः'
'यत्प्राणेन न प्राणिति येनः प्राणः प्रणीयते
तदेव ब्रह्मत्वं विद्धि नेदं यदिदमुपासते'

इत्यादिना निषेधमुखेन यथाकथञ्चिल्लक्षणामाधत्ते तस्यैव महापुरुषस्य प्रलये मनसि विलीनो निःश्वासरूपोऽयं सर्वोऽपि वेदपुराणादिर्विषयः । श्रुत्यैव किल भगवत्येदमाघुष्टम्–यथा हि

अस्य महतो भूतस्य निःश्वसितमेतद् यद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसो इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि इष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकः सर्वाणि च भूतानि एतस्यैवैतानि निःश्व-

सितानि' इति । तेनैव पुराणेन पुरुषेणाऽभिसंबन्धात् इमानि पुराणपदवीं भजन्ते । सार्वजनीनहितप्रवणचेतसा भगवतानेनैव पुराणपुरुषेण सर्वमिदं निःश्वासरूपेण प्रकटीकृतम् । 'तपसस्तन्महिना जायतैकम्' इत्यादिना ज्ञायते यद् भगवताऽनादिपुरुषेण सहैव लोकसिसृक्षया तत्कल्याणाय कल्पान्तरानुक्रमेण प्रतिसर्गमेतानि सर्वाण्येवानुसृज्यन्ते । वेदवदेवोपादेयताऽप्येतेषां तत्र तत्र वैदिकीभिरेवाख्यायिकाभिर्निश्चेतुं सुकरा, तथा हि 'ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणमितिहासपुराणं' मित्यादिनेतिहासपुराणयोरपि वेदवदेवोपादेयता श्रद्धेयता च कल्पयितुं सुकरा प्रज्ञावताम् । इतिहासपुराणे न परस्परमत्यन्तभिन्ने, आख्यायिकाप्रधाना इतिहासग्रन्थाः सृष्ट्यादिवर्णनप्रधानानि च पुराणानि । यथोक्तम्—

सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितश्चेति पुराणं पञ्चलक्षणम् इति ।

वैदिकमन्त्रानुप्रविष्टा गभीरा विषया एवाऽऽख्यायिकादिवर्णनरूपेण पुराणेषु दर्शिताः । आध्यात्मिकाधिदैविकाधिभौतिकभावत्रयीपरिपूर्णतया वेदस्येव पुराणानामपि भावत्रयपूर्णत्वम् । पुरा हि महर्षीणां साक्षात्कृतधर्मतया परमसूक्ष्मार्थदर्शितया च न वेदगभीरविषयाणां कथादिरूपेण प्रकाशनापेक्षाऽऽसीत्, कालक्रमेण तु समुज्जृम्भिते बुद्धिमान्द्ये तत्प्रकाशनापेक्षेति वेदादभ्योऽर्वाक् तदाविर्भावेऽपि न तेषामनादिताभङ्गः, सूक्ष्मरूपेण वेदवदेव तेषामपि ततः प्राक् सदा विद्यमानत्वात् । अतएव भगवान् यास्कः—

'साक्षात्कृतधर्माण ऋषयो बभूवुस्तेऽपरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः, उपदेशाय ग्लायन्तोऽपरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च' इत्याह येषां स्त्रीशूद्रादीनां न वेदाध्ययनेऽधिकारः 'स्त्रीशूद्रौ वेदं नाधीयाता' मिति ये चाऽधिकारिणोऽपि बुद्धिमन्दतया न वेदार्थपरिज्ञाने प्रभवन्ति तेषां कृते सुरुचिदोऽयं धर्मोपदेशमार्गः । श्रीकृष्णचरित्रश्रवणं पुराणप्रसादैकलभ्यं पवित्रयत्यस्माकं कर्णान्, श्रीरामचरितं प्रवर्तयत् कर्तव्यपथे सुधासारैरभिषिञ्चति मनांसि, सावित्र्यादिचरितमवस्थापयति पातिव्रत्यादौ, किं बहुना, एकैकमपि पुराणप्रसादलभ्यं चरितामृतं प्रवर्तयति सत्कार्येऽस्मान् निवर्तयति च कुमार्गात् । तदेवं प्रवृत्तिनिवृत्तिविधायकतया वेदवदेव पुराणान्यपि श्रद्धेयान्युपादेयानि समादरणीयानि च ।

एवं न्यायः सप्तपदार्थतत्त्वज्ञानेन परमात्मस्वरूपं प्रतिपादयन् कैवल्याय भवति । पूर्वमीमांसा कर्मकाण्डद्वारेणैहलौकिकं पारलौकिकञ्च फलं वितरति । वैदिकवाक्यविचारो हि पूर्वमीमांसाया लक्ष्यम् तद्द्वारेणैवाऽग्निहोत्रादिषु प्रवर्तमानः स्वर्गादीन्, श्येनादिषु प्रवर्तमानः शत्रुमारणादीन् पुत्रेष्ट्यादिषु प्रवर्तमानः पुत्रादीन् प्रसादान् लभते । फलेच्छामन्तरेण विधीयमानन्तु तदेव कर्म कैवल्याय घटते ।

यथोक्तम्—

'मयि सन्न्यस्तकर्माणः कैवल्यं यान्त्यनामयम्'
'मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि'
'मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु'
"मामेवैष्यसि कौन्तेय !"
"त्यागेनैकेनामृतत्वमानशुः" इत्यादि ।

एवमुत्तरमीमांसाऽपि उपनिषद्दर्शितदिशा ज्ञानेन मुक्तमाह । धर्मशास्त्रं तु मन्वादिप्रणीत सदाचाराद्यवबोधका ग्रन्थविशेषाः । आचारव्यवहारप्रायश्चित्तभेदेन त्रिधेदं भिद्यते । आचारहीनं न पुनन्ति वेदा इति । प्रथममाचारस्ततो व्यवहारस्तदनु प्रायश्चित्तम् ।

धर्मो हि भारतीयानां परं जीवनम्, धर्म एव बहिर्गता असवः, यत्किमपि विधीयते यदपि निर्धार्यते तत्सर्वं धर्ममनुरुध्यैव ।

'धर्मे सर्वं प्रतिष्ठितम्'

'धर्मोह्येतस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति' । धर्मेण पापमपनुदति...... तस्माद्धर्मं परमं वदन्ति'

'धर्मान्मा प्रमदः' 'श्रेयान् स्वधर्मो विगुणः'

इत्यादिभिरसंख्यैर्वचनजातैर्यो धर्मो विशिष्यते, यश्चानादिकालतोऽद्यावधि ससंमानं प्रचलति, यद्रक्षैकव्रतानां रुधिरनदप्रवाहैरनेकश आर्द्रीकृतमहीप्राणान् तृणीकृत्य यद्रक्षणाय च खेलितमनेकशोऽसंख्यैर्वीरैः, किं बहुना निर्लेपोऽपि नीरूपोऽपि परमेश्वरः साकारतामभजत् लिप्तः सांसारिकीषु भावनासु—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्'

तस्यैवातुलमहिम्नो धर्मस्य बोधको ग्रन्थो धर्मशास्त्रमिति निगद्यते । वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मः साधारणधर्मश्चेति षोढा वर्णितो भारतीयानां धर्मः । नित्यनैमित्तिकादिविधिबोधितकर्मप्रतिबन्धजप्रत्यवायपरिहाराय च प्रायश्चित्तम्, अधिकरणादि कार्यसाधनाय व्यवहारप्रकरणमिति सर्वमपि कायजातं धर्मेण विनियम्य ननु साधु कृतं समाजरक्षाव्रतैर्विद्वद्भिः । मात्रास्पर्शजा हि स्वतन्त्रता पुरुषं परिच्यावयति कर्तव्यपथात्, प्रच्युतश्च न जातु प्रभवति सांसारिकीं पारलौकिकीञ्च क्रियासन्ततिमभिनिर्वर्तयितुम् । तदस्मिन् धर्मशास्त्रे

'मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः
यमापस्तम्बसंवर्तकात्यायनबृहस्पती
पराशरव्यासशंखलिखिता दक्षगौतमौ
शातातपो वसिष्ठश्च धर्मशास्त्रप्रयोजकाः'

इति श्लोकोपवर्णितमहर्षिविरचिताः ग्रन्थाः सन्ति । तदेवं वेदाङ्गोपाङ्गविषये किञ्चिदभिधाय सम्प्रत्यन्यसंस्कृतसाहित्याङ्गविषये किमप्युच्यते ।

सम्प्रति साहित्यव्यपदेशेन प्रथितानां काव्यलङ्कारादीनां प्रथममासनं संस्कृतसाहित्ये । रत्नजालैरनन्तैरिव पाथोधिः, परिस्फुरद्भिस्तारागणैरिव वियदेतद्ग्रन्थैरसंख्यैरभिभ्राति संस्कृतसाहित्यम् । सितशर्करामधुरेण पथा लौकिकानां प्रवृत्तिनिवृत्ती बोधयदेतन्ननु किमपूर्वं वस्तु संस्कृतसाहित्यस्य । न केवलमनेन सुधासारैरानन्दित एव लोकः, अपि तु धर्मार्थकाममोक्षाभिधा पुरुषार्थचतुष्टय्यपि लोकानामेतदधीना । तथा हि

'काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे'

इत्युच्यते

तत्र कान्तासम्मितैरतिमधुरैर्वचोभिर्लोकानामुत्कर्ष इत्येतस्याऽर्वाचीनसाहित्यस्याऽनन्यसाधारणो विशेषः । अन्यदप्येतद्विषय उच्यते यत्—

'चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि । काव्यादेवे'ति एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तश्च

स्वर्गे मर्त्ये च कामदुघा भवती'ति श्रुत्यापीदमनुमीयते । सांसारिककलहसन्तप्ते मनुजचेतसि सुधासारैः शान्तिदायिनी किलाऽस्य साहित्यपीयूषस्यस्य वृष्टिः । सांसारिकदुर्वासनामलीमसं मनुष्यस्वभावं विमलबोधवारिधाराभिः प्रक्षाल्याऽऽसिच्य च पवित्रतावल्लीं तत्र प्ररोहयितुं प्रभवति विशुद्धं काव्यनाटकादि । साहित्यपीयूषमिदं मन्ये कस्मिन्नपि देशान्तरे कस्यामप्यन्यस्यां भाषायां समाजान्तरे च नैयतीमुन्नतिमारूढं यथाऽत्र भारते संस्कृतभाषायामार्येषु । भाषान्तरेषु हीदं सङ्कीर्णमसम्पूर्णमगभीरभावमनुमयलोकाहतञ्च । संस्कृतभाषाशब्देष्वेवाऽयमनन्यसमो विशेषः यत् सरसता च सरलता च समाना च प्रायशआनुपूर्वी बह्वर्थवत्ता च । परमः किलैष एतस्या भारत्यामहिमा यदभिधयाऽप्यनेकेऽर्था एकस्यामेवानुपूर्व्या मुपलभ्यन्ते । तथा हि—

देवः पतिर्विदुषि ! नैषधराजगत्या
निर्णीयते न किमु न व्रियते भवत्या
नायं नलः खलु तवातिमहानलाभो
यद्येनमुज्झसि वरः कतरः परस्ते

इति नैषधीयचरितस्थः श्लोक इन्द्रवह्निवरुणयमनलविषयमर्थपञ्चकमभिधत्ते । न हि किल दृश्यते साहित्यान्तरेषु श्लेष ईदृशः । किञ्च

विश्वरूपकलनादुपपन्नं यस्य जैमिनिमुनित्वमुदीये
विग्रहं मधभुजामसहिष्णुर्व्यर्थतामदर्शनं स निनाय

इत्यप्रकृताप्रकृतश्लेषे परमानन्दः साहित्यरसिकानाम् । किमन्यद् । संस्कृतसाहित्ये ह्यस्मिन् अभिधालक्षणाव्यञ्जनाभिस्तिसृभिर्वृत्तिभिरुपलभ्योऽर्थः सर्व एव पदं[illegible]ति ।

वल्कलावृता धृतजटाः सुरदीर्घिकायां
कल्पद्रुमाः कति गिरीश ! तपश्चरन्ति

इत्यत्र सुरदीर्घिकायामिति पदं गङ्गातीरं लक्षयन् पावनत्वाद्यतिशयार्थं धत्ते ।

राघवविरहज्वाला
सन्तापितसह्यशैलशिखरेषु
शिशिरे सुखं शयानाः कपयः
कुप्यन्ति पवनतनयाय

इत्यत्र कोऽपि सहृदयैकसंवेद्योऽर्थो व्यञ्जनादिशाऽभिव्यक्तः कविना ।

शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृत'मित्यधमत्वेन परिगणितमपि चित्रकाव्यं न संस्कृतसाहित्यश्रियं न पुष्णाति । परं किल चमत्करोति तदपि स्वाकारचित्रितेन कणचिवरेण । बहुभिः कवीश्वरैः स्वपाण्डित्यसीमा प्रदर्शिता चित्रालङ्कारान् चित्रबन्धान्निर्माय ।

'घोरध्वनिभिरलन्ते नीरद ! मे मासिको गर्भः
उन्मदवारणबुद्ध्या मध्येजठरं समुच्छलति'

कीदृशो हि गिरामविषयो वीररसोऽत्र दर्शितः ।

करुणादावपि—

'अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम्'

इति कविताकान्तैर्भवभूत्यादिभिर्न खलु न महदाश्चर्यं लोकानामाविष्कृतम् । एवं समानानुपूर्वीकतया कमप्यनिर्वचनीयमानन्दमनुभावयति सरसा संस्कृतपदावली । यथा—

मधुरया मधुबोधितमाधवी-
मधुसमृद्धिसमेधितमेधया
मधुकराङ्गनया मुहुरुन्मदध्वनिभृता
निभृताक्षरमुज्जगे, इत्यादि ।

तदेवं गद्यपद्यशिलालङ्कारादिमद्भिः शृङ्गारवीरादिनवरसीप्रकृतनवकुसुमैरसंख्यैः काव्यनाटकादिग्रन्थैः परमाच्छन्नः परिस्फुरितश्च संस्कृतसाहित्यपारावार इति सम्बन्धे न कस्यापि विमतिः। अनन्यज्योतींषीमानि संस्कृतरत्नानि। न खलु सुरसरस्वतीवरपुत्रस्य कालिदासस्य कृतेः शाकुन्तलादेः सादृश्यं काप्यन्यत्राऽवलोक्यते। भास, बाण, भारवि, भवभूति, माघ, श्रीहर्षादीनां संस्कृतसाहित्यकर्णधारमहाकवीनां प्रातःस्मरणीयानि नामधेयानि श्रुतमात्राण्यपि परं गौरवमावहन्ति संस्कृतसाहित्यस्य। अन्यभाषाकविभिर्यन्न विधातुं पारितम् तदेव संस्कृतकविभिर्विधाय दर्शितम्। को नु मन्यते मीमांसाजटिला अपि विषयाः श्लोकनिबद्धाः स्युरिति। तेऽपि सर्वे श्लोकबद्धा एवेति ननु महदाश्चर्यम्। धार्मिकाः दार्शनिकाः, सामाजिकाः सर्वेऽपि विषयाः संस्कृतकविभिः कवितया समुद्दङ्किताः। अर्थशास्त्रं नीतिशास्त्रं, नाट्यशास्त्रं, किमन्यत्, परमगभीरस्याऽस्य साहित्यस्य प्रसादान्न किमप्यलभ्यम्। संस्कृतसाहित्यमेवास्मान् प्राचीनमितिहासं बोधयति, तत एवाऽवगम्यतेऽस्माकं प्राचीनं गौरवम् पौर्वकालिकी समुन्नतिः क्रमशो ह्रासश्च।

## संस्कृतशिक्षा

लीलामयस्य भगवतो जगदीश्वरस्य लीलाजालविस्तृतं जगदिदं कतिधा न परिवर्तितम्? कियन्ति वा विस्मयावहानि हर्षोद्वेगादिप्रचुराणि सुखदुःखचमत्कारकराणि दृश्यान्यत्र न दृष्टश्रुतचराणि? नूनमघटितघटनापटीयसी सेयं भगवल्लीला। यदेकदाऽसम्भवमिव विस्मयकरमिव प्रतीयते तदेवान्यदा सम्भवि च सुकरञ्च सुवचम्। यदेकदाऽभ्युदयशिखरमास्पृशदालोकितं तदेवान्यदा रसातलं निपतन्न दुरालोकम्। उदयाचलशिखरमध्यमध्यारूढोऽपि प्रकाशमयोऽपि निखिलजनताभिर्वन्दनीयोऽपि निष्कलङ्कोऽपि गगनविहारी तिग्मरोचिः क्षणेनैवाऽसहायोऽन्धतामिस्रप्रचुरे अस्ताचले निपतन् केन नावऽलोक्यते प्रत्यहम्? परमशिक्षितं सकलदीक्षागुरुगुणसमृद्धिप्रचुरञ्च भारतमेतत्को नाम वेत्तिस्म—शिलालवदुर्विदग्धतया दीनहीनं परवदनैकापेक्षि च कदापि भविष्यतीति। हन्त, परमपवित्रज्ञानप्रदा परमोज्वला निखिलविषयावगाहिनी संस्कृतशिक्षा सम्प्रति दीनहीना च निःसहाया च भारतप्रसूतानामपि घृणादृष्टिकलुषितवेषा च परेषां मुखापेक्षिणी सम्पन्ना! परिवर्तनपटीयसि जगच्चक्रे विलीनं तेन कालेन च गौरवेण च यस्मिन् साभिमानमुदाजहारैतद्देशीयः पण्डितमण्डलाग्रणीर्भगवान् मनुः—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः इति

अहो कीदृशमभिमानगर्भं वचः, कीदृशी च भारतगौरवावहा निष्कलुषपदा सरस्वती। आबालगोपालहालिकं जननीनिर्विशेषं परिचरितायां सुरगिरि, आशुकसारिकमाकटकारकमाहिमाचलसेतुबन्धञ्च शिरसा समादृतायां संस्कृतशिक्षायां कतमो गहनोऽपि विषय एतद्देशीयैः शिक्षितैर्नावगतः?। केन च लौकिकेनाऽऽलौकिकेन वा विषयेणाऽऽसन् ते तेऽपरिचिताः?। नूनं तदानीमापूर्यन्त सुरगिरो विजयशङ्खनादैर्दश दिशः, अमोद्यन्त देववाणीनलिन्या मकरन्दगन्धैरमन्दश्चतुर्दश लोकाः, व्यकास्यन्त गीर्वाणसाहितीचन्द्रिकया सहृदयानां हृदयकुमुदकलिकाः। वृन्दारकवृन्दानां वदनार-

विन्देभ्य आविर्भूतेन शब्दब्रह्मणा परिकल्पित-मूर्तिर्गुणगणावर्जितमनसां सुमनसां सदुत्सा-वारिधारापरःसहस्रैरभिषिक्तमूलालवाला, अमन्दा-नन्दसन्दोहप्रणयिभिरगण्यैर्गुणालङ्कारादिपत्रपुष्प-फलैरलंकृतोद्भासितसकलशरीरा, आनन्दमकरन्द-पतपातिभिरनन्तैः सज्जनमिलिन्दैरभिनन्दिता, काम-धेनुरिवका दुघा, सेयं देववाणीकल्पलता पुष्पिता च फलिता चाऽनल्पमाह्लादपरम्परां जनमनःसु नितराम्। परिपुष्टया संस्कृतशिक्षयाऽपि वित-तानि मनांसि, विस्तृता मानसी शक्तिः, समधिगता साध्यसाधनसामग्री, अभ्युदिता विमला विचारा-वली, अधिगतमपारमप्रमेयं श्रीगङ्गाजलामलं ज्ञानम्, आवर्जिता समृद्धिविलता कल्पलता, प्रथितञ्च दशदिगन्तसन्ततं कल्पान्तस्थायि भूखण्डेषु नामधेयं भारतीयविदुषाम्। परं हन्त, कालान्तरे किमप्यन्य-देवाऽभूदकथनीयम्, सर्वथा जितं परोत्कर्षासहेन कुटिलेन विधिना! यदसम्भवि प्रतीयते स्म तेनैव सम्भूतम्। विशेषतो यदा भारतीयविदुषामेव, भारतप्रसूतानामेव वदनारविन्दविकासाभिनिर्गतं किमप्येतदाकर्णयामः यत् 'संस्कृतशिक्षयाऽन्ध-तमसबहुले रसातले विनिपात्यते मनुजः, विदेशीय भाषाशिक्षादीधितिश्च तत्र प्रकाशच्छटामादर्शयती' ति! हन्त, येन न संस्कृतसाहित्यमवलोकितम्, न संस्कृतशिक्षा समादृता, न वा परिज्ञातं संस्कृत-साहित्यगौरवम् सोऽपीदृशैः कटुतरैर्वचोभिः संस्कृतशिक्षाविषये लोकान् भ्रमजाले निपातये-च्चेन्मन्ये सीमा दम्भस्य, जितं छलेन, च्युतं कर्तव्येन, 'निराश्रया हन्त हता यथार्थता'। वैदेश्य-शिक्षामात्रैकप्रभावितैः सत्यं विस्मृतं भारतीयगौरव पदम्, नवनटीकपटेऽम्बरवशम्बदैरकारणमालुब्ध जगन्मातरि संस्कृतभाषायाम्। संस्कृत भाषोप-निबद्धं प्राचीनैर्विद्वत्समाजानुमोदितं सरसमपि सगभीरभावमपि वस्तु कालकूटगन्धभ्रमेणेव सुदू-रमुत्क्षिप्यते, निःसारमपि विदेशीयजनतोक्तं शिरसा समाद्रियते कल्पफलमिव सेच्छमास्वाद्यते निःसंशयमिति जितमकारणपक्षपातेन। तथापि ननु यत्सत्यमनेनाऽपि सुबहूपकृतं संस्कृतसाहित्यस्य 'पदं हि सर्वत्र गुणैर्निधीयते' इति गुणग्राहिणा वैदेशिकविद्वत्समाजेन दैवाद् विनिहितायां संस्कृत-साहित्ये कृपादृष्टौ भारतीयविदुषामपि चक्षूंष्यु-न्मीलितानि। न चेदकरिष्यन् पाश्चात्याः संस्कृत-साहित्ये निजान् दृष्टिपातान् मन्ये नाऽभविष्य-दिहत्यानां बहूनां विदुषामपि संस्कृतसाहित्य-गौरवज्ञानम्, नाऽप्यवाभास्यत तैः संस्कृतसाहित्ये कदाचिदपि क्षणम्। सम्प्रति यथा यथा विलोक्यते संस्कृतसाहित्यपारावारस्याऽनन्तरत्नजाल स्फुरितं सुविशालं रूपम्, यथा यथा चासाद्यतेऽनन्यप्रतिमा गभीरता, तथा तथा निदधाति पदं विदुषां चेतसि भारतीयगौरवम्, प्रतीयते च संस्कृतशिक्षायाः परमावश्यकता। वस्तुतः पीयूषमये संस्कृतसाहि-त्यसरसि निमज्य परममानन्दमनुभवतां संस्कृत-साहित्यरसज्ञानां तिक्तायते सिता, तुच्छा भवति सुधा, प्रसूते किमप्यभिनवं वस्तु वसुधा। महिमा किलैष शब्दब्रह्मणः।

यैर्विद्यालयेषु केवलं नाममात्रेणैव संस्कृत-साहित्यशिक्षाऽधिगता, येषां चेतस्यारम्भत एव वैदेशिकं गौरवं वैदेशिक्यो रीतयो विदेशीयाश्चा-चाराः पदं न्यधुस् तेते प्रलपन्तु संस्कृतसाहित्येऽ-धुनाऽप्युपेक्षावचांसि दर्शयन्तु च तत्रौदासीन्यम् परं पक्षपातकालुष्यविवर्जिता [illegible] भाषा-

चारविचारचतुरा न्यायसूर्तयो विद्वांसस्तु संस्कृतसाहित्यशिक्षामन्तरेण न केवलं भारतीयानामेव, सर्वेषामपि जनानां शिक्षा पूर्णतामासादयितुं न प्रभवतीति निष्पक्षपाततया कलयन्ति । इतः परमपि यदि संस्कृतसाहित्यशिक्षा हेयदृष्ट्या विलोक्यते मन्ये न तदा वचसामवसरः ।

"मात्सर्यरागोपहतात्मनां हि
स्खलन्ति साधुष्वपि मानसानि" ।

त्रिगुणात्मिकायां प्रकृतिसृष्टौ चलस्वभावेन रजसा निजकर्तव्यविचालितानां स्वकर्तव्येऽवस्थापनं नाम शिक्षायाश्चरमं फलम् । एष एव हि शिक्षिताशिक्षितयोर्विशेषो यत्कर्तव्यविच्युतो दुर्वासनामलिनेऽपि पथि प्रवर्ततेऽशिक्षितः, शिरसि निपतितायामपि कृपाणधारायां, निगृह्येन्द्रियाणि कर्तव्यपथमनुसरति शिक्षितः । प्रधानतमोऽयं किल शिक्षाया मधुरः परिणामः । तद् यथा संस्कृतशिक्षा मनुजं कर्तव्यपालने नियुङ्क्ते यथा च लभ्यते तत इद विमलं रत्नम्, मन्ये कचिदेवाऽन्यतस्तथा भवेत्, न वा भवेत् । सदाचारव्रतानां विमलमतीनां ब्राह्मणानां करे विन्यस्येमं शिक्षाभारं साधुकृत पुरा भारतेन । ये ये गुरोर्विचारा आऽऽचाराश्च यथा भवन्ति ते ते तथैव शिष्यमनुसंक्रामन्ति । शिष्यबुद्धिरपि स्वसादृश्य स्वभावं वा नीयते तैः ।

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मा शेवधिष्टेऽहमस्मि
असूयकायाऽनृजवेऽयताय
न मा ब्रूया वीर्यवती तथा स्याम्

इति श्रुतिमनुगच्छन्त्या—

विद्या ब्राह्मणमेत्याह शेवधिष्टेऽस्मि रक्ष माम्
असूयकाय मां मा दास्तथास्यां वीर्यवत्तमा

इति मानवस्मृत्या सदाचारसम्पन्नस्य वेदविदो ब्राह्मणस्य शिक्षणभारो विनियुक्तः । छन्दोग्येऽपि विद्या ह वै ब्राह्मणमाजगाम तवाऽहमस्मि त्वं मां पालयाऽनर्हते मानिने नैव मादा गोपाय मां श्रेयसी तथाऽहमस्मि, इति तदेवोच्यते । सम्प्रतितु निजोदरपूरणायाऽप्यसमर्थानामितस्ततो भिक्षालाभलोभात्पर्यटतां वर्णप्रथमानां ब्राह्मणानां दूरे विद्याभ्यासः, यथोचितं शिक्षणञ्च, वेदज्ञता च! पश्यतेदं महाविजृम्भितं कलेः !!

कस्मिंश्चिदपि विषये पारमार्थिकं ज्ञानं जनयित्वा कर्तव्येऽवस्थापनं हि शिक्षाफलमित्यनुपदमेवाऽवोचम् । या शिक्षा पारमार्थिकं ज्ञानमजनयित्वा भ्रमजाले निपातयेच्छिक्षार्थिनः, यदधिगमसंपादने च वृथैव कालक्षेपो भवति ऋते निर्बलताया न किमप्यन्यत्पारमार्थिकं फलं हस्तगतं भवति, मन्ये न सा शिक्षापदाभिधेयतामास्पृशति, अथवा वृथैव कलुषितं तया शिक्षापदम् । बहूनां विषयाणां पारमार्थिकज्ञानसम्पादने प्रभवन्त्यपि संस्कृतशिक्षा सम्प्रतीमामेव दशामाश्रिता । राजकीयभाषाविद्यालयेषु प्रचलितो योऽयं नवीनः कोऽपि संस्कृतशिक्षणमार्गः स नूनमपर्याप्तः संस्कृतसाहित्यपारावारपारदर्शने शिक्षार्थिनाम्, द्वित्रान् ग्रन्थानधीत्य कथञ्चित्परीक्षोत्तीर्णतायामासादितायामपि कियत्तद्विषये तैः साफल्यमासाद्यते इति दृष्टञ्च श्रुतञ्च विद्वत्समाजस्य । मन्ये न दोषभाक् स्यां यदि तेषां संस्कृतसाहित्यपारङ्गमत्वे कामं संदिह्याम् । एवं परम्पराप्रचालिताऽपि प्राचीना शिक्षापद्धतिर्नाऽधुनिकैः संमान्यते । हन्त, लौकिक

शिक्षोचितग्रन्थरत्नपरिपूर्णेऽपि संस्कृतसाहित्यपारावारे बाह्यज्ञानशून्यताकलङ्कितेन पदेनाऽलंक्रियन्ते संस्कृतपण्डिताः। नूनं न केवलं बाह्याडम्बरवर्जितानां संस्कृतपण्डितानामेव, किञ्चाऽन्येषामपि बहूनां शिक्षितम्मन्यानां शिरसि निपतितोऽयं नितरां दुस्तरश्चाऽऽक्षेपः। अस्तु अवश्यं निष्पक्षपातमाकलयतां चेतसि प्राचीनाऽपि शिक्षापद्धतिर्न निर्दोषा प्रतिभाति। आजन्म व्याकरणं रटद्भिर्वैयाकरणैः सूक्ष्मातिसूक्ष्मकोटिप्रविष्टैर्नैयायिकैस्तदनुयायिभिरन्यैश्च सम्प्रति न बहूपकारसंभावना तेषाञ्च देशस्य च समाजस्य च किं वा तेनाऽधीतेन यत्केवलमध्ययनमात्रफलं स्यात्। बाह्यज्ञानेन सह शास्त्रीयं ज्ञानं यद्युपार्जयेत्तदा देशस्य च समाजस्य चोपकारे प्रभवति शिक्षितः। सन्ति यद्यपि संस्कृतभाषाग्रन्थेषु नीतिश्च वाणिज्यश्च भूगोलेतिहासादयश्च, परं न तत्सर्वं क्रमेण निबद्धम्। सक्रमश्चेद् भवेत् साभिनिवेशमधीत च चेत् सम्प्रति संस्कृतविद्वांसो न कस्याऽप्युपहासतां गच्छेयुः। ये चाऽपि वदन्ति पौर्वकालिकीमवस्थां बुद्ध्यमानो जनो भाविनीं समुन्नतिं कर्तुं पारयति, न च संस्कृतभाषायां पौर्वकालिकेतिवृत्तबोधकानि पुस्तकानि, नाऽपि केचिदितिहासग्रन्था इति संस्कृतशिक्षा नितान्तमनुपयोगिनी'ति। तान् प्रति सविनयमिदमावेदनम्, सत्यमितिहासग्रन्थानां न्यूनता संस्कृतसाहित्ये, न परमेकान्ततोऽभावः, न्यूनता तु निरोद्धुमधुनाऽपि शक्यते नवनिर्मितैर्ग्रन्थैः, न हि भाषान्तरसाहित्येषु गगननिपतितास्ते ते ग्रन्थाः, उत्साहोद्योगसमाश्रितैर्विद्वद्भिस्तेऽपि निर्मिताः संस्कृतभाषायामप्युत्साहिभिर्निर्मातुं शक्यन्ते किन्तु विद्यमानानामध्ययनेन यादृशी मतिर्भाविन्युदयते सा किं महाभारतादीनां प्राचीनेतिवृत्तबोधकानां ग्रन्थानामध्ययनेन नोदेतुं प्रभवति? अहन्तु मन्ये न केवलमैतिहासिकमेव वृत्तम्, किन्तु विमलमुभयलोकहितममृतं ततो लब्धुं सुकरम्। पूर्वजानां यशोऽपि गीयताम्, पौर्वकालिकमितिवृत्तमपि ज्ञायताम्, निष्कलुषा शिक्षाऽपि गृह्यताम्, संस्कृतकवितामृतमपि निपीयताम्, किमन्यत् सर्वमादीयतां तत्प्रसादात्।

अथ प्रचलिता संस्कृतशिक्षा कथमिदानीमुपयुज्येत, कीदृशी च संस्कृतशिक्षा भवेत् यस्याः साधूपयोगः सम्पाद्येतेति विविच्यते। येषां चेतसि चिरादुद्बुद्धोऽयं संस्कारः—यद्ब्राह्मणानां धर्मग्रन्थैरेवाऽऽपूर्णं संस्कृतसाहित्यम्, संस्कृतशिक्षाप्रभावितधार्मिककलहाकुले जनसमाजे न जातु समुन्नतिसम्भावनेति परिहार्या संस्कृतशिक्षेति, नूनं नितान्तमाभ्रान्तास्ते, केवलं ब्राह्मणानां धर्मग्रन्थैरेव संस्कृतसाहित्यपारावारो न परिपूर्णः किन्तु धर्मार्थकाममोक्षाभिधेयचतुर्वर्गप्रतिपादकैर्ग्रन्थरत्नैः। अमेयमाने दर्शनपथातिगे महाकालसागरोदरे निलीनेष्वप्यन्तर्हितेष्वपि बहुषु तदीयभागेषु, स्वधर्मपक्षपातान्धयतिभिर्दैवलब्धप्रभावैर्भूतभारतप्रभुभिरुत्स्फुरन्महाशिखे वैश्वानरे आहुतीकृतेष्वपि संख्यातिगेषु संस्कृतग्रन्थेषु धरोदरशोभां वर्धयत्स्वपि बहुषु संस्कृतपुस्तकरत्नेषु, विद्यमानं लभ्यमानमेव संस्कृतसाहित्यं पर्याप्तं लोकानुत्तमकर्तव्यव्रतेऽभिदीक्षितुम्। अनेकविधग्रन्थनिचयविस्तृतस्याऽमेयमहिम्नोऽस्य संस्कृतसाहित्यस्य शिक्षा सम्प्रत्यनुपयोगिनीति मन्ये न विदुषां विचारगर्भं वचः। स्थानं कालं पात्रञ्च शोधयित्वा

प्रचालितायां उत्तमशिक्षाया उपयोगितायां को नाम विद्वान् संशयीत ?

सम्प्रति प्रचलितायाः संस्कृतशिक्षाया इयमवस्था यत् सोहापोह सतर्कवितर्कमधीतेष्वध्यापितेषु च न्यायव्याकरणादिषु तद्विचारैकविलीनमनसां न चराचरेष्वन्यत् किमपि प्रतिभाति। अवच्छेदकताभिराच्छाद्यते मनः, फक्किकाभिराघूर्ण्यते शिरः। प्रयोगपराणां शास्त्राणां कथञ्चित्प्रचलितायामप्यध्ययनपरिपाट्यामधीतमात्रेणैव कृतकृत्यम्मन्या भवन्ति तच्छिक्षार्थिनः, योगशास्त्रादिकं बहुशोऽधीतमपि ज्ञातरहस्यमपि न जातु प्रयोगपथमानीयते तच्छिक्षितैः, अतएव सुलभयोगिजनेऽपि भारतेऽत्र द्वित्रा एव प्रयोगचतुरा यथार्थयोगिनः क्वचिद्गिरिकन्दरासु भवेयुः। धर्मग्रन्थानामपीदृश्येव दशा। आचारव्यवहारप्रायश्चित्ताभिधे प्रकरणत्रये संविभक्तेष्वपि संविभक्तेषु तत्र लौकिककार्येषु कर्तव्यपराङ्मुखा हन्त व्यवहारं न विदन्तीति जेघुष्यन्ते। शिक्षार्थिभिः शिक्षितैश्च संस्कृतस्य निजशास्त्रानुशीलनाऽऽचरणादिना ऽचिरेणाऽपनेयोऽयङ्कलङ्कः। भालतटमलङ्कुर्याद् यावदियङ्कलङ्कलेखा संस्कृतज्ञानां यदिमे केवलं तर्काधिष्ठिता न लौकिकेषु कार्येषु प्रभवन्तीति मन्ये संस्कृतशिक्षायामुदासीनतैव स्यात्तावद्विदुषाम्। परित्यज्यतां केवलतर्कवादोऽनुभवविरुद्धः, परिगृह्यताञ्च विदुषां सप्रमाणं वचनम्। एकदाहि संस्कृतविदुषा केनचित्प्रसङ्गत इदमुक्तं यत् पृथिव्यपेक्षया चन्द्रः सूर्यो वा दूरतर इति विचारे चन्द्र एव दूरतर इति युक्तं भवेत्, दूरदेशादापतद्धि तत्किरणरूपं तेजोऽतएव न तथोष्णतरं यथा सूर्यस्ये'त्यादि। तदेवंविधा शुष्का तर्कप्रणाली न रोचते साम्प्रतिकेभ्यो विद्वद्भ्यः।

जगन्मान्यामध्यात्मविद्यां संस्कृतशिक्षैव बोधयति। परमोच्चविचारपरम्परामवगमयन्ती सेयमध्यात्मविद्या संस्कृतशिक्षार्थिभिः क्रमशः शास्त्रान्तरैः सहावश्यमध्येष्यते चेत्मन्येऽशतः पूर्णतामासादयेत् संस्कृतशिक्षा। नवविज्ञानग्रन्थानां संस्कृतसाहित्ये अल्पत्वेऽभावेऽपि वाऽध्यात्मज्ञानमिदं मन्येऽतिदुर्लभमेवाऽन्यत्र। स्वप्ननिमीलितनयनां संस्कृतभारतीं प्रतिबोधयन्ती सम्प्रत्यपि जयतितरामियमाध्यात्मिकी विद्या, एवं ज्योतिषायुर्वेदयोः प्रचुरतरप्रचारो'पि संस्कृतशिक्षामुपयोगिनीं कुर्यात्। लब्धप्रचारास्वप्यधुनाऽभिनवास्वनेकास्वौषधिषु भारतीय एवाऽऽयुर्वेदो भारतार्थमधिकोपयोगीत्यत्र न कस्यापि विवादः। ज्योतिषायुर्वेदौ कर्मकाण्डञ्चेति हि प्रत्यक्षफलप्रदतया समाजस्य परमादरणीयानि वस्तूनि, अतएव कर्मकाण्डस्य सम्प्रति परिहीनायामप्यवस्थायां तत्र श्रद्दधतेतरां जनाः। परं तस्याऽधुना कीदृशी दशा सम्पन्नेति मनागवधीयताम् येन पण्डितमानिनां समाजे न कर्मकाण्डभारः स्वहस्ते आहितस्तेनैव तस्याऽवनतिरपि कृता। शिक्षाव्याकरणादिषडङ्गज्ञानविहीनतया भ्रष्टाचारपदमविज्ञातार्थमुदीरितेषु वेदमन्त्रेषु कर्मफलमपश्यतां सामाजिकानां तत्राश्रद्धा युज्यत एव। श्रुत्यैव किल प्रतिपाद्यते तादृशस्य कर्मणो वैफल्यञ्च वैपरीत्यञ्च—यथा

मन्त्रोहीनः स्वरतो वर्णतोवा
मिथ्याप्रयुक्तो न तमर्थमाह
सवाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात्

एवं—स्थाणुरयं भारहारः किलाभूदधीत्यवेदं नविजानातियोऽर्थंनिरुक्तकृता भगवता यास्का- चार्येणापि अर्थज्ञानमन्तरेणोच्चरितानां मन्त्राणां नैष्फल्यमुक्तम् । यद्यपि सर्वेपव ते षडङ्ग ज्ञानरहिता न सन्ति तथा हि महावंशोऽयं तत्समाजस्येदृश एव बहुलाऽवलोक्यते । तदधी- तव्याकरणादिभिर्बोधवद्भिः कर्मकाण्डशिक्षाऽ- धिगम्येतचेन्मन्ये महानुपकारो लोकस्य संभा- व्येत संस्कृतशिक्षया ।

विद्यमानेष्वपि बहुषु ग्रन्थेषु नीतिशास्त्रमर्थ- शास्त्रञ्च संस्कृतशिक्षातो दूरमपसारिते इवस्तः । प्राचीनकाले सुमहान्ति राज्यचक्राणि यदाधारेण प्रचलितानि सम्प्रति तत्रोदासीनता किल सुमहान् परीवादावसरः । गवेषणानिरता वैदेशिका अपि सुमहतीं परभाषाध्ययनक्लेशसन्ततिं सोढ्वा यच्छा- स्त्रमालोड्य समयहितं किमप्युज्वलं नवनीतमाद दते तत्र नाऽस्माकं दृष्टिनिक्षेप इतिनूनममेयः कलङ्कः ।

प्राचीनेतिहाससंवेदने संस्कृतसाहित्यमेव परमं निदानम् । तात्कालिकीषु अस्थिरतमासु भाषासु प्राचीनं वृत्तजातमनुद्दङ्क्य स्थिराममरभार- तीमेवाऽऽश्रित्य संकलितः समुपनिबद्धश्च तात्का- लिकविद्वद्धुरन्धरैः सर्वोऽपि प्रायशो भूतकालिको वृत्तान्तः । तदस्याऽतीतकालिकवृत्तान्तजातस्य वर्तमाने संवेदनं किल संस्कृतविद्वन्मात्रसाध्यम् । परं प्रचलिता संस्कृतशिक्षा प्रायशोऽसमर्थैतत्सा- धने, अन्यदेव किमपि ततो लभ्यतेऽन्यच्चेदम् । केन प्रकारेण किमपि वस्तु गवेष्यते कथञ्च तस्य तथ्यातथ्यनिर्णय इत्यादि संस्कृतशिक्षार्थिभिरि- तिहासकलाकुशलेभ्यो ऽध्येतव्यम् । एवंविधैरुपायैः संस्कृतशिक्षाया उपयोगित्वं संभवतीति वदता इहैव परिसमाप्यतेऽयं निबन्धः, आशास्यते च माननीयाः संस्कृतसाहित्यपारावारीणाः पण्डित- वरेण्या क्षाम्येयुः संस्कृतसरस्वतीसेविनो मे इदं बालचापलमिति शम् ।

—

## शिवयोगमंदिरसंस्था

भोवाचकमहाशयाः श्रूयतां सावधानेन चित्तेन

वीरशैवमतप्राबल्यं बसवचन्नबसवादिप्रमथा वतारकाले सर्वत्रात्यधिकं व्यापकं आसीत् । तत्पश्चात् दिनेदिने क्षीणदशामनीयतान्यधर्मैः । वीरशैवमत मिति नामशेषतांप्रापमंदं मंद । एतत्स्वा- भाविकमेवादौवर्धनं पश्चात् क्षीणदशा यथा । यत् चंद्रःशुक्लपक्षेवर्धते कृष्णपक्षे क्षीणत्वं चानुभवति । ईदृश क्षीणदशापन्नवीरशैवमतं यत्र कुत्रचित् रहस्यस्थानवासिशिवयोगिवरा वीक्ष्या- त्यंतदुःखिता अभवन् तत्क्षीणदशानिवारणाय । यथा पूर्वं केषुचिद्दिनेषुगतेषु बागलकोट नामिक- पत्तन वैराग्यमल्हणार्यनामकशिवयोग सिद्धैर्वीर- शैवमतोत्कर्षकार्यांया धार भूताचार्य पीठस्थ गुरुव- र्गाय सुविद्यांप्रदाय तद्द्वारावीरशैवमततत्वं बोध- नीयन्तेषामध्ययनाय शिवयोगमंदिरमितिकिंचित् स्थानं स्थापनीयम् इति चिंतितं । तद्धृदयभूमौवापित संकल्प रूपबीज सोन्नलापुर, राव साहेब मलप्प- बसप्पवारद, एतदधिष्ठित श्रीमद्वीरशैव चतुर्थ महासभायामंकुरोन्मुखोबभूव । सभासत्सु तत्स्था- नंकुत्रस्थापनीयमितिशंकया न स्तेषु.इलकल,,श्री,, "निरजन चरवर्य महांतस्वामिनामाज्ञानुसारेण तन्निर्दिष्ट स्थाने स्थापयितव्यमिति तैरेवसभा- सद्भिर्निर्धारितं । तदनुशिवयोगमंदिरसंस्था

स्थापनाय लक्षसंख्याकद्रव्यराशीन् सञ्चिनोमीति प्रतिज्ञातं शागलकोट् श्री० वैराग्यमल्लणार्यैः। वीरशैवमतदुर्भाग्यात् स एव समाधिस्था बभूवुर्मल्लणार्याः। तदुक्तं। यतः शंकरः सत्पुरुषेभ्योवक्रानितिमतो जानानुद्दिश्य सरलनीति दायक दुःखानि नददाति। अनंतर" इलकल" श्री,, 'निरंजन चरवर्य महांतस्वामिनामज्ञानुसारेण मलापहारी नामक नद्यास्तीरेशिवयोगमंदिर संस्थास्थापनं चक्रुर्वीरशैवमहाजनाः। सस्था स्थापित द्वित्रिवर्षएव जगच्चालकशंकरः श्री,, "निरंजन चरवर्य महांतदेशिकानास्थानायाहूतवान्। अहो" रध्रेष्वनर्था बहुला भवंति,, कालिदासोक्तिमाश्रित्यवीरशैवमतस्य दुर्भाग्यंपुनः प्राप्तं तांच्छ्वसन्निधिप्रातः निर्तदुःखपरंपरास्तु। किं प्रयोजन दुःखेन। श्री,, "निरंजन न चरवर्य महांतस्वामिनामाशीर्वादबलेनैव शिवयोग मंदिर संस्था चाल्यते नाविघ्नमद्यापि वाचकमहाशयाः पंडितपुंगवाश्चावादितमथैतत् भवति भवतां। यत् शिवयोगमंदिरसंस्था स्थापनं कृतमष्टौ वर्षा गता इति। एतत् संस्था कार्याणि स्थापित दिन प्रभृत्यद्यतनदिन पर्यंतमति त्वरयावधन्ते। वित्तव्ययः प्रतिवर्ष मधिको भवति संस्था कार्यनिर्वाहाय। तथापि संस्थाकार्याणि बहूनिसंतीति वाचक महाशयानुद्दिश्य सूचयामि। केचिद्दानशौण्डमहनीयाः स्वस्वपत्तनेषुशिवयोगमंदिरसंस्थाचालनाय क्षेत्राणि दानद्वारा समर्पयन्तः संति। केचिन्महनीया वित्तद्वारा साहाय्यं कुर्वन्ति। केचिन्महनीया भक्ति द्वारासाहाय्यं कुर्वते किं वन्महनीया निन्दाद्वारा सहाय्यं कुर्वते। भवतु। भिन्नातुः सृष्टिर्विचित्रा। भिन्न रुचिर्हि लोकः। अथवा। एतल्लौकिकत्याज्यः [हरिणापि हरेणापि ब्रह्मणापि सुरैरपि। ललाटलिखितारेखापरिमार्ष्टुं न शक्यते।] इत्युक्तिमनुसृत्यस्वस्वमानसिकविमर्शं नाविष्कुर्वंति सर्वेजनाः। एतन्मस्य बहिर्भागेकर्पणकार्यं प्रवर्तते यदि सोर औन्नत्यमाश्रयतीति केचिन्निम्नतामाश्रयतीतिकेचिच्च भणन्ति। कतिपयमहनीयानामाशीर्वादमंगीकृत्य स्वगुरुप्रेरणबुध्या सम्युक्तकार्यं पारंनयेत्। खलानांवचोदुर्गंधमाजिघ्रेयुः सत्पुरुषाः। अथ च संस्था चालक श्री., "निरंजन स्वामि महाशयानामंगानि जराराक्षसी ग्रसतिदिनेदिने" नश्वरशरीराणामेव स्वाभाविकी जरासौ। तथा श्री,, "स्वामिमहाशयानामंगानि विकारयति। रे राक्षसि दीर्घ दंडनमस्कारपरंपरां समर्पयामि दूरतोऽपसर। श्री" "स्वामिमहाशयप्रभामल्लिकासौरभ्यमन्यधर्मचांपेयसौरभ्यभ्रामितनरमधुकरानाकर्षयति यावत्। किंकरिष्यसि। त्वदुग्रस्ततयापि संस्था चालनोद्योगपरा दिवारात्रं नयंति। त्वदुग्रसनं स्वप्नेप्यस्मरंतः संस्थाकार्य निर्वाहतत्पराः सति। यथा भवंतुसंस्थाकार्याणि दूरतोऽपसर। विदग्धजनमन उद्वेजकारि लेखनेनालं। एतत्संस्थाप्रतिष्ठापनेन स्वधर्मविमुखा जनाः स्वधर्ममूरीकुर्वंतः सन्ति। अन्यमार्गावलंबिनः केचिद्वीरशैवाःस्वधर्ममपेक्षमाणाः पित्तशमिता इवायांति संस्थामुद्दिश्य। एतत्संस्था प्रस्थापित शिवकीर्तनकाराः शिवकीर्तनेन जनचित्तं वशीकुर्वंति वीरशैवमतं तत्वमुपदिशंति च। प्रख्यात कीर्तनकाराष्टष्ट संख्याका वीरशैववसतिं संचरितावीरशैवधर्म रहस्यं बोधयंति। ईदृशवीरशैवमत तत्वप्रचारपरायणान् श्री,, "स्वामिमहोदयानितस्ततः केचि

ग्रहनीया द्विषंति प्रारब्धकार्याघातं कुर्वंति च। अहो खलानामिदं भूषणं समाजोद्धारकार्यधुरीण-श्री" "स्वामिमहोदयानां चित्तचांचल्यकरणं। यतः।

अहमेव गुरुः सुदारुणाना-
मितिहालाहलमास्मतात दृप्यः।
ननु संति भवादृशानि भूयो
भुवनेऽस्मिन्वचनानि दुर्जनानम्॥

इत्येवं दुर्जनपरका ग्रंथाः शतशः संति। घटापथगामिनं गज दृष्ट्वा बहवः शुनका भणंति। किं प्रयोजनं। दुर्जनवचोझंझामारुतानामद्रिसमानधृतिमंतः संति श्री" "स्वामिमहोदयाः। सुमार्गावलंबिग्रहनीयान्निंदित्वा यन्निर्मितनरकयातनामनुभवतेत्यस्ति गौतमशापः दुर्जनानुद्दिश्य। तस्मादेव द्विषंति; नान्यथा। यथाप्रलपन्तु। दिवाकरस्य घूकनिंदाकिमकरोत्। यथाप्रसंगमनुसरामः। अस्यस्वशिवयोगाः शिवयोगिवर्या अन्यमतनिराकरणेन शक्तिविशिष्टाद्वैतमतसिद्धकरणेन जनमनोहरंति तत्रात्रप्रदेशेषु संचरित्वा। शिवयोगिवर्येषुगरिष्ठश्रीमहांतदेशिकेन्द्र इति प्रख्यातयोगिवरोऽस्ति। तस्य श्रीलूजनश्रोत्रभिद्धाणी वीरशैवमततत्वमुपन्यस्य सकलजनमनोहारिणी शिवयोगमंदिरसंस्थायां पातयति तद्धक्तिम्। अनन्यमनसा समाजसेवातत्परा बहवः शिवयोगिवर्याः स्वानुकूलकाले ग्रामांतरं गत्वा विध्युक्ताचारादिविषयान् प्रतिपाद्य जनमनः प्रतिबिंबितदुराचारान् निराकृत्य शैवीं दीक्षां समाश्रयेत् यः कोपि-वीरशैवः। दीक्षारहितपुरुषस्य मोक्षो नास्ति तद्दीक्षासाफल्यार्थं विद्यां संपादयेत् विद्यां संपाद्य" सद्गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"। इत्युक्तिं ज्ञात्वेद्दृशलक्षणयुक्तं गुरुमाश्रयित्वा तत्सेवया प्रसन्नगुरुवरेण शैवीं दीक्षामधिगम्य शिवपंचाक्षरीमंत्रं यथाशास्त्रं प्राप्य गुरुदत्तेष्टलिंगार्चनाद्वारामोक्षलक्ष्मीं प्रापयेदित्यादिना सांख्यागमोपनिषच्चैवतंत्रप्रमाणानूगदित्वा वशीकुर्वंति सकलप्रजामनांसि। शिवयोगाभ्यासं कुर्वंतः शिवयोगिवर्या विंशत्येकविंशति संख्याकाः संति तत्रात्रप्रदेशेषु शिवयोगमंदिरसंस्थायामध्ययनं शिवयोगाभ्यासोमुख्यतमोऽस्ति। यत्किंचिद्दीयते संस्कृतशिक्षा। द्वित्रिघटिकावशिष्ट निशायामुत्थाय शिवनुतिंविधाय संस्कृताध्ययनमारभ्यते। पश्चादुषःकाले समुत्थायस्थूलाचमनादिविधिंस्नानं च समाप्य शिवपूजार्थं स्वस्वस्थलमंगीक्रियते। भोजनोत्तरवेलायां शिवपुराणकथनं श्रूयते। पश्चात् स्वस्वाध्ययनमंगीक्रियते शिवयोगिवर्यैः। संस्थाचालकश्री" "स्वामिमहोदयैर्लिंगांगसामरस्यविषयकग्रंथावलोकनेनैव कालो नीयते। तत्कालावशिष्टवेलायां संस्थाचालनविषयका आलोचनाक्रियंते। वीरशैवमतोद्धारार्थमहर्निशयतमानानां श्री" "स्वामिमहोदयानां दयानिधिजगच्चालक सर्वेश्वरः संपूर्णायुष्यं ददात्विति तन्यमनसा प्रार्थयामि शंकरम्।

शिवयोगमंदिरवासिचन्नबसवः

## पाश्चात्य-विज्ञानम्

[लेखकः इन्दौरसंस्कृतमहाविद्यालयसाहित्यशास्त्रप्रधानो
पाध्यायविज्ञानविभूषणः पण्डितश्रीकृष्णाचार्यः

### How gravity acts.

कथं गुरुत्वाकर्षणं फलति ।

गुरुत्वाकर्षणस्य मध्यविन्दुः

तृतीयप्रयोगः—कीदृशी गुरुत्वाकर्षणशक्तिरस्तीत्यस्माभिः संशोधनीया । एतदर्थमानियतलोहफलकं गृहीत्वा दोरकेणोपरिबध्यताम् । तत्तु विलक्षणप्रकारेणैवावलंबमानं दृश्यते । दोरकानुलोमदिशा सरलरेखाकर्षणं कृतञ्चेल्लंबरूपतया सा दीर्घीकृता दृश्यते । अनन्तरं तदेव लोहफलकं पुनर्द्वितीयकोणाग्रेण सूत्रद्वाराऽवलम्ब्य सूत्रानुलोमदिशा द्वितीयसरलरेखाकर्षणं कृतञ्चेत् पूर्वकृतरेखया द्वितीयसरलरेखा "क" चिन्हितस्थले खण्डिता भवति अनन्तरं पुनस्तृतीयकोणाग्रेण तदेव लोहफलकं सूत्रद्वाराऽवलम्ब्य सूत्रानुलोमदिशा तृतीयसरलरेखाकर्षणं कृतञ्चेदियं तृतीयसरलरेखापि "क" चिन्हितस्थलएव खण्डिता दृश्यते । इत्थं क्रियमाणाऽनेकरेखा एकत्र "क" चिन्हितस्थल एव परस्परं खण्डिता दृष्टिपथमायाति । इदं 'क' चिन्हं सदैवावलम्बमानकोणस्य सरलतयाऽधस्तादेवस्थास्यति यदीदं लोहफलकमेकत्र सञ्चालितञ्चेत् पुनरपि तत्पूर्वस्थलमेवागच्छति किमिदञ्जायमानं 'क' चिन्हं वर्तते इतिविचारे 'क' चिन्हेसूत्रं संयुज्य तत्र फलकमवलम्बितं कुरु । अनन्तरं तल्लोहफलकं 'क' चिन्हे सर्वत इत्थं तुलितं दृश्येत । यत्तस्य सकलभारः 'क' चिन्ह एव सान्द्रीकृतोभूदिति । इदमित्थं संशोध्यमानं 'क' चिन्हं लोहफलकस्य गुरुत्वाकर्षणमध्यविन्दुं वदामः ।

यदि वयं द्वितीयाकृताविव लोहफलककोणतो निर्यंत्रणमवलम्बमानं कुर्मश्चेत् तल्लोहफलकमित्थं सस्थितं भवेद् येन तस्य गुरुत्वाकर्षणरूपं मध्यविन्दु 'क' चिन्हं यावच्छक्यमधस्तनमेव संपनेत् अथवा लोहफलकस्य सूत्रावलंबनं विहाय नादान्ते तस्य शिथिलावलम्बनं कृतञ्चेत् पूर्वनिर्दिष्टं कचिन्हं यावच्छक्यमधस्तनमेवतिष्ठेत् । तत्फलकं तृतीयाकृताविव नावलंबमानं भवेत् । किन्तु 'क' चिन्हं नागदन्तस्याधस्तात् सरलरेखायामेव सस्थितं भवेत् । तत्वतोऽयंगुरुत्वाकर्षणमध्यविन्दुस्तच्चिन्हमस्ति यत्र पदार्थस्य सकलभारः कार्यकारी सन् सान्द्रीकृतोदृश्यते । पृथिव्याआकर्षणेन पदार्थः स्वभावतः आत्मानंयावच्छक्यमधस्तनमेव स्थापयति, अर्थात् तस्य गुरुत्वाकर्षणमध्यविन्दुः यावच्छक्यमधस्तनएवतिष्ठति ।

तुला—प्रत्येकपदार्थस्य गुरुत्वाकर्षणमध्यविन्दुरस्ति । अग्रे........वर्ण्यमानस्य तुलायन्त्रस्यापि तदितरपदार्थवद् गुरुत्वाकर्षणमध्यबिन्दुरस्त्येव । सोपि तत्र लोहफलक इव यावच्छक्यमधस्थएव तिष्ठेत् । यदा तुलासलंग्नभाण्डद्वये समानं भारद्वयंनिहितञ्चेत् यत्र तुलायाः सकलभारः सान्द्रीकृतस्तिष्ठति सगुरुत्वाकर्षणमध्यविन्दुस्तुलादण्डावलम्बनस्थानादधोदेशे सरलरेखायां मानसूच्यां यत्र कुत्रापि तिष्ठति । यद्याघातेन तुलायंत्रस्यावनमनमपि कृतञ्चेदाघाताभिसरणे पुनरपि तत्पूर्वस्थलमेव प्राप्नोति । यदि तुलायंत्रस्योभयभाण्डयोः समानो भारः स्थापितश्चेत् मानसूचनी तुलादण्डस्य मध्य एव स्थास्यति ।

अतः पदार्थतोलयितुं कामेनैकस्मिन्तुलाभाण्डे स्थापितः पदार्थः द्वितीयतुलाभाण्डस्थापितेन भारपरिमाणेन तदैव समपरिमाणो भवेत् यदा मानसूचिनी तुलादण्डस्य मध्यएव तिष्ठेत् किन्तु भारपरिमाणलोहखण्डस्तोल्यमानपदार्थभारेण समभारो न चेदधिकभारस्तुलायष्टिमध स्तनीमेव कुर्यात् । मानसूचिनी च मध्यविन्दुं न कदापि स्पृशेत् । मानसूचिन्याः गुरुत्वाकर्षणमध्यविन्दुस्पर्श एव भारसमपरिमाणस्य निश्चायक इति चतुर्थः प्रयोगः ।

यदि कश्चन धातुखण्डस्तुलाया एकस्मिन् भाण्डे स्थापितः द्वितीये च १५० कर्षपरिमाणात्मकं भारवद्द्रव्यं संस्थापितम् । तेन च धातुखण्डविशिष्टतुलाभाण्डं यद्यधःस्थं भवति चेद्‌ धातुखण्डः परिमाणभारादधिकभारावानेव निश्चितो भवेत् । यदि परिमाणभारः २५० कर्षपरिमितः स्थापितश्चेत्तत् तुला भाण्डमधस्तनं निमज्जति तदापरिमाणभारः धातुखण्डभारादधिकएवन्निश्चितोभवेत् । एवं कृत्वेदंविज्ञातं भवति यत्तोल्यमानद्रव्यं १५० कर्ष २५० कर्ष परिमितभारान्तरालवर्तिभारवदेव । यदि तोल्यमानद्रव्यस्य नियतं भारं निश्चेतुं २०० कर्षभारपरिमाणं स्थापितश्चेत् तुलासुचनीगुरुत्वाकर्षणमध्यविन्दुं स्पृशति तुलायष्टिश्च समैव तिष्ठति तदा जिज्ञास्यमानभारद्रव्यं २०० कर्षपरिमितभारवदेवनिश्चीयते ।

The three states of matters

द्रव्यस्य तिस्रोऽवस्थाः

प्रकृतेर्विविधशक्तोर्विना नाऽस्माभिः किमपि कर्तुं शक्यते, यदि कश्चन द्रव्यखण्डोऽन्येन द्रव्यखण्डेन नाकृष्टश्चेत् पृथक्कीतव्यं द्रव्यं न कदापि निर्मितं भवेत् । पूर्वमिदं प्रमाणीकृतमेव यत् सर्वथैव यदि संयोगशक्तिर्नचेदत्र जगत्यां सकलपदार्थानां चूर्णरूपेणैव स्थितिर्भवेत् । किन्तु प्रतिद्रव्यं संयोगशक्तेरधिकपरिमाणेन सद्भावे जगति जलवाय्वादिद्रवद्रव्याणां सर्वथाऽभावप्रसङ्ग एव स्यात् । लोहार्गलायाः परमाणुषु विद्यमानमहत्याः संयोगशक्तेः प्रभावात् पारस्परिकनियोगस्तेषामत्यन्तदुष्करः सम्पद्यते । किन्तु जलपारदादिद्रवद्रव्येषु संयोगशक्तिप्रावल्याभावात् तेषां परमाणवस्तोकाघातमात्रेणैव सर्वत्र प्रसृता भवन्ति तथापि द्रवद्रव्यपरमाणुषु स्तोका संयोगशक्तिस्तिष्ठत्येवेति निम्नलिखितप्रयोगेण संसाध्यते ।

प्रयोगः ५—पारदभाण्डात् किञ्चित् पारदं निष्कास्य समकाचपीठे संस्थाप्य कृतश्चेत् तस्य संपीडनं कियन्तःकणा, वर्तुलाकारेण संस्थिता भवन्ति । एतेषु कणेषु संलग्नपारदपरमाणव एव तत्र विद्यमान संयोगशक्तेः संसाधकाः संपद्यन्ते । यदि पारदस्य संलग्नकणेषु काचफलकं संस्थाप्य कृतेन निपीडनेन तेषां सञ्जातेऽपि चिपिटत्वे फलकस्यापसारणक्षणएवानयैव संयोगशक्त्यापारदवर्तुलकणैः पुनः पूर्वावस्थैव स्वीक्रियते ।

प्रयोगः ६—तैलाक्तस्थलेजलविन्दुसेचनं कृतञ्चेत् जलस्य विन्दवो मण्डलाकारेण पारदकणाइव संस्थिता दृश्यन्ते अनेन जलस्य परमाणवोऽपि परस्परं संलग्नतया स्थातुमर्हन्तीति सिद्धम् । ज्वालादिवायवीयद्रव्यस्य परमाणूनां पारदजलपरमाण्वपेक्षया विपरीतावस्थैव दरीदृश्यते । वायवीयपरमाणवः सततं स्वाभाविकविरलतयैव तिष्ठन्ति यदि न चेत् तेषां संलग्नावस्थानियामकः कश्चन संपीडकः । इत्थं घनतया द्रवरूप

वायुरूपेण च द्रव्यस्यावस्थात्रयं सम्भवति। आस्वबस्थासु परिणतद्रव्यस्य भिन्नान्येव गुणस्वभावलक्षणानि सम्पद्यन्ते।

घनद्रव्यस्य लक्षणम्

तदेव घनद्रव्यं यस्याकृति परिवर्तनं न सहसा कर्तुं शक्यते। तच्च स्वावयवसंस्थानं स्वमूर्तिं स्वरूपञ्च तथैव रक्षति यावत् प्रसह्य प्रघातादिना तद्वैपरीत्यन्न नीयते। यथा लोहखण्डःकाष्ठफलकञ्च।

द्रवद्रव्यस्य लक्षणम्

तदेव द्रवद्रव्यं यद् भाण्डे संस्थापितञ्चेत् स्वयमेव तत्र समसूत्रतया प्रस्तृतं भवति। स्वाकारं स्वघनफलञ्च (Volume) सततं संरक्षति। आढकपरिमितमर्धाढके न कदापि समाविष्टं भवति स्वाकृतिरक्षणेऽद्रढ़मपि स्वघनफलरक्षणे सुदृढमेव तिष्ठति। तद्यथा जलंदुग्धञ्च।

वायवीयद्रव्यस्य व्याख्या

तदेव वायवीयद्रव्यं यत् समतलतया न तिष्ठति। यत् किञ्चिद्वायवीयद्रव्यं रिक्तभाण्डे संस्थापितश्चेत् तेन सर्वं भाण्डं प्रपूर्यते। वायवीयद्रव्यं द्रवद्रव्यवत् परिमितं स्थलं संरोद्धुं न कदापि यतते। द्रोणपरिमितभाण्डे स्थितंवायवीयद्रव्यमर्धद्रोणे समाविष्टं कर्तुं शक्यते। यदि तदेवाधिक सङ्कुचितञ्चेदर्धद्रोणादपि लघीयसि भाण्डे समाविष्टं भवति। तत्वतो वायवीयद्रव्यस्य परिमाणघनफलं वा यथा परिवर्तितुं शक्यते न तथा द्रवद्रव्यस्य।

Properties of solids घनद्रव्यस्य धर्माः

तदेव घनद्रव्यं यत्र केवलं स्वस्मै किमपि प्रदेशमपेक्षते किन्तु स्वकीयाकारमपि रक्षितुं प्रयतते।

प्रयोगः विभिन्नाकारं समानपरिमाणञ्च पात्रद्वयं गृह्यताम्। यदि जलेनैकं प्रपूर्य तज्जलं द्वितीये पातितञ्चेत् समानपरिमाणत्वाद्द्वितीयं भाण्डमपि तेनैव पूर्णं भवति। इदमत्र काष्ठखण्डद्वयं तिष्ठति।

एतयोराकारसाम्येपि परिमाणभेदः प्रत्यक्षतयाऽवलोक्यते यत एकमपरस्मान्महत्तरम्। इदानीमाकारपरिमाणयोर्मध्ये कोऽयं भेद इति विचारणीयम्। काचकुप्याकारं घनद्रव्यभाण्डं तदतिरिक्ताकारे परिवर्तितुं न शक्यते सत्येपि द्वयो र्भाण्डयोः समानपरिमाणे। तथैव समानाकारयोः काष्ठखण्डयोरेकस्य परिमाणद्वितीयस्य परिमाणे परिवर्तितुं न शक्यते। परिपूर्णघनद्रव्यं स्वाकारं स्वपरिमाणञ्च यावच्छक्यंसततंसंरक्षति। एकं द्रव्यमन्यस्मिन् परिणतं न भवतीति वाक्यस्य नायमर्थो यत् कृतेऽपि कियति प्रयत्ने न कर्हिचित् तस्य दशाविपरिमाणो भवति किन्तु सौकर्येण महत्प्रयत्नं विना न कस्यापि दशा परिवर्तितुं शक्यते इत्येवार्थः।

अस्य तात्पर्यस्य विशदीकरणाय गृह्यताम् काचन लोहार्गला आदौ मुष्ट्याघातेन तस्य विच्छेदाय प्रयत्नः कृतश्चेत् सविफलो भवति पुनस्तस्या दीर्घीकरणाय यद्येकेन प्रान्तेनोपरि दृढतरं समवलम्ब्य द्वितीयप्रान्ते गुरुतरभारः संयोजितश्चेत् तदपि न सा दीर्घीक्रियते। यदि तस्या आकुञ्चनायोभयोः प्रान्तयोः रन्ध्रं विधाय तत्र कीलकद्वयं संयोज्य एकं तस्याः प्रान्तं दृढतरं समवरुध्य द्वितीयेन वर्तुलाकृतौ समाकुञ्चयितुं कृतेऽपि प्रयत्ने न साऽऽकुञ्चयितुं शक्यते यदि नामैवार्गलां मञ्चोपर्यु र्ध्वाग्रां संस्थाप्य तदुपरि

स्थापितेन महता भारेण तस्या निपीडनाय कृतोऽपि प्रयत्नो न कार्यकारीभवन् दृश्यते । अन्तत उभाभ्यां प्रान्ताभ्यां यदि तामेवार्गलां तिर्यङ् निधाय तन्मध्यभागे संयोजितेऽपि भारे, न सा नाम्यते ।

घनद्रव्यस्य प्रसिद्धतरोदाहरणभूता, या न कदापि मुष्ट्याघातेन भज्यते न दीर्घीक्रियते न समाकुञ्च्यते न निपीड्यते न च नाम्यते सैव लोहार्गला प्रबलतराघातेन विभक्तुं दीर्घीकर्तुं समाकुञ्चयितुं निपीडयितुं नामितुञ्च शक्यते । किन्तु यत्परिमाणेनाघात उपयुज्यते तत्परिमाणेनैनोपर्युक्तं परिणामेष्वन्यतरस्मिन् परिवर्तितुं शक्यते ।

पदार्थविज्ञानशास्त्रे समुपयुज्यमाना घाततज्जन्यफलयोः परस्परसम्बन्धं सशोधयितुं प्रयतामहे । ग्रन्थविस्तरभयान्नेह विषयोयं सविस्तरं विचारयितुं शक्यते किन्तु समुपयुज्यमानाघाततज्जन्यफलसम्बन्धद्योतनाय नमनरूपपरिणतिमर्गलाया गृहित्वा प्रयोगद्वारा दर्शयितुमिच्छामः ।

## Bending = नमनम्

प्रयोगः ९—एतन्नमनरूपकार्याय काष्ठस्तंभं तिर्यङ् निधाय तन्मध्यभागे गुरुतरभारः संबध्यताम् । भारेणानेन कियन्नतिरभूद् दण्डमध्यस्येति मानयष्ट्या मीयताम् । अनन्तरं समवलंब्यमानभारं द्विगुणीकृत्य काष्ठमध्यस्य जायमानां नूतनां नतिं विज्ञायोभयोर्नतिपरिमाणयोर्विचारः कृतश्चेत् पूर्वभारेण जायमानतत्यपेक्षयाद्वि गुणतरभारेण जायमाना नतिर्द्विगुणैव सम्भूयमाना दृश्यते इत्थं द्रव्यनमनं संयुज्यमानभारपरिमाणेनैव सम्पद्यते ।

प्रयोगः १०—नवमप्रयोगउपयुक्तदीर्घकाष्ठं गृहीत्वा चिपिट[illegible] रीकृतभागेन तत्संस्थाप्य तन्मध्यदेशे पूर्वसमानपरिमाणात्मके भारे संबध्यमानेऽपि तन् नमनं पूर्ववज्जायमानं न दृश्यते ।

## Strength of Materials घनवस्तुबलम्

कश्चन शिल्पी वा वास्तुविद्याविशारदः Ingineer गृहनिर्माणेमहतीं काष्ठस्थूणां युनक्ति । तत्रोपरिस्थाप्यमानगुरुतरभारसंवहनयोग्यशक्तिसम्पादनाय तत्स्थूणायाः संस्थापनमित्थं कर्तव्यं येन तद् गभीरभागः समधिकउर्वरितो भवेत् । न तथा कृते स्थूणाप्रवणत्वं न चिरात् सम्पद्यमानं दृष्टिपथं यायात् । अतएव शिल्पिना वास्तुविद्याविशारदेनादौ भवनादिनिर्माणायापेक्षितवस्तूनां विधारकशक्तिं विज्ञाय स्वल्पसामग्रीतः महत्तरशक्तिः सम्पादनायोपयुज्यमानवस्तुरचना कथं कर्तव्येत्यवश्यं चिन्तनीयं तैः । यस्यपदार्थस्य यथोपयोगेकृते शक्तिसम्पादनं भवेत् । तस्य तथैवोपयोगः कर्तव्य इति तात्पर्यम् ।

वास्तुविद्याविशारदस्य द्वितीयेतिकर्तव्यतेत्थं विजृम्भमाणा दृश्यते तत् क्रियमाणभवनसेत्वादिकं स्वस्मिन् कदापि संस्थाप्यमानपरममहद्भारापेक्षया षड्गुणितभारविधारणशक्तिमदेव कर्तव्यम् यतो निर्मितं भवनम् स्वस्मिन् ध्रियमाणभारसंवाहनाय शक्तिमद् भवेत् तथैव सेतुरपि स्वोपरिसञ्चाल्यमानशकटसमूहनिर्धारणपर्याप्तो वा भवेत् किन्तु भवनतलं संस्थापितभारेणेत्थं नामितं दृश्यते तथैव सेतुरपि सञ्चाल्यमानशकटसमूहभारेणेत्थं वक्रीकृतो भवति येन भारापनयनेपि तदेव भवनतलं सएव सेतुर्वा स्वावनतिं दूरीकृत्य पूर्वस्थितिसङ्गमनायापर्याप्ततामिव समापद्यते । इत्थंप्रतिदिनं जायमानाधिकाधिकनमनेन भवन

सेतुर्वा विगतशक्तितया कदाचिद् भज्येत् । अतएव वास्तुविद्याविशारदेन शिल्पिना भवनादेर्निर्माणे परमसावधानतया भवितयम् । येन तत् संस्थाप्यमानभारेण किञ्चिन्नतमपि भारापसारणे स्वपूर्वस्थितिसम्पादनाय पर्याप्तबलं भवेत् ।

Friction—संघर्षः

धनद्रव्यविचारस्य समाप्तेः पूर्वं संघर्षविषयकविचारोपि किञ्चित् कर्तव्यएव । यदि काष्ठमञ्चे कश्चनगुरुभारः संस्थापितश्चेत् तस्यसञ्चालनेप्रबलाघातोऽपेक्षितो भवति । किन्तु यदिमञ्चः श्लक्ष्णप्रस्तरेण निर्मितश्चेद् गुरुभारस्य सञ्चालनं स्वल्पप्रघातेनैवकर्तुं शक्यते स एव भारो यदि हिमसंघातशिलायां स्थापितश्चेदत्यल्पेनैव प्रघातेनापसार्यो भवति। गुरुभारसञ्चालनं येन दुष्करं भवति तत्संघर्षबलमभिधीयते । अन्यशक्तीनामभावे यथास्माकं हानिस्तथैव संघर्षशक्त्यभावेऽपि हानिरस्माकमवश्यं भवेद् यतः संघर्षशक्त्यभावे, वयं हिमसंघातशिलायामिव नित्यं सञ्चलन्त एव भवामः । प्रवणभूम्यां चलनावसरे न केनाप्यवरुध्यमानः पदार्थः तलपर्यन्तं प्रस्खलितो भवेत् ।

PruPertis of Liqieds. द्रवद्रव्यस्यगुणाः द्रवद्रव्यं स्वपरिमाणं दधाति । जलीयद्रवद्रव्यस्य परमाणवः सौकर्येणेतस्ततः सञ्चालयितुं शक्याः किन्तुप्रबलाघातेनाप्यधिकं परिमाणवज्जलं तदपेक्षया न्यूनपरिमाणवद्भाण्डे समावेशयितु न शक्यते । विंशतिपलात्मकं जलं दशपलपरिमाणवत्पात्रे न भवति ।

प्रयोगः--लघुपात्रे समधिकजलस्यसमावेशनाय कृतेन प्रयत्नेन किं परिणमत इतिपरीक्षाऽवश्यं कर्तव्या येन निश्चयात्मकं ज्ञानं सम्पद्येत। शृङ्गाकारे भाण्डे पिहितैकप्रान्ते किञ्चिज्जलं पातय । भाण्डस्य द्वितीये प्रान्ते जलाभेद्यस्तम्भनीं ( Piston ) संस्थापय, जलंलघूकर्तुं स्तम्भनीं प्रेरय । स्तंभनीप्रेरणायैपरिस्थापितभारेण जलपरिमाणं परिवर्तयितुं कृतोपि प्रयत्नो नैष्फल्यंगतो दृश्यते ।

"द्रवद्रव्यं वेगं सञ्चारयति"

प्रयोगः--द्वाभ्यां रोधनीभ्यां पिहितं कियज्जलं गृह्यताम् । यद्येकाऽधः प्रेरिता चेद्द्वितीयोर्ध्वं सञ्चलिता भवति । यदि द्वयोः रोधन्योः समानप्रमाणभारसंस्थापनं कृतश्चेद् द्वयोर्मध्यैनैकस्यापि सञ्चालनं स्यात् समानरेखायामेव चस्थितिर्भवेत्।

प्रयोगः १३--पूर्ववर्णितप्रयोगेसप्रम्याकृताविवस्तम्भनीद्वयमूर्ध्वाधरमासीत् । किं त्विदानीमेकास्तम्भन्यूर्ध्वाधररूपेण तिष्ठति तदन्या चानुप्रस्थ ( Horigontal ) वर्तते । साधारणरचनयाऽनुप्रस्थरूपेणविद्यमानायांस्तभन्यां पञ्चप्रस्थपरिमितभारः संस्थाप्यताम् । तथैवोर्ध्वाधररूपेण स्थितस्तस्मिन्यामपि पञ्चप्रस्थपरिमितभारसंस्थापनेनानुप्रस्थरूपेण विद्यमानास्तंभनीसंतुलितैवतिष्ठेत । किन्तु यद्येकस्यां स्तम्भन्यां प्रस्थषट्कपरिमितभारः संस्थापितश्चेद् द्वितीयोर्ध्वंसञ्चालितैव भवेद् । यदि द्वितीयायां तावान् भारः संस्थापितश्चेत् पूर्वोर्ध्वं परिक्षिप्ता भवेत् । इत्थं स्तम्भन्यां स्थापितभारस्याधः सञ्चालनं तथैवोपरिसञ्चालनं जलीयवेगेन कर्तुं शक्यते। एवं जलतुल्यद्रवद्रव्यात् सर्वतः प्रेरणा समुद्भवति । तत्त्वमिदं वास्कलपण्डितेन आविष्कृतं विद्योतते ।

प्रयोगः १४—अस्मिन् प्रयोगेऽस्माकं निकटे स्तम्भनीयद्वयमूर्ध्वाधररूपेण वर्तमानं विद्यते । किन्तु तलमेकस्या द्वितीयापेक्षया द्विगुणं वर्तते । सांप्रतं लघुरोधन्यां पञ्चप्रस्थपरिमितभारस्थापनकृतश्चेत्तथैव वृहत्संरोधन्यामपि पञ्चप्रस्थपरिमितभारस्थापनेन पूर्वा न सन्तुलिता भवति, किन्तु सन्तोलनाय पूर्वापेक्षया वृहत्संरोधन्यां द्विगुणितभारोऽपेक्षितो भवति । यदि संरोधनी त्रिगुणिता चेत् तत्र विद्यमानभारेणापि लघुरोधन्यां स्थापितभारापेक्षाया त्रिगुणितेन भवितव्यम् । एकस्या अधः सञ्चालनेन द्वितीयाया उपरिसञ्चालनं कर्तुं न शक्यते यदि संरोधनीपरिमाणं न्यूनाधिकं चेद् । किन्तूपरि संचालनाय प्रदत्तोवेगः संरोधनीतलानुगुणपरिमाणेनापेक्षितो भवति । यदि प्रथमसंरोधनीतलापेक्षया, द्वितीय संरोधनीतलं त्रिगुणितञ्चेत् तस्या उपरि संचालनं त्रिगुणितेन वेगेन कर्तुं शक्यते ।

### Water press जल सम्पीडनम्

जलस्य नैसर्गिकोऽयं धर्मो ब्रह्मप्रेसाख्य (?) यन्त्रनिर्माणे समुपयुक्तः । अस्याकृतिरत्र लिखिता वर्तते । अस्माकं निकटे ऊर्णापोटलिकाद्वयं वर्तते । तस्यदेशान्तरप्रेषणाय यावच्छक्यं कृते संपीडने स्वल्पपरिमाणात्मकपोटलिकायां समावेशो भवति ।

उपरिनिर्दिष्टायामाकृतौ रोधनीद्वयं वर्तते । तयोरेकाऽल्पपरिमाणा द्वितीया च वृहत्परिमाणा । वृहत्परिमाणरोधनीतलं द्वितीयापेक्षया शतगुणपरिमाणे समधिकम् । यदि २८ तरुष्क ( One ton ) भारात्मकं द्रव्यं लघुरोधन्यां स्थापितञ्चेत् तस्या अधः स्थापनाय २८०० तरुष्कभारात्मकद्रव्यस्य स्थापनं वृहद्रोधन्यां कर्तव्यं भवेत् । तेन च वृहद्रोधनी २८०० तरुष्क भारवेगेनोत्थिता भूत्वोर्णापोटलिकां महद्वेगेन संपीड्य स्वल्पपरिमाणात्मकप्रदेशे तत्समावेशनाय प्रभवेत् । एतादृशं सरीडकयंत्रस्य सर्वैरवयवैः प्रबलसंलग्नैर्भवितव्यम् । नचेच्छिर्वलावयवाज्जलं महद्वेगेन बहिरागत्य सर्वत्र प्रसृतं भवेत् ।

### Liquids Find their level

द्रवद्रव्य सदैव समतलतया तिष्ठति ।

द्रवद्रव्यस्य द्वितीयोऽयं धर्मः यदिदं सदैव समतलतयैव तिष्ठति द्रवद्रव्यस्य तलं न कदापि तिरश्चीनं तिष्ठति । संघर्षविहीनोच्चप्रदेशो जलमधस्तनप्रदेशे प्रच्यावयति । भूमितिज्ञः कथयिष्यत्यस्मान् यदि जलतलस्योपरिलम्बमापनमवलंवितञ्चेदिदं जलतले सरलं स्थास्यति । अस्यैदं तात्पर्यम् तल्लम्बमापनं न कस्यामपि दिशि कुटिलं गमिष्यति किन्तु लम्बरूपेणैव स्थास्यति ।

प्रयोगः १५—समतलस्थाल्यास्तलं पारदेन पूरयित्वा तदुपरि लम्बमापनमवलम्ब्य । इदानीं लम्बमापनं तस्य प्रतिबिम्बञ्चानुलोमतया दृष्टिपथमायाति । तेन च लम्बमापनं तत्प्रतिच्छाया च समतलतया दृश्यते । अनेन प्रयोगेणेदं निश्चितं भवति यद् पारदतले लम्बमापनं न तिर्यक् तिष्ठति । यदि स्यादेतत् तदा लम्बमापनं तत् प्रतिबिम्बञ्च न समरेखया स्थास्यति किन्तु रेखाद्वयं परस्परमाभुग्नं (Bent) दृग्गोचरं यायात् ।

प्रयोगः १६—विषमाकृतिनलिकाद्वयं यदि जलेन पूरितं चेत् तयोर्मध्ये तत् समरेखयैव तिष्ठति । तयोरेका यदि नितरां कुटिलापि जलस्थिता तु पूर्ववदेव भवेत् । दृश्यतां विषमाकृतिनलिकात्रये जलं समरेखयैव वर्तते ।

Water levee जलसमस्थली

इदानीं जलसमस्थलीविषयकं किमपि वक्तव्यम् । यदि नलिकाद्वयस्य तलभागे दृष्टिपातः कृतश्चेत् सर्वत्र जलं समरेखायां विद्यमानं दृश्यते। यदि यत्र जलमधिकमपि पातितं चेत् तदपि क्षणेन समरेखयैव पतितं भवति। तत्र समरेखायां विद्यमानानि कानि चिन्हानि वर्तन्त इत्यवश्यं ज्ञातव्यम्। यदि कश्चन कुल्यां वा वाष्पशकटीमार्गं निर्मातुमिच्छति चेदित्थं जलसमस्थलीं निर्माय तस्या उपयोगोऽवश्यं तेन कर्तव्यः। साम्प्रतं स्थलस्य मतांज्ञातु प्रायशः सुरासमस्थलींसमुपयुज्येते । इदानीं या वर्णिता सा तु जलसमस्थल्येव ।

Presswre of deck water गभीर जलस्ववेगः

गृह्यतां गभीरभाण्डं। पूर्यतांतज्जलेन। भाण्डतलस्यादूरवर्तिजलस्तराः ( Layers ) उपरिवर्तमानजलभारेणापीड्यन्ते। अतएव भाण्डतलवर्तमानेषु जलस्तरेष्वापीडनमुपरि विद्यमानजलस्तरापेक्षया क्रमशः समधिकं वर्तते । भाण्डतलस्य प्रथमहस्तार्धमुपरि वर्तमानद्वितीयहस्तार्धापेक्षया द्विगुणितवेगेनापीड्यते । इदन्तु तात्पर्यम् यज्जलस्तरकृतापीडनं तस्य गांभीर्यानुगुणं भवति।

प्रयोगः १७—इदं जलीयमापीडनमुपरिपार्श्वयोरधः सर्वत्र भवति । एतद्दर्शयितुं भाण्डं प्रायः जलेन प्रपूर्य भाण्डमुखसमीपवर्तनीं तत् पार्श्वगतां रोधनीमपसारय। तेन निपीडितं जलं वहिरागच्छति किन्तु नातिवेगेन। यदि भाण्डतलगताऽपरा रोधन्यपसार्यते चेदुपरि वर्तमानजलभारेण जायमानाधिकवेगाज्जलं महद्वेगेन वहिरागच्छति । इत्थं पार्श्वगोपि साधयितुं शक्यते । जलस्योर्ध्व वेगः सांप्रतमित्थं संसाध्यते । गृह्यतां शिखरतलरहिता विस्तीर्णकाचनलिका ।

तत्र संयोजयितुमस्माकं निकटे पृथगेवाच्छादनं समपरिमाणं वर्तते। तेन तलेन संलग्ना काचन रज्जुरपि नलिकातो बहिरायाता वर्तते यया तदीयं तलं सुदृढं धारयितुं शक्यते । इत्थं कृत्रिमतलसंयुक्तनलिकायां जलपूरितभाण्डे सम्पातितायामपि कृत्रिमतलं विधृतमेव तिष्ठति, त्यक्तेपि रज्जुधारणे । यतस्तत् कृत्रिमतलं जलस्योर्ध्ववेगेन नलिकामुखे पूर्ववत् संलग्नमेव स्थाप्यते। इदानीं नीलोरंजितं जलं यदि नलिकायां पातितं चेत् कृत्रिमतलं पूर्ववत् नलिकामुखे संयुक्तमेव तिष्ठति।

तत् तलन्तु तदैव नलिकामुखादपसारितं भवेद्यदा नलिकायां पातितं जलमाधारभाण्डे विद्यमानजलतलस्य समरेखायांतिष्ठेत् । येन कृत्रिमतलविधारको जलीयोर्ध्ववेगो नलिकायां सम्पातितनीलीरञ्जितजलवेगेन तुल्यपरिमाणोभवेत् । नौकायामारुह्य गभीरजले पर्यटने कृते सति सौकर्येणेदं ज्ञातुं शक्यते यत्परिमाणेन जलस्य गांभीर्यं तत्परिमाणेनैव वेगाधिक्यमनुभूयत इति गृह्यतां काचन काचकूपी। पूर्यतां तस्याभागत्रयं जलेन। क्रियतां प्रबलं कूपीछिद्रपिधानम् । वध्यतामियमायतरज्ज्वा। सम्पात्यतामियं गभीरजले। इदानीं यदीयं जलस्य महदन्तरालेऽवतारिता चेच्छिद्रपिधानं कूप्यांप्रविशेत् । जलस्य बहिर्वेगेन, तस्या ऊर्ध्वाकर्षणेकृते विहीने च जलवेगप्राबल्ये पिधानं शिथिलंभूत्वा कूप्यां पतित्वा कूपीजलेन पूरिता भविष्यति। उपरि समाकृष्टा च कूपी, अन्तः निहितं जलेन परिपूर्णा च समुपलभ्येत।

## वैद्यसभायां व्याख्यानम्

[ लेखको विद्यानिधि, श्रीरामप्रतापजी शास्त्री, विद्याभूषण, प्रोफेसर, मारिस कालेज, नागपुर । ]

आयुर्वेदशास्त्रनिष्णातैः स्वार्थलोलुपनव्यशिक्षितजनोपजनितनानान्तरायनिकरोपहतोपहन्यमानायुर्वेदोद्धरणदीक्षितैर्वैद्यवरैरस्मत्प्रियसुहृत्प्रवरैः श्रीमद्भिरिन्दोरकर-बहाडपाण्डेमहाभागैरनधीतायुर्वेदशास्त्रोऽप्यहं नन्वायुर्वेदमाहात्म्यवर्णनकर्मणि नियोजितोऽस्मीति सर्वथा दुरवगाहञ्च दुष्करञ्चापि तत्कार्यं मन्वानो यथाकथञ्चिद्यत्किमपि निर्दिशन् प्रवर्त्ते खल्वनुपेक्षणीयनिदेशानामेतेषां महाभागानां निदेशमनुवर्तितुम् ।

प्रेक्षाः ! निःशेषभूमण्डलललामायमानेऽस्मिन् भारते वर्षे यथा खलु सम्प्रति वेदवेदाङ्गाद्यध्ययनानुगामित्वं, शिल्पकलाविज्ञानसम्बन्धिन्यो विद्याः, पदार्थविज्ञानसरणिर्धर्माचरणप्रणयित्वं, यज्ञाद्यनुष्ठानं, योगादिसाधनसम्पत्तिरित्यादिकं सर्वमपि प्रतिदिनमधिकाधिकामवनतिञ्च स्मरणशेषतामिव चाधिगच्छति, तथैवास्माकमयमायुर्वेदोऽपि नूनमतिमात्रमेव कष्टां दशामनुभवन्नवलोक्यत इति न खलु नैव विदितमेतद्भवताम् । अयं हि सर्वेष्वप्यन्येषु शास्त्रेषु प्रशस्तश्च प्रधानतमश्च विद्यते विना योगशास्त्रम् । किन्तु मनुष्याणां सहस्रेष्वपि कदाचिदेव जायते कोऽपि योगी वा ज्ञानी वा, यः खलु निजशक्त्यैव सर्वविधाधिव्याधिनिराकरणक्षमो भवति, साधारणाः पुरुषास्तु नैव कदापि तां योगशक्तिं साक्षात्कर्तुं वोपयोक्तुं वा प्रकल्पन्ते । परमायुर्वेदस्याद्भुता शक्तिः सर्वैरपि प्रत्यक्षीकर्तुं शक्यते । इह समधीताखिलवेदवेदाङ्गानां किमधिकं करतलामलकीभूतसकलशास्त्रसिद्धान्तानामपि विदुषां रोगसमुत्पत्तौ नैवोपकुर्वन्ति किल तानि तान्यधीतान्यपि शास्त्राणि । तथा हि न हि काव्यानां मधुररसास्वादेन शरीररसनिष्पत्तिः सम्पद्यते । न च वैयाकरणानामनेकधातुसाधनेन शारीरधातुशुद्धिः सुवर्णादिधातुसिद्धिर्वा सम्भवति । नापि "त्रिविधतापात्यन्तनिवृत्तिर्मोक्षः" इत्येव केवलमातुराणां पुरस्तादारटतां ब्रह्मवादिनां रुग्णतापनिराकरणे प्रावीण्यं प्रत्यक्षीक्रियते । प्रकृतिविज्ञानविशिष्टाः साङ्ख्या अपि नूनं रोगिप्रकृतिविज्ञाने किंकर्तव्यविमूढतामेव भजन्ते । "शरीरमाद्यं खलु धर्मसाधनम्" इत्येवमुपदिशन्ति शास्त्राणि, धर्मशास्त्राणामप्यायुर्वेदस्य पुरतो निरुपयोगितामिव प्रतिपादयन्ति । "अपाम सोमममृता अभूम" इत्याद्युच्चारणमात्रेणैवातुराणां तृष्णापि न व्यपोह्यते । अतः खल्वसाध्यरोगाभिभूते सर्वथा परित्यक्तजीविताशे रोगिणि, चलितधैर्ये च बान्धवासन्दोहे, न ह्यन्येषां केषाञ्चिदपि शास्त्राणां तत्र स्तोकोऽप्युपयोगो भवति, किन्तु तदा त्वरितमेव यद्यायुर्वेद एव केनाप्युपयुज्येत तदा सहसैव विसंष्ठुलतां प्रयातापि प्राणवृत्तिः पुनस्तेन स्वां प्रकृतिमापाद्येतेति नैतत्परोक्षं केषामपि । अतः स्पष्टतयैवैतदभिधातुं शक्यते यल्लोकेऽस्मिन्नाधिव्याधिसन्दोहापाकरणक्षमं यद्यस्ति किमपि शास्त्रं तदा तच्चिकित्साशास्त्रमेवास्ति । सर्वेष्वपि च तेषु तेषु विभिन्नेषु चिकित्साशास्त्रेषु नूनमस्माकमयमायुर्वेद एव सर्वाङ्गमनोरमश्च प्रधानश्च वर्तत इत्यनायासमेव प्रतिपद्येरन् भवन्तो, यदि नाम निमीलितनयनमेतस्य स्वग्रामादारभ्यानगरं व्यापकतामन्यापेक्षयाऽस्याद्यापि बहुसंख्यकरोगि-

रक्षणक्षमतां च विचारयेयुः। अत एव च निखिलभूवलयवर्तिषु विभिन्नचिकित्सासम्प्रदायानुयायिषु सर्वेष्वपि चिकित्सकगणेषु भारतीयचिकित्सका एव सर्वोच्चतमां संख्यां स्पृशन्ति। यद्यत्र भारते कुतोऽपि कारणादकस्मादेवास्माकमियमायुर्वेदचिकित्सा विलुप्येत प्रतिबध्येत वा, तदा नूनं मुष्टिमेया अस्मत्प्रकृतिविसंवादिचिकित्साप्रणालीका अद्याप्यविदितात्रत्यप्रकृत्यनुरूपौषधनिर्माणतत्वा अमी वैदेशिकचिकित्सकाः स्वप्नेऽपि सर्वभारतीयजनताजीवितसंरक्षणे न क्षमेरन्नित्यत्र नास्ति नः स्तोकोऽपि सन्देहः।

सहृदयाः! परमं हि साधनं पुण्यप्राप्तेर्यदिदं प्राणसंरक्षणं नाम। "न हि जीवितदानाद्धि दानमन्यद्विशिष्यते" इति मुनयोऽपि मुक्तकण्ठं तथैव प्रतिपादयन्ति। तच्च प्राणदानसामर्थ्यं प्राधान्येनायुर्वेदशिक्षणानुशीलनायत्तम्। प्रेष्ठाः! विचार्यतां तावद्भवद्भिर्यदीदृशीं नितान्तमनुशोचनीयां हीनतमामवस्थामापन्नोऽपि भूयिष्ठैर्महाभागैरद्याप्यभ्यस्यमानो जीर्णशीर्णतां गतोऽप्ययमायुर्वेदः केवलं कणमात्रावशिष्टेनाप्यात्ममहिम्ना त्रिंशत्कोटिसंख्याकेषु भारतीयेष्वर्धाधिकसंख्यांशावगाहिभ्यो भारतीयजनेभ्यो यदि प्राणदानं विधातुमलं वर्तते तदा दैवयोगाद्भारतीयानामस्माकं निरन्तरोद्योगवशाच्च पुनरपि स्वकीयं प्राक्कालीनमलौकिकं महिमानं यद्यधिगच्छेत्तदा तु नूनमशेषस्यापि भूमण्डलस्योपकर्तुं प्रभवेदिति केव वात्र विप्रतिपत्तिर्महताम्।

प्रेष्ठाः! इतोऽपि खल्वन्यचिकित्साशास्त्रेभ्यो वैशिष्ट्यमायुर्वेदस्य यदेतदाश्रयणे न केवलं रोगजन्यव्याधिनिरासो लीलयैवोल्लाघतालाभश्च फलत्वेन कल्प्यते किन्तु पवित्रतमैर्धर्ममहान्यप्रयोजकैस्तैस्तैः शुद्धैरौषधैः स्वधर्मविघातो न भवतीति नूनमेतदेव सर्वोत्कृष्टं फलम्। धर्महानिमुररीकृत्याप्यारोग्यलाभेन सुखमिच्छद्भिर्धर्मापेक्षया च जीवितमेव बहु मन्यमानैर्भारतवर्षे समधिगतजन्मभिः पुरुषैस्तु न खलु कदापि विस्मरणीयमधोनिर्दिष्टं भारतीयं पद्यं—"न जातु कामान्न भयान्न लोभाद्धर्मं त्यजेज्जीवितस्यापि हेतोः" इति। यत्किञ्चिद्यादृशञ्चेहान्नपानादिकमासेव्यते तादृशं तत्तद्गुणकं चैवास्माकं मनः सम्पद्यते। यथा च गुणदोषप्रायमेतदस्मदीयं स्थूलं शरीरं तथैवास्माकं सूक्ष्मं मनोप्यशनपानवशाद्गुणदोषाक्रान्तं जायते। शरीरशुद्धिर्मनःशुद्धिश्चेति द्विविधा शुद्धिरेव शौचमित्युच्यते। शौचं च धर्मलक्षणेष्वन्यतमं वर्तते—"धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः। धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्" इति। अतो धर्ममभीप्सता पुरुषेण शरीरमनसोः शुद्धिः प्रथमं चिन्तनीया सर्वथा परिरक्षणीया च। शारीरमानसशुद्धिश्च बाह्यशौच—पवित्रपदार्थाभ्यवहारायत्तेति नैतदपि कृतबुद्धिषु भवत्सु पार्थक्येन निवेदनीयम्।। अद्यत्वे च यावन्ति खल्विमानि भारतेतरचिकित्सकानामौषधानि दृश्यन्ते तावन्ति सर्वाण्यप्यभक्ष्यापेयास्पृश्यपदार्थघटितानि सत्वप्रच्यावकान्यशुद्धिप्रयोजकानि धर्मावघातैकहेतुकान्येव सन्तीति नैतद्दुरुपपादं विदितवेदितव्यानां भवतां पुरस्तात्। तदेवं सर्वेषां यथोचितशरीरस्थितिमादधता स्वास्थ्यञ्चापादयताऽनेन किलायुर्वेदेन पुंसां धर्मोऽपि संरक्ष्यते। न केवलं धर्म एव किन्तु स्वल्पमूल्यलभ्यान्यथापि बहुगुणानि यत्र क्वापि सर्वत्र सुलभान्येवौषधानि निर्दिशताऽनेन

भारतीयानां धनरक्षाप्यनुष्ठीयत एवेत्यहो वैलक्षण्यमुपयोगित्वाच्चायुर्वेदस्य । किन्तु हा धिगस्माकीनं दुर्दैवं यत्पश्यतां जीवतामेव चास्माकमार्यमन्यानां प्रतिदिनं विलयमिवोपयाति सर्वाङ्गरमणीयतामापादनीयोऽप्यस्माकमसावायुर्वेद इति हन्त केभ्यः खलु यद्व्यतिरिक्तेभ्यो निवेदनीयमेतत्संरक्षणाय ।

अतो महाभागाः ! नोचितं युष्माकमिदानीमस्मिन्नौदासीन्यावलम्बनम् । अद्यापि खलु नैतदुद्धरणस्य व्यतीतः कालः, अद्यापि नाम नायं सर्वांशतोपि नामशेषतां गतः । अद्यापि ननु भूयांस एवायुर्वेदोद्धरणक्षमाश्चिकित्सकोत्तंसाः समलंकुर्वन्त्येव निःशेषानपि भारतभूमिप्रदेशान् । उपक्रम्यन्ते खल्विदानीमपि यत्र तत्रास्योद्धरणाय नानासभास्थापनकर्माणि । प्रतिष्ठाप्यन्ते च नूनमधुनापि रुग्णशालासहकृता भेषजालयास्तेषु तेषु प्रदेशेषु । किमधिकमद्याप्यविगणितद्रव्यव्ययमनपेक्षितशरीरपातञ्च प्रयतन्त एव केचन महापुरुषा एतस्य समुन्नतये । ये चैवंविधा महात्मानस्तेष्वेवान्यतमा अस्मत्प्रियसुहृदोऽमी श्रीमदिन्दोरकरमहाभागा आयुर्वेदानुरागिणो डाक्टर श्रीचोलकर—मुञ्जेप्रभृतिमहोदया विद्यन्ते, ये खलु पठनपाठनचिकित्सादिव्यापारैरहर्निशमस्योन्नतिविधानैकव्रताः प्रवर्तयामासुरत्र नागपुरे वैद्यसभाम् । प्रतिष्ठापयामासुश्च रुग्णालयशिक्षणालयोपबृंहितां चिकित्साशालामिति नूनमेतेषु न केवलं वयमेवापि तु सर्वेऽपि धर्मप्रणयिनो भारतीयाः सुतरां कृतज्ञभावमावहन्ति । सर्वथा समनुबिन्दन्तु साफल्यमुपक्रान्तेषु स्वकृत्येष्वमी महाभागाः । रक्षन्तु च पवित्रौषधोपचाराश्रयेण धर्मप्राणाशकौषधसेवनापचितामनन्यशरणामिमां भारतीयप्रजाम्, इत्थञ्च धर्मरक्षणदर्शमवश्यं प्रक्षेप्स्यति कृपाकटाक्षसुधादिग्धमात्मनश्चक्षुर्धर्मावनैकनिर्भरमना निखिलभुवनभर्ता भूतभावनो भगवान् विश्वम्भरोप्यस्योद्धरणायेति सुतरां विश्वसन्तो वयमन्ततः प्रार्थयामहे—सर्वैरप्यार्यमानिभिर्भारतीयैर्विद्वद्भिर्विशेषतश्चायुर्वेदोपजीविभिश्चिकित्सकैः, पवित्रौषधप्रातिकामैश्च तैस्तैः सर्वसाधारणैः पुरुषैरायुर्वेदाभ्युदयाय नूनमधुना बद्धपरिकरैर्भवितव्यमिति शम् ।

—

## आरोग्यावाप्तौ दीर्घजीविते च संस्कृतभाषाविज्ञानम्

### प्रथमं कारणम्

अयि निखिलकलापारावारपारीणाः सभापतिमहोदयाः सभास्ताराः ।

इह खलु लोके विलसन्ति बह्व्यःसंपदः । तत्र चानुकलमनुभवामश्च काश्चन । तासु संपत्सु वरीवर्त्यैकारोग्यसम्पन्निखिलसंपन्मूर्धन्यतया । सतीषु धनधान्याद्यासु विनैकारोग्यसंपदा परिखिंदन्तिपूरुषाः । सत्यां चारोग्य सम्पद्यकस्यां संपदं तराण्यंतरेणापि, परमानन्दास्पदान्येव संतिष्ठते । रुग्णस्य किल कस्यचिद्राज्ञोपि दुःखायते निलिंपभोगानुकूलराजभवननिवासोप्यमरीकरंवितहंसतूलिकाशयनमपि । सुखायते चाकिंचनस्यापि नीरोगस्य ग्रावाकंटकशयनमपि । पश्यत चारोग्य संपन्मूर्धन्यतायामिदमत्र निदर्शनम् । परिपृच्छामः खल्वन्योन्यं सत्सु संकलितेषु सुहृत्सु प्रियेषु बन्धुषु क्षेममारोग्यसंपदनुयोगम् । लेखिन्यपि सरति प्रथमं कुशलदलेषु तादृगारोग्यलेखन एव ।

इयं चारोग्यसंपत्स्वाभाविकी पुरुषस्य नयनादीन्द्रियशक्तिरिव नयनपाटवाभावेन म्रियते सुलोचनम् तथैव कायस्थापाटवेन पीयत औषधमपि। नयनपाटवाभावमूलकसुलोचनधारणं यथा न भवति सहजंभूषणं तथैवारोग्याभावमूलकौषधसेवनमपि।

आरोग्यसम्पदावाप्तौ चायुराम्नायनियमावलीं परिपालनमवतिष्ठते प्रथमो हेतुः। आरोग्यनियमावल्यश्च श्रुतिस्मृतिविहितधर्माविरोधिन्यः। यथा श्रुतिविहितविध्युल्लंघनं भवति प्रत्यवायजालाय तथैवारोग्यनियमावल्युल्लंघनमपि भवति रोगजालाय। अत एवोक्तम्

दिनचर्यां निशाचर्यामृतुचर्यां यथोदिताम्।
पुरुषः संव्यवहरन्सदा तिष्ठति नान्यथा॥

ताश्च प्रकाशिता आरोग्यनियमावल्यो हिमवत्पर्वतपादपारण्यतपः साम्राज्यवैभवैः पुण्यवृत्तैः काश्यपात्रेयभरद्वाजादिमुनिपुंगवैः। सत्यां चारोग्यसम्पदि जागर्ति दीर्घजीवितमपि पुरुषस्य। सुकरं चाखिलपुरुषार्थसाधनमपि। अतएवास्यधायि शरीररक्षणकार्यमेव सर्वकार्यान्तरंगत्वेन।

धर्मार्थकाममोक्षाणां शरीरं साधनं यतः।
सर्वकार्येष्वंतरङ्गं शरीरस्य हि रक्षणम्॥

तदानीं नीरोगत्वं यदाचावयवाः भगवताविहितंस्वस्वंकार्यं यथावदनुतिष्ठन्ति। तदाचामयत्वं यदा स्वस्वविहितकार्यचालनासामर्थ्यमचयवानाम्।

प्रायेण दरीदृश्यंते सहजशक्तिशैथिल्ये सप्त कारणानि। अथापि रोगोद्गमे जागर्ति प्रधानं कारणद्वयम्। तच्च सन्निकृष्टविप्रकृष्टाभिधम्। विप्रकृष्टकारणं चायुराम्नायविहितारोग्यनियमावल्युल्लङ्घनात्मकम्। तन्मूलकदोषवैषम्यं भवति, द्वितीयं सन्निकृष्टकारणम्। न जागृमो रोगोद्गम एव तन्निवारणौदास्येनाविवेकवर्तनेन च। प्रायेण संतिष्ठते रोगस्य क्षोदीयानेव हेतुः। यदा च भवति बलीयान् रोगः, तदानीमेव प्रयतामहे तत्प्रशमनाय। अङ्कुरप्रशमार्हेणापि रोगेण शतशो मृत्युवदनोपहारा बोभूयंते केवलनेति हन्त शोकास्पदम्। धिगविवेकवर्तनमौदास्यं च।

यद्यप्यात्मजेषु संक्रामति मातापितृभ्यामारोग्यहेतुर्वा रोगहेतुश्च वा। न हि सम्भवति कुबीजस्य तरोः सुफलजनकत्वम्। अथापि दोहदविशेषेणेव यथा नियमपोषणविशेषेण शक्नुयादेव सुफलमिवारोग्यमपि समधिगन्तुम्।

यद्यप्यागंतूणां कालिकानां च रोगाणां नास्ति पौरुषेयो यत्नः। तथापि करुणावरुणानिधिर्भगवान्समाचीक्लृपद्यथाशक्ति सामर्थ्यं पुरुषस्य रोगनिष्कासने चारोग्यसम्पादने च। अचकमत च पुरुषाणामायुष्मात्तां दीर्घकालिकीं समकल्पयच्चारोग्यमार्गावाप्तिविधिं च। यदि हन्त परमपुरुषस्य भगवतोपि नियममुल्लङ्घयामस्तत्र हन्त भवति खल्वास्माकीनोपराधः। लोकैकगुरुवचनोल्लङ्घनं कस्यवा भवेच्छ्रेयसे। नहि सर्वे मृत्यवो मारयन्ति पुरुषं, विना जीवितकालात्। परंपरया समागच्छन्त्यापदो जीवितकाले शतशः ताश्चापमृत्यवः, यस्तु कालः स तु ग्रसति पुरुषम्। सत्येवायुषि जीवतीत्युक्तिर्नातीवरमणीयतरा। सत्यप्यायुष्यचिकित्सिते व्याधौ जीवितकालावधिमन्तरेणापि दिष्टान्तमाप्नोत्येव पुरुषः। पश्यत दीपोज्वलने वर्तिस्तैलं च कारणम्। दीपोज्वलनकारणीभूते सति तैलादौ वातनिचयाक्रांतोदीपो यथा सहसा निर्याति तथा रोगनिचयाक्रान्तमचिकित्सितमपि शरीरं सत्यप्या-

युषि शीर्यत एवेतिनातीव चित्रतरम्। कर्तव्यं चावश्यमेवाजीवितसमाप्तेर्व्याधौ चिकित्सनम्। समाचर्यं च विहितं पथ्यम्। एवं च रोगमूलकारणानि विज्ञाय युक्तमौषधं पथ्यं च यद्युलभते रोगिणस्तादानीमुद्गमनहेतुभूतजलशोषणेन यथाशीर्यतेऽङ्कुरास्तथा निखिला अपि रोगाः।

निदानौषधपथ्यानि त्रीणि यत्नेन चिंतयेत्।
तेनैव रोगाः शीर्यन्ते शुष्के नीर इवाङ्कुराः॥

औषधं चैतद्युक्तं भवति तत्तद्देशोद्भवानां तत्तद्देशोद्भमं यथा हार्यं वस्तु। यत्र यत्र च प्ररोहति गोधूमधान्यं व्रीहिर्धान्यं च वा तत्तदेव कल्पते तत्त द्देशनिवासिनामनुरूपमाहार्यं वस्तु। अन्यत्तु नार्हमेवेति सुस्पष्टतरम्। इदमेव भगवत्सत्यसंकल्पसिद्धम्। अतएवोक्तम्।

यस्मिन्देशे हि यो जातस्तस्य तज्जौषधं हितम्

तादृगौषधनियोक्ता भवति भिषक्। सच वर्तेत तीर्थात्तशास्त्रार्थः कार्यदक्षस्सदाचारपरायणः करुणालुः। यस्त्वनधीतविद्यस्तूष्णीं। वक्त्यनुभवेन करोमीति तत्तुच्छतरम्। महर्षयश्चरचर्यां बभूवुः स्वानुभवेन केवलं शास्त्राणीति तेनैव जानति। अनुभवश्चायं भवति शास्त्रज्ञानजन्यदृढसंस्कारविशेषः। स्वाभाविकज्ञानं तु पशुपक्षिणामिव पुरुषाणामपि। तादृशं ज्ञानं तु नविज्ञानमूलकम्। विज्ञानं तु शास्त्रजन्यज्ञानमेव। एतादृक्ज्ञानमेव प्रभवति कार्यसाधनाय। तादृक् नोद्गमस्तूद्भवति गीर्वाणभाषापरिपाटीतः। या च जेजीयते विद्या कल्पलतासमज्जननी। तादृङ्मातृभाषायामेव राराज्यन्ते निखिला अपि शास्त्रग्रन्थाः आयुर्वेदग्रन्थाश्च। अतश्चैकैकेनापि विज्ञानमभिजिगमिषुणा प्रथमं संपादनीयं भवति गीर्वाणभाषापांडित्यम्। गीर्वाणभाषाविज्ञाने च प्रबोभुवन्ति काव्यानिसालङ्काराणि सलक्षणानि सनिघंटूनि सपाणिनीयनयानि। एतादृक्गीर्वाणभाषापाण्डित्यमेव कल्पते दुर्गमशास्त्रजालकपाटोद्घाटने। देशभाषापरिवर्तितानि तु शास्त्राणि तु नैव बोधयन्ति शास्त्रसंज्ञापरिभाषातत्वम्। हन्तात्र कालेये काले वरीवर्ति शास्त्राणामपि का दशा। आथप्यवतरन्ति धर्मोद्धारबद्धपरिकराः तत्र भवादृशो महाभागाः। निवृर्ततेचानुदिनमेतादृशैर्महाभागैः तत्तच्छास्त्रपरिवर्धनकार्याणि। भविता च भगवत्सत्यसङ्कल्पेन सफल एवोद्यमः। अतश्च सर्वैरपि प्रथमं गीर्वाणभाषाध्ययनं ततश्चायुर्वेदादिशास्त्राध्ययनं कार्यमेव। एतज्जन्यविज्ञानंतु निखिलसपन्मूर्धन्या रोग्यावाप्तौ दीर्घजीविते च साधनमिति सर्वमवदातम्।

के. शेषशास्त्री

---

## पद्मावती-परिणयचम्पूः

पूर्वतोऽनुवृत्ता

[ श्रीमता महामहोपाध्याय रघुपतिशास्त्रिणा निर्मिता ]

आदावुच्चतरे गिरीन्द्रशिखरेऽ
थाधित्यकाभूमिषु
प्रासादेषु सुधासितेषु तदनु
क्षेत्रेषु हर्म्येष्वपि।
क्रामन्कान्तिकलाकलापललितः
पीयूषरश्मेः करः
सर्वा श्वेतगुणोच्चचारुचरितैर्व्याप्तां
व्यतानीद्भुवम्॥८०॥

नभोङ्गणे क्रीडितुमागताय
क्षपाकराय प्रयताः सरस्यः ।
कुमुद्वतीनां कुमुदैः करैः किं
श्लिष्यन्त उद्यन्मधुलिड्मिरांक्षुः ॥८१॥

अथमुकुलीभावमङ्गीकृतवति कमलकुले विकचतामञ्चति कुमुदनिकरे व्यापारतउपरतिं कलयति कर्मकरे नरे सशोकेषु कोकेषु चञ्चूपुटानि चुलकयत्सु चकोरेषु घोरे कर्मण्युद्यवत्सु चोरेषु सान्ध्यविधिव्यग्रमनस्सु मुनिषु होममभिवृत्तेषु सोमपेषु समन्तत ओकतोकसमुदायेष्वोकसां सांमुख्यमाश्रयत्सु जातेऽभिसारसमये समयेक्षितस्तव प्रियतम उपकण्ठे पुर इति निशम्य सौरतसामग्रीसम्पादनपरासु वासकसज्जासु सवित्राऽस्तसमये साम्राज्यंप्रापिते कृष्णवर्त्मनि तिमिरनिकरेण रजनीपतिपराभावयितुमिव होमधूमसमूहेन तस्य साहाय्यं सम्पादयति चलचञ्चले प्रज्वालय कर्पूरवर्तिकाः कलय कुन्दकले मलयतरुकाष्ठकल्पितफूलकेषु गन्धतैलप्रदीपकलिकाः कमले समुद्योतय सभामण्डपरत्नदीपप्रभाभिश्चतुरे रचय रथ्यासु कनककांडप्रतिष्ठितकाचभांडेषु ज्योतिषां सम्बधं चन्द्रकले पूरय कुल्यानि तैलकुल्याभिः सानुमतिस्नेहेन संवर्धय सदःकेकावलिकथय कलावत्या उपाहरसायन्तनं बलिं गृहदेवताभ्यः कुसुमावचयाद्विरम रमणीये निवेदयत देव्यै परिणतोंशुमाली नक्तंभोजिनी वत्सा पद्मावती स्वयमेव सत्वरमाशनीया न चिरायितुमिदानीं साम्प्रतमित्यादिपरिजनजनालापैर्भरितेन्तःपुरे महीमण्डलाखण्डलः पतिव्रतां तामवादीद्देवि दिव्यकथागृहीतमानसैरस्माभिर्न सम्भावितोऽसौकालातिपात इतिसान्ध्यविध्यनुष्ठानाय बहिर्जिगमिषामि भवत्यपि बालायाः पद्मावत्या अनन्तरा भवेत्यभिधाय संहतैः सुहृद्भिरुदतिष्ठत् । साऽपि राजपत्नी सह वकुलमालिकया दुहितरमभ्यवहार्य स्वयं च भुक्त्वा सम ताभ्यां श्रीनिवासस्य भगवतस्तास्ताः कथास्तया वर्ण्यमानाः शृण्वाना सुखशयने सुष्वाप । महाराजोऽपि सचिवैः साकं सायन्तनानि कर्माणि परिसमाप्यस्तास्तोर्णरत्नपर्यङ्के समुपविष्टस्त्यमेवार्थं चिन्तयन् निद्रामभिप्रपेदे ।

## षष्ठः स्तवकः

अथ परिणतप्रायायां रजन्यां वारुणीसेवितरक्तकरः सुधांशुरुन्मत्त इवाधःपिपतिषुरित्यालोच्य क्षीणस्तारागणोऽदर्शनपथं नुगन्तुमचीकमत । द्यौरपि प्राची प्रकटितप्रभावमरुणिमप्रभापूरिताशेषाशाभावमनूरुं विनतानन्दनं तिमिरं नाशयितुं स्वयं बभार । मुनयो हि यमवसरमवाप्य परे ब्रह्मणि समाधिमादधते । तस्मिन्ननेहसि हसितगीर्वाणगुरुशेमुषीका मागधा आर्याद्वयमपाठिषुः ।

कोकद्वयशोकक्षय-
करणप्रवणप्रकाशमुपयाति ।
राजन्महः किमपि त-
द्यदहः पालकतया श्रुतौ भाति ॥१॥
सरसीषु रसिकधुर्याः
पुष्पलिहः कमलकैरवान्तरगाः ।
गातुं यशो दिनमणेर्यत्ता-
स्तिष्ठन्ति पश्य नरवीर ॥ २ ॥
श्रुत्वैतज्जयशुकमङ्गलरवै-
र्वैतालिकानां पुन
र्हेषा डम्बरमश्ववृन्दकलितं
हस्त्युज्झितं बृंहितम् ।

पवित्रिव्रातततं समन्तत उतं
तद्भाशितं तद्रुतं
प्राप्तो जागृतिमाततान ललितां
योग्यां क्रियां स्वां जनः ॥३॥

प्रभूतप्रकाशे प्रत्यूषे चटकालीकलकलभरिते दिगन्तरे सुवदनसज्जीकुरुप्रातस्तनिकप्रेक्षणीयद्रव्याणि सावधानास्तिष्ठन्तु सौखशायनिका द्विजातयो यत्ता भवन्तु सूतमागधबन्दिनो विनीतपर्य्यङ्काधः स्थापय सदुपानहौ वलसिन्धो महाराजहस्तप्रहाय भव बद्धपरिकरः कमलाक्षमार्गादेशव्यापारपरस्तिष्ठ मलयकेतो कलय पीठरचनामित्यादिपरिजनानादिशति प्रधानपरिचारिके विकसत्कमलकुड्मललीलायमानविलोचनः श्रीराजाधिराजोऽन्तर्धाय निद्रामुद्रामद्राक्षीद् द्रागेव प्रणिधानबलसमासादितसाक्षात्कारां गुर्वादिचिदानन्दसन्ततिम् । क्षणमवगाह्य च तच्चरणसरोसरोजमकरन्दसन्दोहकिर्मीरितमुदापगाया सालोकालोकमालोकवानपि लोकालोकनाय बहिर्दत्तदृष्टिराविर्भावयांबभूवात्मनो वीतनिद्रताम् । तदवधार्य्याविलम्बितं प्रविश्य प्रधानपरिचारकः प्रणतिप्रह्वकन्धराधरां धरां श्लिष्यन्निव जयतु देव इतिभूपालमुपढौकयांचकार । राजाऽपि तमानन्दयन् कृपावलोकनेन प्रवेशय मङ्गलपाणिं सुवदनमित्याज्ञापयतिस्म । सोऽपि तथेति निष्क्रम्य सुवदनेन सह पुनः प्रविशति । सुवदनैष शिवशिवद्रव्यवीक्षणोत्सुकस्त्वदागमनं प्रतीक्षमाणः सान्ध्यकमलस्पर्द्धयेवार्द्धोन्मीलिते चक्षुषी आविष्कुर्वन्नलङ्करोति शयनीयं तदुपतिष्ठेति व्याहरन्नेष सुवदन इतिनिवेदयामास । सुवदनोऽपि विजयतां महाराज इतिवदन् प्रातःप्रेक्षणीयभद्रद्रव्यजातं दर्शयेति प्रयुक्तो दर्शयांचकार चित्रगताः सुरप्रतिकृतीः । विलोकयतां वसुमतीसामन्तचक्रचूडामणिः ।

करधृतमोदकममरविनोदक-
मसुरविमोहकमिन्द्रनुतं
पदनतरक्षणगीतसुरक्षण-
मखिलसुलक्षणमीशसुतम् ।
मुनिजनमानसशुचिरसमानस-
वासि सदङ्घ्रिकहंसयुगं
त्रिभुवनपालकपालयमीक्षय
देवगणाधिपतिं प्रथमम् ॥ ४ ॥

महाराजः । (विलोक्य) ।

गजवदनं जगदवनं षट्पदकुल-
केलिकौतुकिकपोलम् ।
भक्तवराभयवितरणलीलं
वन्दे गणेशानम् ॥ ५ ॥

गजास्यमजगास्यन्दिस्तन्यपानपरायणम् ।
वन्दे नवं देववन्द्यं प्रत्यूहव्यूहदारणम् ॥ ६ ॥

गजपं करेण चतुरः सरि-
त्पतीनेकदैव कलयन्तम् ।
त्रिदशस्तवनविकासित
करुणं वन्दे तथैव विसृजन्तम् ॥ ७ ॥

सुवदनोपानयापरं चित्रपटम् सुवदनस्तथाकृत्वा ।
इतोदत्तदृष्टिर्भवतु राजशिरोमणिः ॥
दौवारिकदलवेलाकेलास्वीकृतनिजावतारायाः ।
भवचञ्चरीकवृत्तिः पादपयोजेऽत्र पद्मायाः ॥८॥

राजा । पद्मेऽधिष्ठितपद्मे
प्रणमामि तवाङ्घ्रिकमलयुगम् ।
उद्दंडभास्करभाया
अष्टादशपञ्चशाखाया ॥ ६ ॥

नमस्ते देवि दैत्यान्तकारिणि त्रिदशार्च्चिते ।
नमज्जनमनःकामपूरणप्रवणेऽम्बिके ॥१०॥

सुवदनानय चित्रान्तरम् ।

सुवदनः । विलोकयतु राजशेखरः ।

पञ्चमुखोऽपिमहेशः प्रपञ्चविमुखोऽस्ति।गौरतनुः ।
यत्प्रेमकोपपात्रं बभूव देवेषु गौरतनुः । ॥११॥

नृपः । विलोक्य सप्रणयम् ।

वामाङ्कस्थितवामं कामं सपूरितात्मजनकामम् ।
सेवे सहृतकामं प्रमुदारामं तपः क्षामम् ॥१२॥

करुणाकर शङ्कर तवजनता पालन पटुप्रभोशीलम् ।
जयति समुद्रसमुद्गतगरलगलाधः क्रियाकर्तुः ॥१३॥

सुवदनपरमुपदर्शयचित्रम् । सुवदनस्तथाकृत्वा । पश्यत्वार्य । कं समाहत्य कंसमैधयद्व्रजवासिनाम् ।
कृष्णोऽवदातचरितस्तं पश्य पटवर्तिनम् ॥१४॥

राजेन्द्रः । सानन्दम् ।

गावोयं मृगयन्ति गोगु रुतरंभारं जिहीर्षुर्व्रजे
क्रीडन् गाअनुधावतिप्रतिदिनं गाभासयन्गोरुचा ।
भूयाद् गोनिधिजातजानिरुदये पीयूषगोः पञ्चगो-
र्भावगोपवधूषुसाधु जनयन्गोविन्ददेवोमुदे ॥ १५ ॥

हरन्दुकूलंयमुनोपकूलं
स्थितवाकदम्बे महिलाकदम्बे ।
चकारलीलांश्लथयन्नवलीलां
वन्दे तमालस्थितवन्यमालम् ॥१६॥

सुवदनापरेण चित्रफलकेनालोकसुखमनुभवितुमिच्छामि । सुवदनस्तथेति दर्शय प्रेक्षतां महीमहेन्द्रः ।

उद्यँस्तमोपहतये द्विजजननतये सुकार्यसन्ततये ।
गतये यमिनां तस्मै वासरपतये विधेहि नमः ॥१७॥

१ श्रुतयः । २ भूमेः । ३ धेनूः । ४ दिशः । नेत्र । ६ जल । ७ किरण । ८ बाण ।

राजा (सहर्षम्) ।

यद्गात्रस्खलनात्त्रयी समभवद्योज्योतिषामाश्रयो
यस्य स्वोदयनेननिजरागणः स्वास्थ्यं समालम्बते ।
यस्यापत्यमपि त्रिलोकजनता तापापनोदक्षमं
दस्नोशैवलिनीव रावयमुनातस्मैसवित्रेनमः ॥१८॥

त्रयीमयाय रवये पवये तमसां पुनः सवित्रे
सर्वकामानामचित्रेजगतो नमः ॥ १९ ॥

सुवदन किमन्यत् । सुवदनः । भूपालशिरोमणे एष श्रोत्रिय एष साग्निरेषा सवत्साधेनुरेप आदर्श एतद्दधिदूर्वाकुमुदादिकमङ्गलद्रव्यदृग्गोचरंकुर्वन्नुतिष्ठतुमहाराजः । राजाऽपि तथेति क्रमप्राप्तमवलोकयन्नमस्कुर्वन्न् सावधानमना मनागुञ्झिततल्पः पादस्पर्शाय पृथिवीं प्रार्थयामास ।

अष्टमूर्तेरंशभूते जगद्धारणकारिणि ।
सर्वसहाऽसिमेजन्तुक्षन्तुमर्हसि ते नमः ॥२०॥

ततउत्थाय पुरोऽवलोकयतिस्म सौखशायनिकान् जनान् । तेऽपि विजयतां विश्वंभराखण्डल इत्युच्चैरुच्चरन्तउपश्लोकयांचक्रुः ।

राजन् जीयाः समानांशतमतुलयशाः
शाधि पाथोधिनेमिं
भूमिं धर्मेण भूयाः क्षितिसुरवरिव-
रूपापरानन्दमूर्तिः ।
कुर्यास्त्राणं नराणांशरणमनुजुषां
भावयात्मानमारा
दानन्दं रात्रिशेषे गतमिव नितरां
मोदतां मोदराशिः ॥ २१ ॥

यस्याश्रयेणजनतास्वपितिसुखंसाध्वसापेता ।
निःश्रेयसकल्पद्रुः किंपृच्छ्येतैपसुखशयने ॥ २२ ॥

राजाऽपि तान् स बहुमानमभिनन्दन्नमस्यंश्चभवत्कृपापाथोधिपरिसरनिवासमनुभवतो न

प्रचण्डचण्डातपपराभवाशङ्केति वदन् पुरोवर्ति-नोऽवसरपाठकान् स्वावलोकनेनानन्दयामास । तेऽपि महीमण्डलमिलन्मूर्धानः श्लिष्टकरपुटाः प्रमोदनिर्भरेणेति व्याजह्रुः ।

उद्यन्नेष दिवाकरः शशभृतामालिन्यमापादयन्
ध्वान्ताध्वान्तमुपादिशन्कुमुदिनीसङ्कोचमुत्कोचयन् ।
चक्रं सज्जनयज्जनतिप्रमुदितं लोकं शुभेवर्तयन्
कान्तारं कलयन्द्विरेफकलिकाकेलीकथाकोविदम् ॥ २३ ॥

उदुगच्छत्ययमेकतः कमलिनी-
नाथस्त्विषामाश्रयो
नीचैर्गच्छति चापरत्र कुमुद-
प्राणप्रियश्चन्द्रमाः ।
तेजोराशिरसौ दिशो धवलयन्
कीर्त्या समस्ता अपि
क्ष्मापालः प्रकटीकरोति शबलं
सौरं च चान्द्रं महः ॥ २४ ॥

मत्तः कोटिगुणाभिराभिरुदितो
भाभिर्विवस्वान् दिवि
श्रेयः साम्प्रतमन्यतोऽपसरणं
जानन्निवेदं शशी ।
अस्तं यातुमियेष जाड्यमहिमा
क्रान्तस्य तच्छ्लाघ्यतां
स्तुत्यास्तेन नृपाः पुरैव किल ये
पृथ्वीन्द्रमस्यार्चयन् ॥ २५ ॥

अथावतीर्य तल्पाज्जलपाकवचोदत्तश्रोत्रः स्तोत्रकृतः कृतमनेनेति विरमयन् परिजनोपनीते उपानहौ पदयोर्बिभ्रद्यथावद्विहितोत्सर्गविधिरनुष्ठितदन्त-धावनादिक्रियः शुचिप्रियः पुरो द्वारपालमवलोकयांबभूव । सोऽपि सहसोपसृत्य राजन् विजयस्व ।

अङ्गुलीपर्वणांक्षोभं अनयन् गणयन् भृशम् ।
कक्षानिक्षिप्तपञ्चाङ्गो ज्योतिर्विद् द्वारि वर्तते ॥ २६ ॥

इति समवनतशिरा व्यजिज्ञपत् । द्रुतं प्रवेशयेति निदेशमनुतं प्रावेशयत् । दैवज्ञोऽपि महीभृता सम्भृतार्हणः समवादीत् ।

रविरिन्दुर्भूमिसुतः सौम्यगुरुर्भार्गवोमन्दः ।
स्वर्भानुः शिखिनोऽमीभवन्तु भूपाल भद्राय ॥ २७ ॥

राजाऽपि किञ्चिदुत्स्मयस्ततस्तिथ्यादिकमश्रौषीत् ।

सावधानमना यावद्ग्रहनक्षत्रभावनाम् ।
करोति वसुधाधीशस्तावद्द्वाःस्थ उपस्थितः ॥ २८ ॥

सोऽपि देव ।

विचिकित्सकोऽपि वस्तुषु
चिकित्सकेतिप्रथां परां प्रापत् ।
औषधपेटींबिभ्रद्द्वारं
प्राप्तोऽस्ति सद्द्विजनिः ॥ २९ ॥

तमानयेत्याज्ञप्तःसमानयामास ।

भिषगपि राज्ञोचिताचारमाचरितः ।
शिवाय भवतो भूयात्साशिवाभाविता च या ।
जनस्यजठरावासदुःखं दवयति द्रुतम् ॥ ३० ॥

इति महीमहेन्द्रमेधयामास । राजेन्द्रोऽपि तस्माद्देशऋतुदिनरात्रिपरिचर्याः परिचित्य हिताहितौषधान्नविहारानवधारयन्नायुर्वेदविच्छिरोमणेऽलंकुरुतां स्वाधिकारं भवानहमपि स्नानागारमवतरामीति भिषजं विसर्ज्जयन् स्नानीयपीठमध्यतिष्ठत् । तदा च तत्र ।

काश्मीरालेपमारात्कलय मृगमदं संनिधेहि द्रुतं तं
स्नेहं जातीभवं वा बकुलजनिमथोत्त्वं पकोत्थं कथंचित् ।
कर्पूरक्षोदराजीरुपनय सरसोशीरपानीयपात्रं
सौवर्णं चन्दनान्तर्दलितजलमलं भापयाशु प्रकाशम् ॥ ३१ ॥

भ्रमद्भ्रमरसङ्कुलङ्कुलशमत्रतन्मालती-
सुमप्रभवतैलभृद्द्रुततरं समानीयताम्।
अनङ्गरसवर्द्धनं युवजनस्य चान्तर्घनं
दिशीह मलयाचलप्रभवमस्तु वस्तु क्व तत् ॥३२॥
यत्तस्तिष्ठतु कोष्णवारिघटभृद्-
गङ्गाम्बुधाराधराः।
सज्जाः सन्तु कलिन्दजाजलभृतो
रेवादिनद्यम्भसाम्।
वोढारः क्षितिपाभिषेचनविधौ
विप्राः सतीर्थाम्भसो।
मन्त्रोक्तिप्रवणा भवन्तु निपुणाः
स्नानाय राजाऽभ्यगात् ॥ ३३ ॥

एवंविधा वाचः शुश्रुविरे। तस्मिन्व्यतिकरेऽवसरपाठकः पपाठ।

यल्लावण्यविचित्रवृत्यवगमध्यातादभुतान्तर्गतै-
र्नासत्याजितिलोकबन्धुजनुषीश्लिष्टंसुरैःख्यापितौ।
रम्भा या नलकूबरंप्रति तथा सम्भावनानाभव-
द्भ्भारम्भपरोमनोजनिरभूदुग्रं हृदा भावयन् ॥३४॥
यन्नासा मलिने शशाङ्ककमले स्वर्णं सुवर्णं न त-
त्काश्मीरंगतरुक्करोतु कुतुकङ्कस्य त्रपाशालिनः।
शम्पाचम्पककेतकच्छविचयास्तं दीप्तिपाथोनिधिं
मूढाःक्षुद्रपदार्थकैः क्रमयितुं नोद्वर्तनं तन्वते ॥ ३५ ॥

राजाऽपि अलमिहमलापकर्षणायासेन दूरी कुरुतैतद्वस्तुजातमिति तं,परिजनं परित्यजन्विधिस्नानाय सर्वदुरितनिवारीणिवारीणि निरावृणुतेति कर्मकरानादिदेश। अथश्रौते स्मार्तमन्त्रान् पठन् पाठयंश्च प्रयताभिस्ताभिरभिषवेणान्तरमानन्दयन्नन्तरकरणीयाय झटिति पीठादुदतिष्ठत्। तदानीं च क्रियापटो आदर्शमादर्शय,मृदुलपाणे शाणेनपटेन परिशोषय प्रत्यङ्गसङ्गिनीः सलिलकणा निरस्य ललितक्रियाक्लिन्ने न वाससा विकचतां प्रापय कचान् धनञ्जय सुधूपय, गुरुभिरगरुकाश्मीरकस्तूरिकाधूपैर्निरातङ्कमार्ज्जय शीलनिवाससमानय सोमप्रभाप्रभावविध्वंसनपटीयः पटयुगलं, सामवन्संयोजय चिरविरहखिन्ने रत्नपादुके पदपङ्कजाभ्यामित्यादिः परिजनवचोव्यक्तिः सुरवर्त्म समपूरयत्। अपि च।

कर्पूरक्षोदरक्षोत्प्लवनकृतवल-
क्षोर्वराप्रायदेशा
केषामेषानशेषातिगचरितगुणा
मानवी संहतिः स्यात्।
सिञ्चन्ती देवसद्म प्रतिगतसरणि
चन्दनाक्रान्तरुग्भिः
कस्तूरीकुङ्कुमैला विलसितरतिभी
रत्नपात्रस्थवार्भिः ॥ ३६ ॥

किञ्च।

विप्रादैवतवास्तु शुक्ति पटवो
द्वाराण्यलङ्कुर्वता-
मुद्धाट्यासनपेटिकाः
क्षितितले सम्भारमाबिभ्रतु।
आगच्छन्तु पुरोहितप्रभृतयो
नित्या नुवृत्तक्रमाः
पूजागारमगाधबोधविभवो-
ऽभ्येति क्ष्माधीश्वरः ॥३७॥

तदनन्तरममलेन वासोयुगलेन कामकान्तितस्करमहस्करप्रभोपस्करमवयवं प्रावृण्वन् गलितगजेन्द्रमदोविरमदोष्ठपरमोरमोत्तममनूच्चारणेन पुनर्मृष्टपादारविन्दयुगलो माङ्गलिकेन मुहूर्तेन सपर्य्यासनमध्यतिष्ठत्। अथावसरपाठकः पठि-

अध्यारूढोंशुमाली कनकगिरिगतां
पद्धतिं कांचनाथो ।
नाथोराज्ञेरयासीदनयनविषयं
संमदश्चक्रयूनोः ।
सम्भिन्नो पद्मकोशो विकसति
मकरन्दैकरं न्देऽधुकामाः
भृङ्गाली हंसराजि प्रकिरति रतिकृत्
क्वाङ्कृतिक्रान्तवाचः ३८ ॥

दिनकृतकृतिभिर्मुदं वितन्व-
न्नुपचितसक्ति एष विप्रलोकः ।
कलरवकलितात्मवप्रलोकः
प्रमुदमसौ श्रयतेऽत्र राजहंसः ॥३९॥

अथैयता कालेन पृथुललाटतटविस्पष्ट-रेखात्रयत्रिपुण्ड्रविधानेनोद्धूलितभस्माप्रोक्तप्रतीकविधृतरुद्राक्षमालः क्षमालभ्यमानोऽतिविराजितः कविवचनविषयतामवाप भूमीपतिः । तथा हि ।

शीतांशोः शकलत्रयं किमथवा
त्र्यम्बकमहानादरः
किंवा सत्त्वरजस्तमांसि विमला
ज्येष्ठाधिकाराद्गुणाः ।
किं सन्ध्यात्रयदेवता अमल
हृत्स्थत्यागशुभ्रैकभाः
किं लोकत्रयसत्वराः क्षितिपते-
स्तिस्रोऽथवा कीर्तयः ॥ ४० ॥

भूपतिस्तु निभृतकरणः करणीयमावश्यकं परिसमाप्यार्चाः प्रत्युपतस्थे । यथायथमुपचारैरर्हणैरलपुष्पोपहारैः समभ्यर्च्य सर्वा देवताः पश्चाद्धरिहरावस्तावीत् ।

किं ते नाथ कृपालुतां
कलयितुं कश्चित्कृती कल्पतां

योऽन्वास्तानुजतामवाप्य
फणिनो द्राग्गृहतस्तल्पताम् ।
याऽऽयाताविषदित्सयाऽ-
सुरवधूः सा तां गतिं
प्रापिता यामद्यापि गवेषयन्त
उचिताचाराः परे योगिनः ॥ ४१ ॥

वाराहं वसुधाकृते मनुकृते मैनं तथा कामठं
भूभृन्मन्दरमन्थदण्डधृतये नारं च मार्गं पुनः ।
प्रह्लादार्थमवाविभर्वपुरथो शक्राय रायं ददत्
खर्वत्वं श्रितवान्प्रभो विजयतामेतत्तनूपञ्चकम् ॥४२॥

रामः क्षत्रकुलार्दनः पुनरपि श्रीराम उत्सादनः
पौलस्त्याद्यसुरान्वयस्य सुकृतस्तम्भावराद्धाध्वगः
चारित्रेण चिरन्तनान्नरपतीन् योऽचीकरच्चामर-
च्योतच्चङ्क्रमणैकचारुचरितान् लोकातिगेन प्रभुः ४३

पूर्वं प्रापय्य रामं व्रजमथ भगवान् देवकीं मानयन्स-
न्नाविर्भूयार्द्धरात्रे नगरत उदगान्नन्दमानन्दयन् यः ।
गोपीभिः साकमाराद्कृतयदुपतिस्तत्रलीलाऽवशेषान्
केषां तेषां कलानामपि भुवि भविता वर्णने शक्यशक्ति ४४

योऽहन् भूभारभूतानतुलितविभवान्
दैत्यजातीन् महीपान्
कन्यानां चोद्वोढ्प्रकटितकरुणः
षोडशारं सहस्रम् ।
गीतां स्फीतामवोचच्छ्रुतिजलधिसुधा
सारभूतां ससङ्ख्ये
सङ्ख्ये पार्थाय तस्मै विविधकृति कला
नाट्यकर्त्रे नमोऽस्तु ॥ ४५ ॥

श्रीनीलकण्ठ त्रिपुरासुरारे
किमन्यदीशान विशेषणेन ।
महत्त्वमेतेन सुरेषु यत्त्वं
यातोऽसि मुख्यं व्ययनावहत्वम् ४६

सद्योजातं प्रपद्ये ऽहमिति श्रुतिरुदाहरत् ।
मायाशबलितं ब्रह्म त्वामेव शशिशेखर ॥४७॥

एवंक्रमेणान्वास्य सर्वा देवताः पञ्चमहायज्ञानन्तरमशनविषये भोजनशालामनुप्रविश्य स्वास्तीर्णं रत्नपीठमधितष्ठौ ।

चित्रं चरित्रं तत्रासीच्छक्यं तत्केन वर्णितुम् ।
पात्रेषु सूपकाराणां क्रियाभिः कोष्णतास्थितिः ४८
स्वादुव्यञ्जनवैदग्ध्यी रीतिमाश्रित्ययोजितैः ।
रसैः षड्भिः केवलं यन्माधुर्यमवलम्बितम् ॥ ४९ ॥

अवाप्य सत्पात्रविशेषमद्धा
दुष्टोऽपि सम्यक्त्वमुपैति वाढम् ।
सकज्जलाङ्कः किल कामिनीनां
मुखेन्दुशोभां द्विगुणीकरोति ॥ ५० ॥

पात्रेषु लावण्यमभूतपूर्वं
यज्जातरूपेण च रत्नपूरैः ।
विलोक्य बाला कुशलप्रवाला
लावण्यमेवाभिससार पूर्वम् ॥ ५१ ॥

द्विजान्कथं कर्मकरान्विधाय
स्वदे रसज्ञाऽहमितीव ताद्दृक् ।
मुखं प्रभानिर्जितपार्वणेन्दु
लेह्यानि पात्रैकतटे बभार ॥ ५२ ॥

निरञ्जनं तच्छ्रुतिभिर्विमृग्यं
यदञ्जनं लोचनकोणवर्ति ।
नव्यञ्जनं प्राप्य विचारवीरा
सव्यञ्जनं पात्रमलंचकार ॥ ५३ ॥

द्विजोपभोग्यानथपर्पटादीन्
पुरो विधायानवकाशमेका ।
प्रमोदरामोदकशष्कुलीनां
कुलैश्चकाराकुलमेकदेशम् ॥ ५४ ॥

पात्रैकदेशं पुनराचरीतुं
शशाक सा काचन शाकराजिः ।
यस्याः प्रदानेषु कृशोदरीणा-
मुदीक्षिताऽभूदवकाशराजिः ॥ ५५ ॥

न शानि नवरत्नानां पात्राण्यासेदुरन्तिके ।
पेयानि जनताद्दृग्भिः सम्भृतानीति तैः पदैः ॥ ५६ ॥

मध्येपात्रं सूपभक्तं विभक्तं
रेजे प्राज्यं गव्यमाज्यं विविक्तम् ।
सिक्तं दृष्ट्वा भूमिपालः सुहृद्भिः
साकं प्रेम्णाऽभुक्त तद्युक्तयोग्यम् ॥५७॥

सानन्दंभुञ्जानेयुञ्जानेनर्मकाकुभिर्बालाः ।
शालाः श्रृङ्गारस्य ज्वालावलिभूतवेणिकाबालाः ५८

भुञ्जाने भूभुजां पत्यौ सूदाः सूदारवृत्तयः ।
आरभ्यातिथिवर्गेभ्य आगोपालमभोजयन् ॥ ५९ ॥

आचम्य भूमिपालस्ताम्बूलैलालवङ्गपूगफलैः ।
कृतमुखशुद्धिर्निरगात्सहमित्रैर्भोजनागारात् ॥ ६० ॥

## अष्टमः स्तवकः

अथ कृताभ्यवहारं विविक्तेन्तरङ्गसचिवैः सरसाः कथाः कुर्वाणं गुणवन्ति काव्यानि कविभिः कथ्यमानानि श्रृण्वन्तं विपञ्चीर्वादयन्ती कुमारिकाः सङ्केतयन्तं नयबलगुटिकासुद्दशो व्यापारयन्तं नर्मद्यूतेऽपातेपक्षपातेन विनोदमावहन्तं ताम्बूलकरङ्कवाहिन्या वितीर्णेषु ताम्बूलीपत्रेषु कपोलसाम्यभावनया विलक्षतां दधतं नरपतिमभ्येत्य प्रतीहारी प्रत्युवाच, देव देव्या प्रहिता विनयवती द्वारि तिष्ठति । राजा तु तदाकर्ण्य परभृतिके साहि देव्या अपरं हृदयं न क्षणमपि बहिः स्थातुमर्हा त्वरितं प्रवेशयेति तामाज्ञापयतिस्म । साऽपि पुनस्तया सह प्रविश्यैषा सा महाराजेन बहुमता विनयवतीति निवेदयांबभूव । भूपतिरपि प्रेमस्निग्धाभिर्द्दृग्भि-

स्त्वामानन्दयन् कुशलं किल तत्रभवत्याः प्रेयस्याः किमिति भवतोमायासेन न्ययोजयदिति विनयनम्रमुखीं तां पर्यपृच्छत् । सा च बद्धाञ्जलिपुटा देवस्य स्मृतिपथादनपेताया देव्याः कुशलमेव विज्ञपयति देवी महाराजं यद्बकुलमालिका त्वरयति गृहान् प्रति गन्तुं तत्प्रतिवाचिकाय काचित्प्रेषणीया, प्रत्युत्तरलेखो वा दातव्य इति । राजा तु स्मितमाह स्म ताम् ।

लेखेन्द्रवन्द्यचरणं कोलेशः स्यादुपस्थातुम् ।
शक्यं नेशे जगतामनुत्तरेणाप्यवस्थातुम् ॥ १ ॥
प्रत्याख्यातुं शक्तो जगत्त्रये कस्तदिष्टविषयकथाः ।
किंपुनरीशेन कृपावशंवदेनात्रसन्दिष्टम् ॥ २ ॥

तत्प्रतितिष्ठतु भवतीसहानेन मङ्गलकर्मणाऽमात्येन बकुलमालिकां परिचरन्ती देवदेवं श्रीनिवासमुपस्थातुं शुभेन मूहूर्तेनाद्यैव श्रीपर्वतम् । मङ्गलकर्मन् गत्वा तत्र विज्ञापनीयो जगतां प्रभुर्भगवान् ।

सर्वान्तःस्थेन विभुना प्रेर्यतेऽयं यथाजनः ।
तथाऽऽचरति का तत्र स्वामिता मादृशां प्रभो ॥ ३ ॥
मानितोऽस्मि जगन्नाथ यथाहं प्रभुणापुनः ।
शर्वब्रह्मादिभिः साकमनुग्राह्यस्तथात्वया ॥ ४ ॥
रमेयमेव कल्याणी दृष्टुं नामतिसत्कृताम् ।
रमेयमेवरोद्धेषनमोघो भवताद्विभो ॥ ५ ॥

संवादयितव्याऽत्र देवीपुनः प्रतियाहीति समाज्ञापयांबभूव । तौ च प्रणम्य पृथिवीप्रभुं प्रकटितप्रणयौ प्रापयामासतुरात्मानमन्तःपुरेश्वरीपादमूलम् । जगदतुश्च नृपसमीहितम् ।

नक्रियांकाञ्चनापीशः कर्तुं कामयतेस्वयम्
भवतीमन्तराकृत्वासससाधयितुमिच्छति ॥ ६ ॥

सा तु युक्त एष प्रभूणामनुजीविषु प्रकार उपक्रान्तेऽर्थे इति व्याहरन्ती बकुलमालिकामवादीत् । अयि कल्याणि श्रीनिवाससेवासुखमनुभावयैतावपि पश्चादनुभविष्यामो वयं तथा त्वरयतु भवती न च विस्मरणीयः सहजस्नेहपर्य्याकुलः सरलान्तरोऽयं प्राकृतजन इति । सा तु प्रेमविहस्तितत्वाद्धान्तःकरणा कथङ्कारंकलया कलावान् ज्योत्स्नयाचन्द्रः प्रभया भानुमान् विप्रकृष्येत परमोपकारनिदानमात्मा भवत्यामादृशीभिः रन्तरयितव्य इति नवीनः प्रकारो दौष्ट्यस्य निश्चिनोतु देवीजगत्प्रभुणा सह सत्वरमेव पादमूलमुपस्थितैवैषेति ।

प्रणमामि देवि तव पदपङ्कज-
युगलङ्कलन्नितान्तदयम् ।
तदयं जनः स्वसेवकसङ्ख्या-
सुख्यातिमार्गमाने यः ॥ ७ ॥
धन्याऽसि देवि पद्मा मातृ-
त्वेन क्षितौ तु धन्यतमा ।
अतिधन्यतमेदानीं
जामात्रा श्रीनिवासेन ॥ ८ ॥

अनुमन्य स्वसमीहितसम्पादनायेतिविज्ञपयन्ती विनयवती मङ्गलकर्मभ्यां सह प्रातिष्ठत् । देव्यपि गच्छत साधयतेति ब्रुवाणाऽऽन्तःपुरमध्यमध्यवात्सीत् ।

अधिष्ठिताऽभूदिति तैः करेणु-
र्नोद्धूय मूर्द्धानमियात्कुरेणुः ।
करेऽणुमप्यागममाधितास्या
नोक्तिः पुरोभागिजनाननेतथा ॥ ९ ॥
अचिराच्चप्रचलिता प्रापुस्ते ललिताटवीम् ।
अगस्त्यो यत्र सिद्धार्थोऽभूदुपस्थाय शूलिनम् ॥ १० ॥
अवतीर्यभ्याइभ्याः सभ्यानुमतांसमर्हणां कृत्वा ।
कृतफलमूलाहारा नारायण धाम काममभिसस्रुः ११
आसेदुरथ ते सर्वे प्रदेशं तं विलक्षणम् ।
यो विहारः प्रभोस्तस्य यस्य पत्रं विलक्षणम् ॥ १२ ॥

यत्र च।

मृद्वीकामण्डपतले मृद्वीकाम्लंलताऽलिभिः।
सुमनाः सुमनोभारभुग्नाभातिभ्रमाऽभ्रमा ॥ १३ ॥

तरङ्गुरपि तिर्यक्षुरिरक्षिषुरवोचत।

दोग्ध्रीं मातः सुखं शेष्व रमतामयि वत्सक ॥ १४ ॥

चेतनाचेतनाचारैश्छिन्नचेताश्चिरन्तनम्।
चिन्तयित्वा मुनिं प्राह मङ्गलो बकुलामिति ॥ १५ ॥

नूनमवाप्ताःस्म तमुद्देशं यमधिवसतिसुरासुर-मौलिमणिनिघृष्टपदनखरः श्रीनिवासाभिधानस्त्रिलोकीपतिर्यतः काननस्यास्य काचिदन्यैव परभागता परभागधेयवत्तामस्माकं प्रकटयति मनोऽत्यर्थप्रसीदति चक्षुषी च विहस्ते इव रामणीकायेति। विनयवत्यप्यवादीदयमेवार्थश्चिन्तितो मयायमायुष्मान् मन्त्रयति तद्ब्रूहि सखि बकुलमालिके कियद्दूरमधुना गन्तव्यं यदि सन्निहितः स खलुप्रदेशः स्यादलमनया करेण्वाऽनयकरेण्वापादचारेण किलोपासनीयः स भवान् पद्मावतीमनःप्राघुणिकः पुण्डरीकनयनः। बकुलमालिकाऽपि ताभ्यामेवं पर्यनुयुक्ता कथयांबभूव यदयंपुरोऽभ्रंलिहप्रासादपरिस्फुरत्पताकावलिव्याजविलसत्कीर्तिकलापो भगवत आदिवाराहावतारस्य विहारदेशस्तमनुनिविडतमालतालप्रियङ्गुपनसाम्रकदम्बलवलीलवङ्गैलालतालालितः पुण्यसरित्सनाथोऽस्तिपर्वतप्रदेशस्तमधिवसति, पद्मा प्रणयप्रेमपात्रं मम प्रभुर्न चेतोऽतिविप्रकृष्टोऽस्ति स आश्रमः कुरुतामथ स्वमभिमतमिति। तौ चाविलम्बितमेवावतीर्य करेणोः प्रणिपत्य जगन्नियन्तारं बकुलमालां जगदतुरग्रे भवतु भवती, भवतीं चानुगच्छाव आवामिति। सापि ताभ्यामनुगम्यमाना कियन्तमध्वानमतीत्य काञ्चन पुण्यामरण्यानीमवाप्य ब्रवीतिस्म, क्षणमास्यतां भवद्भ्यामिहास्याशोकतरोर्मूले यावदहं विदितवृत्तान्तं करोमि स्वामिनमिति। तथेति प्राप्तानुमतिका बकुलाऽथापदाश्रमं श्रीनिवासस्य, निर्वृत्तान्तराचावलोकयांबभूव तमध्यासीनं मृगाजिनं दीनं मीनकेतनपराजितमपराजितम्। अकरोच्च चेतसि किलावलम्ब्य मायामयं बहुमायासमयासीत्स्वयमपहारितस्वातन्त्र्यस्यास्य किं वक्तव्यम्। अचिन्त्यैश्वर्याश्चेश्वरा अतर्क्यकृतयश्च कर्तारो भवन्ति। उपसृत्य च विजयतां देव इत्युच्चैरुच्चरन्ती पादयोर्न्यपतत्। श्रीनिवासोप्येह्येहि स्वस्वराकुलीकृतकोकिलकुले बकुले चिराद्दृष्टाऽसि कुशलिन्यसि कच्चित् नचाऽसीन्मोचतया प्रयाणपरिश्रमो भूयसे खेदाय दर्शनं गता वा वसुन्धरारत्नं सा कुमारी संवादितौ वा कृतातिसुकृतौ तस्याः पितराविति कथयन् बाष्पपूरितं चक्षुर्दोर्भ्यामुत्थापयामास तास्प्रणतां चरणयोरुपकर्त्रीम्। सा च

कालस्याप्यसि कालो
दैवतमसि देवताविशेषाणम्।
केलाकोला स्वामिन्
परिचारकभूतये वितीर्णेयम् ॥ १६ ॥

सर्वथा प्रभुरसि समभिलष्यति च देवचरणसरोजपरिचर्यासुखानुभूतिं पद्मावती नितान्तमुन्मनस्कतयाऽनुकरोति च प्रकृतां स्वामिनोऽवस्थामोंकुरुतश्च तस्याः पितरौ सहैश्वर्येण दुहितरं दातुं देवाय, प्रहितं च प्रधानपरिचारकद्वयमुभाभ्यां विनयवती मङ्गलकर्मा च बहिः सदनसीमतोऽशोकशाखिच्छायायामुपविष्टौ प्रतीक्षेते भगवदादेशमितिविज्ञापयांबभूव। श्रीनिवासस्तु कोऽभिप्रायो भवेत्तत्र भवत्या तयोरत्रस्थापनइति तां पर्य-

युयुङ्क्त । सा तु व्यजिज्ञपत् क्षणं भवत्ववहितः स्वामी समाकर्णयतु मन्दप्रज्ञाया अस्या अभिमतम् । ऐश्वर्यलुब्धौ हि भवतः कन्यापितिराविति लोक-रीतिमनुरुन्धानयाऽनया तत्र त्रिलोकीपतिरचिन्त्य-वैभवश्च भवाँस्तथ्यमभिहितस्तथाऽपश्यन्तावेतौ-मामनृतवादिनीं प्रकाशयन्तौ कार्यमन्यथायितुं न प्रभवेतां, प्राकृता हि पुरुषाः प्रत्यक्षमेव ज्ञातुमीशते तत्तथाऽऽचरणीयं यथाऽहं सत्यात् प्रच्युता न भवेयमिति । उपेन्द्रस्तु प्रहस्य प्रह्वां तामभिदधौ यल्लोकत्रयवैभवजीवातुः कमलाऽकारणमेव मां पर्यत्यजदिति जानानाऽपि भवती तत्र कथमेवम-वादीदत्र च प्रतिविधानं भूयो भवत्येव चिन्तयतु नाहमपराध्यामिस्म तदेदानीन्तु स्फुटमस्म्यपराध-भाजनमिति । सा हि बद्धाञ्जलिः प्रभुमेवमवादीत् ।

किं वक्षि चिन्तयसि वा
प्रभुरसि सङ्कल्पकल्पिताजशिवमहिमा ।
महिमानमात्मनः पुनरिति
निह्नोतुं विचेष्टसे किमिदम् ॥ १७ ॥

अत्यवाहि समयो रमयोक्तः
सन्निधानसमये सदनेहा ।
स्वागतं भवतु भावितमस्या
स्त्वामपि त्वरयतां सदनेहा ॥ १८ ॥

तस्यामेवं वदन्त्यां सपदि पुलकितं
शाखिभिः पार्वतीयै-
र्व्योमान्यभ्रै रधारि प्रपदमुदलसद्-
भूतधात्री समन्तात् ।
पुष्यन्तौ पुष्पवन्तावपि पद-
पिहितौ दीप्तपुञ्जैरभूतां
देवोऽप्युद्भ्रान्त ऊचे किमहह बकुले
[illegible] ॥ १९ ॥

विमानावलिव्याप्तमभ्रं बभूव
क्षितिः खात्पतद्भिः सुमैः पूरिताऽऽसीत् ।
दिशो भेजुरत्यर्थमाभावितानं
ववौ वायुरानर्तितारण्यवीरुत् ॥२०॥

तत्र च व्यतिकरे पुरुहूतप्रभृतिभिः सुपर्वभि-रुपास्यमाना दिव्यैर्महर्षिभिः स्तूयमाना तुम्बुरु-प्रमुखगन्धर्वैरनुगीयमाना रम्भादिभिरप्सरोभिर्ला-स्येनन्वास्यमाना पश्यत प्रणमतापसरतेत्यादिभिः प्रतीहारीसहस्रध्वनिभिर्वधिरीक्रियमाणे विष्ट-पत्रयजने परिचारिका सहस्रसेवितेऽमाने विमाने पद्ममध्यमध्यासीना पद्मपाणिः पद्मा प्रादुर्बभूव श्रीनिवासस्य पत्युः पादयोरुपकण्ठम् । याहि देवाधिदेवमहिषी वहोः कालात्कारणविशेषतः पतिमवस्यात्मानं निन्हुवाना कचनावात्सीत्सेयं सर्वजगत्सुखैकप्रसूतिर्हरिप्रियेति विदितमभूद् बकु-लाया, आकुलान्तरा च सा प्रभुवदनमवलोकया-मास । श्रीनिवासस्तु ।

पश्य पश्य बकुले मुकुले ते
चक्षुषी किमिति सुप्तिमुपेतः ।
मामनागसमकालमहासी-
त्क्षीरसागरसुता किल सेयम् ॥२०॥

जागर्मि नक्तंदिवमाप्तखेदो
यस्या मया साकमभूदभेदः ।
अभिष्टुवन् यामिदमाह वेदः
सेयं प्रिया प्राङ्गणमेति मेऽद्य ॥२१॥

इति बकुलामुक्त्वा देवीमभिजगाद ।

असि जगदुपकर्तुं सोदरात्वं सुधाया
मयि पुनरनुकूले कालकूटस्य देवी ।
विषमपि पिबतोयच्छङ्करस्यास्ति भव्यं-
नगिरिनगरसुताया अङ्गसङ्गोऽत्र हेतुः ॥२२॥

अयि खलु विषमेयं मेऽनवस्थात्यवस्था;
तव तु मयि निरागस्यस्ति कोऽसौ कुतर्कः।
बत नियतिनियोगादृगोचरा भूर्द्ध शोर्यत्
हृदयमपि दयार्द्रंप्राणनाथे विधेहि ॥ २३ ॥

बहुतरमधुना किं नोत्सहे वक्तुमेकं-
तववचनमलब्ध्वा प्राणपीयूषसेकम्।
वरतनुपतितः स्यां पादयोः किं पतित्वा
दयित इति विचारः साधुमाधुर्य्यमृच्छेत् ॥२४॥

पत्यौ न पतिते प्रीतिः कुलस्त्रीणामियं कथा।
किं पादपतितं तन्वि स्पृशत्यूनाऽथचेदपि ॥२५॥

सप्रेमपुलकोत्कम्पंगलदश्रुंस्खलद्गिरम्।
विलोक्य पद्मा भर्तारं समाश्लिक्षदवाङ्मुखी ॥२६॥

नचोवाच नतभ्रूस्तं दृग्भङ्ग्या भावमान्तरम्।
बोधयन्ती भृशं विद्युद्विवद्द्योत उद्यता ॥ २७ ॥

प्रहस्याहस्म बकुलां बद्धाञ्जलिमुपस्थिताम्।
किमिच्छस्यधुना दूति ब्रूहि स्वस्वामिहृद्गतम् ॥२८॥

यच्छ्रोतुमन्मना नूनं तत्तु श्रोष्यसि सुन्दरि।
परं प्राघुणिकौ प्राप्तौ प्रवेशय परां पुरम् ॥ २६ ॥

गच्छ तावानय क्षिप्रं यावशोकतरोस्तले।
लभेतां श्रीनिवासाङ्घ्रि परिचर्यामहोत्सवम् ॥३०॥

तामादिश्येति लक्ष्मीश्रमदकृत तथा
श्रीनिवासोऽपि नावे-
त्तत्कर्मालं बभूव स्थलसखिलमधो
रत्नसारैः पिनद्धम्।
ऊर्द्ध्वं दिव्यागमाङ्कस्थितखगविरुतैः
किन्नरैर्गीयमानं
धामाभूद्भूरिधामा प्रतिकृतिकृतिभिः
प्राप्यमत्यद्भुताभम् ॥३१॥

ओमिति प्रतिपत्तीच्छमन्तराबकुलेतरत्।
नाभ्यपद्यत गत्वातौ प्रापयामास तत्पदम् ॥३२॥

विनयवतीमङ्गलकर्माणौ हि बकुलयाऽनुप्रवेशितौ प्रभोः पदवीमारादेव चिन्तयांचक्रतुरति वैभवं स्वस्वामिकन्यकासमुद्भवम्। अति मानुषमेतद्धामनि कामं ललामनकलामप्यस्य प्राप्तुमीष्टे त्रिभुवनसमृद्धिरदृष्टाश्रुतपूर्वाण्याश्चर्यभाञ्जि भान्ति वस्तूनि नमोऽस्तु पूर्वाचरितेभ्यः सुकृतेभ्यो येषां परिणतिरीदृशानास्वादयति प्रसादसन्दोहानिति बहुविधमभिध्यायन्तावापतुः श्रीनिवासवसतिद्वारदेशम्। बकुलमालिकासाहाय्यात्प्रतीहारानिवारितप्रवेशाऽऽवतीत्य तिस्रः कक्ष्याः पदातितुरगरथगजघण्टाघटिताः प्रभुमवालोकयतां महार्हसिंहासनमलङ्कुर्वाणं मुनिवृन्दैर्दिव्यैःस्तूयमानकथमनयनपथं प्राकृतानां भक्तानुग्रहैकदीक्षितं द्युसदीक्षितम्।

किरीटकलितालिकं कुटिलकालभावालकं
प्रसन्नदृगवेक्षितप्रणतसिद्धसद्बालकम्।
वसानममलांशुकं पिञ्जितहेमभाजालकं
पयोदसदृशच्छविंसुरगुरुं जगत्पालकम् ॥३३॥

दृष्ट्वा च तौ दूरादेव कृतसाष्टांगप्रणती विचारयाञ्चक्रतुश्चेतसि रसिकधुरीणा प्रवीणा किलास्मत्स्वामिसुता स्थानेऽरज्यत न हि कुमुदिन्याः प्रमोदाय ऋते सुधादीधितेस्तां नाथन्नयं जगतां नाथोऽपि श्लाघ्यमेवाचचार, उभयतः सिक्तं हि स्वादुतमं भवति वस्तु कस्तुलनामनयोरुभयोर्विष्टपत्रये कर्तुमुत्सहेतेति। प्राप्य चान्तिकं पादयोः पेततुर्विनयेन निन्यतुश्चात्मानं कृतार्थताम् चतुश्च प्रेमगद्गया गिरा स्वस्वामिस्वान्तसङ्गतार्थानुबन्धि विषयजातम्।

रामजीलालशर्मणः प्रबन्धेन प्रयागस्थ "हिन्दी प्रेसे" मुद्रिता,
[illegible] दारागञ्ज प्रयागतः प्रकाशिता।

अपूर्वोऽवसरः

अर्द्धं मूल्यम्

# दशोपनिषदः

श्री १०८ स्वामिभास्करानन्दकृतमृद्धीटीकासमेताः। इयं टीका सर्वाभ्यष्टीकाभ्य उत्तमा सरला च। इयं टीका समभिनन्द्यते विद्वद्भिः। मसृणदृढेषु पत्रेषु सुन्दरं मुद्रिता। सप्तशतपृष्ठेष्वियं समाप्ता। अस्या मूल्यम् ७) परं टीकाकृत्स्वामिनामेकेन धनिकेन शिष्येण शतद्वयं पुस्तकानि अर्द्धेनैव मूल्येन प्रचारयितुमहं समादिष्टोऽभवम्। क्षतिपूरणमपि तेनैव महोदयेन प्रतिज्ञातम्। अतश्च शतद्वयग्राहकेभ्योऽर्द्धेनैव मूल्येन सार्द्धरुप्यकत्रयेण दातुमस्मि सन्नद्धः। एवंविधस्य पुस्तकस्यैतन्मूल्यमतीव स्वल्पमिति कृतं कथनेन पुस्तकं जिघृक्षुभिस्त्वरितं तमधोनिर्दिष्टे स्थाने पत्रं प्रेषणीयम्—

सिद्धिनाथदीक्षित, साहित्यप्रचारकमण्डली,

दारागञ्ज, प्रयाग।

---

## संस्कृत-प्रबोध

द्वितीय संस्करण पृष्ठ ३१०. मूल्य ॥)

लीजिए, इस पुस्तक को मँगाकर अब आप झटपट संस्कृत भाषा का इतना ज्ञान अवश्य कर लीजिए जिससे आप व्यावहारिक बातें धड़ाधड़ संस्कृत में करने लगें, हितोपदेश, पञ्चतन्त्र, वाल्मीकीय रामायण और रघुवंश के श्लोकों का अर्थ लगाने लगें। गुरु की ज़रूरत नहीं, अपने आपही, इस पुस्तक में बताई सरल रीति से आप संस्कृत के पण्डित बन सकते हैं। कौमुदी, अष्टाध्यायी में वर्षों सिर खपाने से यह अच्छा है कि इस पुस्तक से आसानी के साथ संस्कृत व्याकरण का मर्म समझ लें। जल्दी मँगाइए। इतनी बड़ी पुस्तक का मूल्य बहुत ही सस्ता है।

पुस्तक मिलने का पता—

मैनेजर, हिन्दी प्रेस, प्रयाग।

## विद्योदयः

स्वर्गीयश्रीहृषीकेशशास्त्रिप्रतिष्ठितः अधुना तदीयसुयोग्यसूनुभ्याम् अध्यापकश्रीभवविभूतिविद्याभूषण एम० ए० श्रीभवभूतिविद्यारत्नाभ्यां सम्पादितः।

### "विद्योदये।"

हि भारते प्राचीनतमं संस्कृतमासिकपत्रम् अर्द्धशताब्दीं यावत् परमदक्षतया परिचाल्यते प्रबन्धगौरवेण लौकिकरचनाविभवेन चायं प्राच्यप्रतीच्यवैपश्चितां मनांसि मोदयन् संस्कृतसाहित्यक्षेत्रे ऽप्यद्वितीयबहुमानं लभते। अयि भोः संस्कृतसाहित्यसेवकाः! त्वरन्तामस्य भवन्तो ग्राहका भवितुम्।

### विशेषद्रष्टव्यम्

विद्योदयस्य वार्षिकमूल्यं छात्राणामसमर्थानाञ्च पक्षे द्वौकरौप्यम्, तदन्येषान्तु रौप्यद्वयम्, मूल्यप्राप्तिमन्तरेण न कस्यचिद् विद्योदयः प्रेर्य्यते।

श्रीविद्योदयकार्य्याध्यक्षः

भाटपाड़ा, २४ परगना, बैङ्गाल

Regd. No. A. 634

# नवीनमायोजनम्

सर्वाणि संस्कृतपरीक्षापाठ्यपुस्तकानि यथा एकस्मादेवस्थानादुपलब्धुं शक्येरन्, यथा च विद्यार्थिनामुपयोगापेक्षितानि पुस्तकानि अल्पकालव्ययेन एक एव जनः प्रेषयितुं प्रभवेत्तदर्थं नाद्य यावदासीदुपयुक्तः कोऽपि प्रबन्धः। एतत्प्रबन्धाभावेन विद्यार्थिभिर्महान् क्लेशोऽनुभूयते स्म। एकं पुस्तकं काश्यां मुद्रितमेकञ्च मोहमय्याम्, एतेन ग्रामवासिनो विद्यार्थिनः कियन्तं क्लेशमनुभवन्ति स्मेति कृतं कथनेन। तेषामेवोपयोगाय कोऽपि "संस्कृतपुस्तकालयः" स्थापितो मया। अत्र सर्वविधानि संस्कृतपुस्तकान्युचितेन मूल्येन प्राप्तुं शक्यन्ते, शासनं (Order) हि त्वरितमेव पाल्यते। मन्ये नवो अयं पुस्तकालयोऽपि श्रीमद्भिः स्मर्तव्य इति प्रार्थना। सूचीपत्रदानमङ्केन -

व्यवस्थापकः

शारदानिकेतन

दारागंज, प्रयाग।

श्रीमता सहृदयासम्पादकेन श्रीकृष्णमाचार्य एम्. ए. महोदयेन निर्मितानि पुस्तकानि।

रघुवंशविमर्शः मूल्यम् १)    मेघदूतविमर्शः मूल्यम् १)

सरलया भाषया श्रीमता कृष्णमाचार्यमहोदयेनात्र कालिदासीयं हृदयं प्रकाशितम्। एतत्पुस्तकावलोकनेन सर्वोऽपि जनः कालिदासमहत्त्वमनायासेनैवावगन्तुं पारयेत्।

कालिदासीयभारतवर्षस्य मानचित्रम्। मू० ॥) प्रेषणव्ययः पृथक्

प्राप्तिस्थानम्

शारदानिकेतन,

दारागञ्ज, प्रयाग.

---

## संस्कृत-शिक्षा

संस्कृत सीखने की सर्वोत्तम पुस्तक। इसके द्वारा कारक का पूरा पूरा ज्ञान हो जाता है। इसके पढ़ लेने से संस्कृत के छोटे छोटे वाक्यों का बनाना और समझना सहज हो जाता है। पुस्तक के अन्त में शब्द सूची दी गई है, जिससे बहुत से शब्द और उनके अर्थ मालूम हो जाते हैं। जो लोग संस्कृत सीखना चाहते हैं उनके काम की पुस्तक है। मूल्य केवल ≈) आने का टिकट भेजिए।

मिलने का पता—

शारदानिकेतन।

दारागंज, प्रयाग

द्वितीय-वर्षे

सौरफाल्गुन-चैत्रयो
शकाब्दाः १८५१।

एकादश-द्वादश सङ्ख्ये।

# ब्राह्मणमहासम्मेलनम्।

(मासिकं संस्कृतपत्रम्)



सम्पादकसंघः—

महामहोपाध्याय श्रीयुक्तानन्तकृष्णशास्त्री।
श्रीहाराणचन्द्रशास्त्री।
श्रीराजेश्वरशास्त्री द्रविडः, श्रीताराचरणभट्टाचार्यः;
श्रीश्रीजीव न्यायतीर्थः एम्. ए.।

---

वाराणस्याम्—

साङ्गवेदविद्यालय यन्त्रालये मुद्रयित्वा
ब्राह्मणमहासम्मेलन कार्यालयात्
प्रकाशितम्।

---

अग्रिमवार्षिकं मूल्यम्
रूप्यकत्रयम्।

एतत्सङ्ख्याया मूल्यम्।
आणकाष्टकम्।

# चित्रपरिचयः ।

कैलासवासिनां न्यायशास्त्राम्भोधिपारदृश्वनां तत्रभवतां महामहोपाध्यायपण्डितप्रकाण्डगुरुवर श्री ६ कैलासचन्द्रशिरोमणिभट्टाचार्यमहोदयानां छायाचित्रमिदं पुरतो विराजते। एते हि महाभागा अन्वर्थ नामानः पण्डितानां शिरोमणयः कैलासचन्द्रस्य भगवतो महेश्वरस्यापरां सौम्यां मूर्तिमाश्रित्य भारतेवर्षे पण्डिताना-मादर्शं स्थापयितुमेवाऽवतीर्णा इति तानवलोकितवतां प्रायः सर्वेषामेव विदुषामैकमत्येन निर्णयः समस्ति। आकारसदृशप्रज्ञः, प्रज्ञयासदृशागमः इतिमहाकविकालिदासोक्तरीत्या यादृशोहि दर्शनीयो वाह्यस्तेषामाकार आसीत्, तदनुरूपैवप्रज्ञाया विशुद्धिरपि लोकोत्तरैवाऽवर्तत। न कदापि केनापि कस्यामप्यवस्थायां सम्पत्तौ विपत्तौ वा स्वल्पोऽप्याकारविभ्रमो लक्षित आसीत्, येषां च स्वः पर इति चित्तेष्वात्मनि वा भिदैव नासीत्।

"अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानान्तु वसुधैव कुटुम्बकम्॥"

इत्युक्त रीत्याऽजातशत्रोरिव सर्वस्पृहणीयता येषामासीत्। येषां बाल्यादारभ्य ब्रह्मसायुज्या-वाप्तिपर्यन्तं सर्वमेव जीवनं शास्त्रचर्चयैव व्यतीतम्, ये हि न्यायशास्त्रे महर्षेर्गौतमस्यापरा मूर्तिरिवेति विद्वद्भिरगण्यन्त। तेऽपि महात्मानः वङ्गदेशे वर्द्धमानमण्डलान्तर्गतभ्रातृग्रामनामके स्थाने जन्म गृहीत्वा क्रमेण वर्द्धमाना न्यायादिशास्त्रकलापं सम्यगधीत्य व्युत्पत्तिप्रकर्षं सम्पाद्य श्रीकाशीं समागत्य काशीस्थराज-कीयसंस्कृतपाठशालाप्रधानाध्यक्षमहोदयैरभ्यर्थिता अनिच्छन्तोऽपि न्यायशास्त्राध्यापकपदमलङ्कृत्याने-कांश्छात्रानध्याप्य प्रत्यष्ठापन् भारते वर्षे सर्वत्र कीर्तिस्तम्भम्। १९६५—वर्षे च ब्रह्मसायुज्यमगमन्।



---

# ग्राहकमहोदयानां सविधे सादरमभ्यर्थनम्।



बहुविधविघ्नपरम्पराभिरपरिहार्यैः कारणान्तरैश्च गतवर्षीयमासिकपत्रिकायाः सर्वेऽपि खण्डा यथाकालं प्रकाश्य श्रीमतां सन्निधौ न प्रेषिता इत्येतदर्थं नितरां दूयमानमानसाः स्मः। एकादश-द्वादश सङ्ख्ये प्रेष्येते, आशास्यतेऽनेन सञ्जातात्रुटिःक्षमिष्यते प्रेषयिष्यते। ततः परं तृतीयवर्षादारभ्य प्रतिमासं नियतसमये पत्रिकायाः प्रकाशनपूर्वकं सङ्ख्या उपायनीकरिष्यन्ते। पत्रिकाया अस्याः प्रकाशनं केवलं गैर्वाणवाण्याः पुनरुज्जीवनपूर्वकं भगवतः सनातनधर्मस्य प्रचारार्थमेव क्रियते, इति मन्यामहे नाऽविदितमिदं स्याच्छ्रीमताम्। तस्याः पत्रिकायाः प्रचारार्थं श्रीमद्भिः साहाय्यं यदि न क्रियेत, तर्हि न कथमपि धर्मरक्षणकार्यं सम्पत्स्यत इति श्रीमतां पुरस्तात्प्रार्थयामो वयं यच्छीघ्रमेव यै र्महाभागै र्गतवर्षीयं वार्षिकमूल्यमद्यापि न प्रदत्तं तत्तथाऽग्रिमवार्षिकमूल्यमपि कार्यालये प्रेषयित्वोपक्रियतामियं पत्रिका। वी०पी० द्वारा प्रेषणे निरर्थकार्थव्ययो भविष्यतीति प्रथममेव मूल्यप्रेषणं समुचितम्। अग्रे पत्रमिद मात्मीयबुद्ध्या प्रतिपालनीयं श्रीमद्भिः। अत आशास्महे पत्रमिदं भवत्क-रतलगतं व्यर्थं परावर्तितं न भविष्यतीति। येषां महानुभावानां पत्रस्य जिघृक्षा न भवेत्तैस्तु कृपया—एतत्सङ्ख्याप्राप्तिसमनन्तरमेव वयं विज्ञापनीयाः।

महामहोपाध्यायपण्डितप्रवर,

श्री ६ कैलासचन्द्रशिरोमणिभट्टाचार्यपादाः ।



शीतांशु शुभ्रामलकीर्ति कान्ताः सौशील्यसौजन्यगुणैः प्रशान्ताः ।
विद्वद्वराणां धुरि कीर्तनीयाः कैलासचन्द्रा गुरवो जयन्ति ॥

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्याऽपि हेतोः ।" [ महाभारतम् ]

द्वितीयवर्षे } सौरफाल्गुन शकाब्दाः १८५१ । { एकादश-संख्या



## विवेचनम् ।

( १ )

असारे संसारे न खलु सुलभं मानवकुलं,
चतुर्णां वर्गाणामिदमुदयमूलं हि विपुलम् ॥
पुरा नानाजन्मार्जितसुकृत—जातेन कलितं,
तदस्मभ्यं चिन्तामणिसमफलं हन्त ! मिलितम् ॥

( २ )

मनः कर्णौ घ्राणं त्वगपि रसना लोचनमिति,
स्फुटा वाणी पाणी चरणकरणाऽऽदीन्द्रियततिः ॥
मनीषामस्माकं सफलयति तत्कालमखिला—
मितो रम्यं किं वा त्रिजगति भवेत्काम्यसधिकम् ।

( ३ )

समेषामेतेषां निवहमय—कायो भगवता,
समर्थः कर्मार्थे जगति खलु धर्माय निहितः ॥
अतो ये यावन्तः कुलनियत—वर्णाश्रम—रताः,
द्विजाः शूद्रा स्ते ताः कुलजमहिलाश्च स्वरगमन् ॥

( ४ )

व्यतीतानां त्रैकालिकमतिमतां दीर्घतपसां,
यथार्थ-ज्ञानानां त्रिभुवनदृशां पूर्व-विदुषाम् ॥
परार्थप्राणानामृषिकुलमणीणां सुमनसां,
सुनिर्णीतं मार्गं वयमनुसरामः सविनयम् ॥

( ५ )

अनिष्टं यद्यावत्क्वचिद्भवदस्मिन्पथि पुरा,
समस्तं तद्दूरीकृतमनुभवज्ञैरतितराम ॥
अतः कल्याणार्थं स्वयमनुसरन्तः सुहृदयान्,
वदामो निःशङ्कं भजत ! निजकल्याण—सरणिम् ॥

( ६ )

यमालम्ब्याऽऽचारं श्रुतिनिगमसारं हितकरं,
विपत्पारावारं तरलतरसंसारमतरन् ॥
तमाचारं सभ्या ! अनुचरत सत्येन मनसा,
मुनीनां मर्यादा न गमयति कः संशयपदम् ॥

( ७ )

सदा श्रीसम्पन्नं सुकृतविमलं भारततलं,
ह्यनेके राजानस्त्रिभुवन-समर्था बुभुजिरे ॥
ररक्षुर्बाहुभ्यां त्रिदिवमपि ये दानवभयात्,
तदीयोऽसौ मार्गो नकथमुपकुर्वीत भवतः ? ॥

( ८ )

विधेः सर्गाद्यावधि मृतवतां भारतभुवां,
स्थिति र्या स्यादस्मत्पितृसमुदयानां सुकृतिनाम्।
स्थितिः सैवाऽऽस्तां नस्तदुदितपथैवाऽनुचरतां,
वियुक्तानां योगो न किमु परिवारं सुखयति ? ॥

( ९ )

वयो येषामल्पं कमलदल-कीलालचपलं,
दुराचारादन्तःकरणमगुणं गर्वविकलम् ॥
स्वविद्यानामाद्याक्षरमपि कदाचिन्न पठतां,
कथं लभ्यं ? वैषामनुगमनतो वाञ्छितमहो ! ॥

( १० )

सहस्रायुर्वर्षैः स्वयमनु भवन्तोऽहितहितं,
स्फुरन्तस्तेजोभि र्विमलमतयः पूर्वपितरः
कृतघ्नै र्निन्द्यन्ते न च खलु कृतज्ञैरिति हृदा
विवेकः कर्तव्यः स्वयमथ किमुक्त्या बहुलया ?॥

---




[ नि०--श्रीजगन्नाथ उपाध्यायगुरागाञी। ]



पावित्र्यमन्तरा न कोऽपि पदार्थः स्वीयस्वभावाऽनुगुणं गुणं संसारस्योपयोगाय प्रचारयितुं प्रभवति। पदार्था हि द्विविधा भवन्ति, भोग्या, भोगिनश्च। तत्र भोगिनो जीवधारिण एव भवन्ति। भोग्यास्तु सर्व एव। प्राणधारिषु भोग्यत्वं भोक्तृत्वं च विद्यते। इतर-पदार्थेषु भोग्यत्वमेव केवलं प्रायशो लभ्यते। शुद्धिमत्त्वं तु सर्वेष्वपि पदार्थेषु सर्वदा सुतरामावश्यकं भवति। भोग्यपदार्थगतमथवा भोक्तृगतमिति पावित्र्यद्वयमपि प्राणिनामेव हानिलाभ-कारणं भवति। अतः प्राणिविषयकमेव पावित्र्यमिह किमप्युपवर्ण्यते।

साधारणतः पावित्र्यं द्विविधं भवति। बाह्यमाभ्यन्तरिकञ्च। द्विविधयोरपि तयोरावश्यकता समाना भवति बाह्यशुद्ध्या शरीराणां पावित्र्यं विद्यमानं भवति। तेन सांक्रामिकाणां रोगाणां पापानां वा परमाणवः सहसा कायान्तरमाविष्टुं न प्रभवन्ति। आभ्यन्तरशुद्ध्या मनः पवित्रं जायते। मनसो नैर्मल्ये जीवात्मन्यधिश्रितबुद्ध्यादिगुणानां विमलता सम्पद्यते। तेन परमात्मनः साक्षात्कारयोग्यता समीपवर्तिनी जायते। मानुषजीवनस्य परमात्म-साक्षात्कार एवाऽस्त्येकं परमं प्रयोजनम्। तमेवोद्देशं लक्ष्यीकृत्य भारतवर्षहितैषिभिः पुरातनैस्त्रिकालदर्शिभिर्मुनिभिस्तानि धर्मशास्त्राणि विरचितानि, येषामाकर्णनमननाद्यनुष्ठानकर्मभिर्मानवानामन्तःकरणवृत्तयः स्वभावतो धर्माभिमुख्यः सम्पद्यन्ते। परन्तु वर्तमानसमये धर्मशास्त्राणां प्रामाण्यमेव कतिपये पुरुषा नानुमन्यन्ते। ये केचन मनसा सम्मानयन्ति, न तेऽपि यथार्थमर्थ-

मवगच्छन्ति । जानन्तोऽप्यन्ये कतिजनास्तदीयं वास्तविकमन्तर्भावमजानानाः स्वयं संशयापन्नमानसा नहि तेभ्यो यथातथं लाभमुपयोक्तुं प्रभवन्ति । अतएव हि साम्प्रतं यत्रयत्र दृष्टयः परिपतन्ति तत्र तत्र सर्वेष्वपि नरविसरेषु निष्काममुच्छृङ्खलतैव नयनगोचरमायाति । तेनैव हेतुना पवित्रमिदं भारतवर्षं सुख-समृद्धि-स्वातन्त्र्यनैरोग्यादिकल्याणवञ्चितं सञ्जातम् । नितरां दुःखितं, पराननाधीनं, सर्वदा चिन्ताक्रान्तं, परस्परकलहसङ्कुलं क्षीणसारं च साम्प्रतमनुभूयते । हन्त ! यदिदं भारतं ब्रह्मनिष्ठानां त्यागपरायणानां त्रिलोकसम्मानितानां समस्तप्राणिहितैषिणां महात्मनामावासेन ब्रह्मानन्द—रसपरिपूर्णविकसितकुसुमं कल्पतरुवाटिकावनमिव रमणीयमासीत्तदेवाऽद्य नानाविधकलहकलङ्कानलज्ज्वलितं सर्वतः शुष्करूक्षमस्माभिरनुसेव्यते !। अस्तु ! स्वानुष्ठितकर्मणः फलमिदमुपभुज्यते !।

## शरीर शुद्धिः—

शरीरशुद्धिरपि बाह्याभ्यन्तरभेदेन द्विधा भवति । तत्राऽमेध्यानामस्पृश्यानां पदार्थानामसंसर्गो,-त्तथा पयोमृत्तिकागोमयप्रभृतिशोधकवस्तुभिः प्रक्षालनादुवाह्या स्वच्छता सम्पन्ना भवति । न्यायोपार्जितपवित्रवस्तूनामभ्यवहारेण, शरीरसाधनीभतरसरुधिरादिकसप्तधातूनां नैर्मल्यव्यवस्थया चाऽभ्यन्तरिकी पवित्रता व्यवतिष्ठते । परं साम्प्रतमयं विचारः प्रायो नाद्रियते । तादृश-शरीरशुद्धिं तु कियन्तः साम्प्रतिकाः पुरुषा अन्याय्यामवव्यवहार्यां वृथाऽऽडम्बरदूषिताञ्चमन्यन्ते । तत्राऽप्यस्पृश्यविषयिणीं तु समस्तसच्छास्त्रानुमोदितामपि शुद्धिचर्चामाकर्णयितुमपि न समीहन्ते । न कीदृशेऽप्यवसरविशेषे कथमप्यवस्थायां [illegible] स्पर्शदोषं गणयन्ति । किं बहुना ? कतिपये तु महाशयाः परिणयमपि तैरस्पृश्यजातीयैः साकं परस्परमनुष्ठातुं बहुमन्यन्ते ।

विदन्त्येव तेऽपि यत्—

भाविनः शिशोर्गर्भवासावस्थायां माता यादृश-पदार्थानामनुभवं तत्तदिन्द्रियवशात्कुरुते, तत्तेषां विषयाणां परमाणुप्रवेशप्रभावेण तादृशानुसारानुहारव्यवहारः खलु बालकोऽपि गर्भादुत्पद्यते । अत्रैकां जनश्रुतिं प्रियपाठकेभ्यः श्रावयितुमुचितां मन्यामहे— "—काचन पतिव्रता रजोवती वनिता धर्मशास्त्रानुसारेण चतुर्थेऽहनि पुण्यतरङ्गिणीवारिणा पुष्पान्त-स्नानं कृतवती । धर्मशास्त्राणां वचनमस्ति यत्—"ऋतुस्नातया स्त्रिया स्वभर्तारमनवलोक्यैव न किमप्यन्यदवलोकनीयम् !। पत्युर्दर्शनाऽसम्भवे सूर्यभगवतो दर्शनमवश्यं करणीयमि"ति । परन्तु सा पतिव्रता तादृशज्ञानाभावात्तं नियममुल्लङ्घ्य दैववशाद्यदृच्छया तेन मार्गेण प्रतिष्ठमानं कमपि शूद्राकारं पान्थमवलोकितवती । ततः कालक्रमेण प्रसूतमिमं बालं मातापित्रोरननुकूलानुहारं कालवर्णं विलक्षणाकृतिमवलोक्य विस्मयापन्नमानसास्तत्सम्बन्धिनः सुनिपुणं विमृश्य गर्भधारणदशायां पालनीयनियमानामस्खलिततां, स्त्रियाश्च तस्याः पातिव्रत्यं कुलीनतां च सर्वथा च्छिद्ररहितामवधार्य ऋतुकालीनस्नानवृत्तमेवाऽऽशङ्क्य पृष्टा सा वनिता यथातथमवर्णयत् । ततस्तदुपवर्णितलक्षणपरिचयेन निगृहीतोऽसावपि पान्थस्तेनैव वर्त्मना गच्छन्तमात्मानं स्मरन्सत्यमनुमेने । स च बालः सर्वात्मना तमेव जटिलं विवृत्तनयनं करालालोकं मानुषं समग्रेणायुषा विडम्बितवान् ।"

एवमेव दर्शन—स्पर्शन—भाषणादिभिः संक्रममाणा गुणा भावाद्भावान्तरं कायात्कायान्तरं च संसरन्ति । परमीदृशं प्रत्यक्षमनुभवमङ्गीकुर्वन्तोऽप्यमी जना यथेच्छमशन-पानादि समस्तव्यवहारकरणे नहि दोषं विवेचयितुमीहन्ते । कैश्चित्तु तादृशमस्पृश्यनियमनं

मतिविपर्ययेण पुरातनैः प्रचारितमित्यपि वक्तुं नाऽवपि लज्जन्ते ! । कलिकालस्याऽयं प्रभावः !!! ।

साम्प्रतं तु गोमय-मृत्तिकादिभिः शरीरशोधने ग्रामीणतामसभ्यतां वा कियन्तः सज्जना मन्यन्ते । परं सुतरामपवित्रपशूनां वसामेदःक्लेदमयेन क्षालक-(साबुन) द्रव्येण, सुरभिवर्णकव्याजतो वैदेशिकमदिरया वा शरीरशोधन स्वायं गौरवं सम्भावयन्ति । मृत्तिका—पदश्रवणमात्रेणाऽपि वर्तमानशिक्षितास्तु केचन 'बाबू' महोदयास्तप्ततैलपतितपयोबिन्दुवच्चटचटायन्ते । तत्कारणमपि प्रत्यक्ष विद्यते । सम्प्रति यथा जनानामन्तःकरणभावा बाह्येषु कृत्रिमचाकचक्येषु रमन्ते, न तथा वास्तविक्यामाभ्यन्तरपवित्रतायाम् । अतस्तादृशानामपवित्रक्षालकवस्तूनामस्पर्शनीयपरमाणुप्रवेशेन कलुषीकृतमपि शरीरान्तरमदूषितमेव मन्यन्ते । जलशुद्धिविवेकस्तु प्रायशो लुप्त एव ।

बाह्यशुद्धिः साम्प्रतं कीदृशीमवस्थामनुधावतीति तु विदितमेवोपर्य्युदितेनाऽस्पृश्यस्पर्शनादि-नियमस्य तथा जल-गोमय-मृत्तिकादिव्यवहारस्य व्यर्थाडम्बर-कल्पनावर्णनेन सामयिकेन ।

## शरीरस्याऽऽभ्यन्तरशुद्धिः ।

केवलमियमाहारशुद्ध्या व्यवस्थिता भवति । अत एव धर्मशास्त्रेषु शूद्रान्न-गणिकान्न-पर्युषितान्न-प्रभृतीनां खाद्यपदार्थानां वर्जनमुपदिष्टमस्ति । नैतस्याऽपि वर्तमानसमये विवेचनं क्रियते । वस्तुतः साम्प्रतं केषुचिद्देशेषु नगरेषु वा तादृशः पदार्थोऽपि नोपलभ्येत, यः खलु सर्वथा न्यायोपार्जितः स्यात् ! । लुप्तप्रायो हि सम्प्रति धनोपार्जनविषये न्यायान्यायविचारः । महामहान्तोऽपि व्यापारिणो व्यवसायिनो वा मृषाजल्पन-जनवञ्चनादिकं व्यवहारमेव धनोपार्जने भृशमावश्यकं साधनं मन्यन्ते स्म । किं बहुना ? विद्यमानेष्वपि लक्षशः कोटिशो वा धनेषु, व्यापारे पञ्चषाणां रूप्यकाणामायलोभवशङ्गतचेतसस्तत्पतयः समाश्रयन्त्येव सर्वात्मना परिहेयमन्यायम् ! । नाऽस्त्येव किल पापपुण्य-विवेकावसरः ! ।

नाडिन्धमानामयं स्वभावो भवति यत्—परकीयशातकुम्भादल्पमल्पमंशमुद्धृत्य स्वकार्यं साधयितुं प्रवर्तन्ते । अतः स्तेयभावदूषितानां तेषामन्यायोपार्जितद्रव्यसंसक्तमन्नमभ्यवहर्तुं पुरातनाः स्वात्म-शुद्धिं कामयानाः सभ्यपुरुषा नोचितं मेनिरे । तादृशमन्नपानादिकं व्यवहर्तुं धर्मशास्त्राण्यपि नोपदिशन्ति । यथाऽत्र श्रूयते यत्—

पुरा कश्चन विजितेन्द्रियो योगी मुष्टिभिक्षां परिचरन्कस्याऽप्येकस्य विप्रस्याऽऽलये दूषितमामान्नं लभते स्म । ततोऽयमाश्रममागत्य कृतबलिवैश्वदेवादिनित्यक्रियः प्राणरक्षणमात्रपर्याप्तं हुतावशिष्टं किञ्चिदन्नं स्वयं बुभुजे । तस्मिन्दिने तस्य मनसि सहसा चौर्यप्रवृत्तिः स्तोकमुदपद्यत । परं चिरमभ्यस्तेन्द्रियजयप्रभावाज्जातविवेको महात्मा मनसो दुष्कर्म-प्रवृत्तिहेतुं विचारयन् तद्दिने भिक्षितं विप्रावसथमुपेत्य भिक्षापवर्जितस्याऽन्नस्योपलब्धिकारणं प्रत्येकं पृष्टवान् । तत्रैकेन ब्राह्मणेन स्वेनाऽपि भिक्षालब्धमन्नमस्मै समर्पितमासीत् । तद्वृत्तमाकर्ण्य तमपि विप्रमादाय तद्भिक्षित-गृहमुपेत्य तस्याऽन्नस्याऽऽयकारणं यतिस्तमपृच्छत् । तेनाऽपि पुनः केनचिदितरेण विक्रयिकेणाऽऽनीतमन्नं यथोचितमूल्येन क्रीतमासीत् । त्रयोऽपि पुनः सङ्गत्य कारणमन्विष्यन्तश्चौर्यलब्धं तदन्नं विक्रेतुः सकाशाज्ज्ञातवन्तः । तदन्नाशनेनोत्पन्ना च चौर्यप्रवृत्तिर्योगिनश्चेतसि तावत्कालमभवद्,यावत्पर्यन्तं तदन्नपरिणामो निःशेषतो न जातः ।"

एतावता संसर्गदोषादवश्यमुत्पद्यते महात्मनामप्यन्तश्चेतसि दुर्विकार इति स्पष्टमवगम्यते । साम्प्रतं तु स्वर्णकाराणां हिरण्याकर्षणकलाऽपि प्रतिदिनं वृद्धिमुपैति । तादृशसंसर्गदोषविवेकिनोऽपि नियतात्मानो योगिनः सज्जनाः प्रायशो न लभ्यन्ते ।

विरला एव स्युस्तादृशः सुकृतिनो ये साम्प्रतं विभवोपार्जने स्वल्पमप्यन्यायं नोपाश्रयेयुः॥ एवञ्च तादृशद्रव्यसञ्चितमन्नं क्रीत्वा निर्वहणेन कुतो नामाऽन्नादिकभोज्यविषयेषु पवित्रता? । यादृशमन्नादिकं भुज्यते, तदनुसारं मनो भवति । अन्तः करणवृत्त्यनुसाराणि च कर्माणि भवन्तीत्येवमुत्तरोतरकालुष्यप्रवाहः प्रतिक्षणं वर्धते। अत एव परावरज्ञैर्महर्षिभिराहारशुद्धिः प्राधान्येनोपदिष्टा।

पाचकः पाकस्थानं पक्तव्यपदार्थश्चेति विविधानि भवन्त्याहारशुद्धौ साधनानि । एतेषामन्योन्यसापेक्षं समसम्बन्धं भवति। पाचक—पावित्र्याभावे स्थानपावित्र्यमन्नपावित्र्यं वा सफलं न भवति । स्थानशुद्ध्यभावोऽपि निष्फलयति तयोः पावित्र्यम् । स्थानपाचक—शुद्धिं पुनरन्न—पावित्र्याभावः सुतरां दूषयति। शुद्धभावपवित्रोऽपि ब्राह्मणः सुपरिष्कृतपवित्रस्थले लक्षकोटि—पतीनां विद्याविनयसम्पन्नानां वा परमस्वच्छपाकशालायां पाचयतु यथानियममन्नं, परं तदन्नमूलभूतं द्रव्यं चेदन्यायोपार्जितमभिष्यत्तर्हि पवित्रता तत्र नैव सम्भाव्यते । न्यायोपार्जितद्रव्यक्रीतमप्यन्नं केनचिदवरवर्णपाचकेन सुपाचितं चेन्नहि तदपि तदुत्कृष्टजातीयानामन्तर्भावसुधारकं भवति । प्रत्यक्षमेवाऽनुभूयते यत्—सर्वथा शुद्धमपि खाद्यमन्नं भावशङ्कितं चेत्तदन्नाऽशनेनान्तर्मनसि विकारः प्राद्भवति। उद्भ्रान्तं च तदन्नं प्रायो जायते। किं पुनः शूद्रादिजघन्यजजातीयपाचितस्य भक्षणेन ?। मुख्यतस्तु भोज्यान्नविषयशुद्धिः सुतरां विचारणीया । अपवित्रमन्नं व्यवहरन्मानवः स्वात्मनोऽनिष्टं कुर्वाणो दारपुत्राद्यभ्यागतानामप्यन्तर्भावमवश्यमपवित्रं कारयति ।

तत्रापि पुनरिदानीन्तु पाश्चात्यसिक्षया प्रायः सर्वेषामन्तःकरणं भ्रान्तमिव विद्यते। तेन वैदेशिकानामभक्ष्यापेयविषयाणामिव समावेशोऽस्मदीयेष्वनेषु प्रवर्धमानो दरीदृश्यते। परिणामश्चाऽस्य मर्यादाऽवहेलनस्याऽत्यर्थं शोचनीयो भविता। सर्वैरिह सावधानैर्भवितव्यम् । अस्माकं संस्कृत धर्मशास्त्रेष्वत एव शरीरशुद्धि विधानं विशेषतो यत्र तत्र विस्तारित मस्ति। नाऽत्र तदशेषमुदाहर्तुमदुष्करमिति तत्र तत्र प्रियमहोदयैः स्वयमनुसन्धेयम् ।

शरीरशुद्धितोऽपि परममावश्यकमभ्यन्तरपावित्र्यं भवति । यदि न स्यादन्तःकरणशुद्धिर्मानवानां तर्हि शरीरशुद्धिस्तादृशफलदायिनी न भवति। यावत्पर्यन्तमन्तःकरणपवित्रता नोत्पाद्यते । तावदस्थिमांसरुधिरमये क्षणभङ्गुरे काये ममताबुद्धिः स्थिरतरा व्यवतिष्ठते।

शरीरमिदं पाञ्चभौतिकमस्ति। पृथिवीजल-तेजो-वायु-गगनानि पञ्चभूतानि कथ्यन्ते । तेषां पञ्चानां पञ्चपञ्चगुणसम्मेलनेनाऽयमतिकोमलः कायः सज्जीभवति । यथोक्तं गारुडे—

त्वगस्थिनाड्यो रोमाणि मांसं चैव खगेश्वर!
एते पञ्च गुणा भूमेर्मया ते परिकीर्तिताः।

**जलगुणाः—**

लाला मूत्रं तथा मज्जा वीर्यं रक्तं च पञ्चमम्।
अपां पञ्च गुणाः प्रोक्तास्तेजसोऽपि निशामय!।

**तेजोगुणाः—**

क्षुधा तृषा तथाऽऽलस्यं निद्रा, कान्ति, स्थैव च
तेजः पञ्चगुणं तार्क्ष्य प्रोक्तं सर्वत्र योगिभिः।

**पवनगुणाः—**

आकुञ्चनं धावनं च लङ्घनं च प्रसारणम्।
चेष्टितं चेति पञ्चैव गुणा वायोः प्रकीर्तिताः॥

**गगनगुणाः—**

घोषश्चिन्ताच शून्यत्वं मोहश्चिन्ता च संशयः
आकाशस्य गुणाः पञ्च ज्ञातव्यास्ते प्रयत्नतः।
एवं पञ्चविंशतिगुणग्रामसामग्रीभिर्निर्मिते कलेवरे किं नाम तादृशं पवित्रमस्ति वस्तु? । सर्वमेव वीभत्स-

मस्पृश्यं दुर्गन्धं घृणाजनकमेव दृश्यते । तादृशनिःसारक्लेदसमूहपुञ्जस्वरूपस्याऽस्य कायस्य प्रेमातिशयो यया भ्रान्त्या भवति, तादृशभ्रान्तिदूरीकरणेन बुद्धेर्निर्मलतोत्पादनमाभ्यन्तरशुद्धिनिदानम् । यावत्पर्यन्तमाभ्यन्तरशुद्धिर्न भवति, तावद्बाह्यशुद्धि-साहस्रेणाऽपि न हि किञ्चित्प्रयोजनमायाति ।

परन्तु बाह्यशुद्धौ पुनःपुनः प्रवर्तमानो जनः शरीरस्याऽनिवार्यामपवित्रतां, तथाऽन्यशरीराणां शुद्ध्यशुद्धिपरीक्षामनुभवितुं योग्यो भवति । यथा वारम्वारं पूयमानं मम शरीरमल्पकालेन पुनस्तादृशमेव मालिन्यमाप्नोति । तथा सर्वेषामपि शरीरं तादृशमेवेति बुद्ध्या परसंसर्गरुचिमरुचिरां मत्वा शरीरस्याऽपि विश्वासं न तथा कुरुते, यथा शुद्धिकामनाभावावस्थायाम् । एवं बाह्यशुद्धौ तृप्तिमलभमानो विवेकस्फुरितामन्तः—करणशुद्धिमारभते । तदेतावद्बाह्यशुद्धिफलम् ।

अन्तः करणशुद्धिः साधकानामलौकिकपरमानन्ददायिनी भवति । यदाऽन्तरशुद्धिर्जायते ततः प्रसन्नता, मनसः स्थैर्यमेकाग्रता, ज्ञानकर्मेन्द्रियाणां विजयश्चेत्यादयः पारमार्थिकगुणाः समुपलभ्यन्ते । ततः क्रमेण सत्त्ववृद्ध्या परमात्मनः साक्षात्कारयोग्यता सम्पद्यते । यथा—

ज्ञानह्रदे सत्यजले रागद्वेषमलापहे,
यः स्नातिमानसे तीर्थे सवै मोक्षमवाप्नुयात्

अन्तःकरणमलं नाम-काम-क्रोध-लोभ-मोह-मदमात्सर्यादयो दुर्जेया दोषाः । तत्प्रक्षालनाय साम्प्रतमिव वैदेशिक-क्षालकानि (साबुन) दन्तशोधकानि वा लोमाऽस्थिनिर्मितानि वस्तूनि न खलु स्तोकमपि पारयन्ति । न हि शरीर-शुद्धिसाधनमात्रेणाऽन्तरिक-शुद्धिर्भवति । यदुक्तम्—

आत्मा नदी संयमपुण्यतीर्था
सत्योदकं शीलतटा दयोर्मिः ।
तत्राभिषेकं कुरु पाण्डपुत्र !
न वारिणा शुध्यति चान्तरामा ॥

मानवैः सततमात्मविचारः करणीयः । चित्तप्रसादनोपायो योगदर्शनसूत्रेण पतञ्जलिना समुपदिष्टः—

( क्रमशः )

---

## अखिल-भारतीय-संस्कृत-साहित्य-सम्मेलनस्य
### द्वादशाधिवेशने

# स्वागत-भाषणम्

अयि जगद्वन्द्या माननीयाः सुरसरस्वतीसमाराधनप्रथितयशसो विद्वद्धौरेयाः !

अद्य खलु महत्सौभाग्य-विलसितमस्माकं काशीनिवासिनां संस्कृतप्रणयिनां, यदस्यां संस्कृत-भाषाप्रधानदुर्गभूतायां वाराणस्यां विविधानवद्यविद्याविद्योतितान्तःकरणानां सुरभारती-संरक्षण-बद्धपरिकराणां महनीयचरितानां नानादेशवास्तव्यानां तत्रभवतां श्रीमतां विद्वद्धुरीणानां शुभागमनं सम्मेलनञ्च वरीवर्ति ।

एष खलु पुरातनकालप्रचलितो नियमो यद् राष्ट्रस्य, समाजस्य, साहित्यस्य, धर्मस्य च परिस्थितिमवलोक्य, भारतीयाः पूज्यचरणा ब्राह्मणा विद्वांसश्च यत्र कुत्राऽपि पुण्यक्षेत्रेषु सम्मेलनं कृत्वा,

तेषां सुव्यवस्थायै संरक्षणाय च स्वीयान् विविधान् विचारान्प्रकटयन्ति स्म। सर्वसम्मत्या सिद्धान्तितान्विचारांश्च निश्चित्य देशे-देशे प्रचारयन्तिस्म। अतएव वहुशः पुण्यतीर्थेषु धर्माचार्याणां, ब्राह्मणानां, विदुषां, च सम्मेलनानि साम्प्रतमपि प्रचलन्तीति दरीदृश्यते।

तमेव च नियममनुसृत्य सुरभारतीप्रणयिनां महतां विदुषां समुद्योगेन सर्वतः संरुद्धप्रसराया भगवत्याः सुरभारत्याः सर्वाङ्गीणसमभ्युदय-सम्पादनाय संस्कृत-साहित्य-सम्मेलनस्य संस्थापनं समभूदिति विदितमेव विदितवेदितव्यानां विद्वद्वराणाम्। तस्य चास्मिन्द्वादशाधिवेशने सम्मिलितानां तत्तत्प्रान्तनगरप्रतिनिधिभूतानां श्रीमतां शुभागमनम्,—काशीस्थानां सुरभारती-प्रणयिनां सौभाग्य-विजृम्भितमेव। सुप्रथितयशः-सौरभ-सुरभितदिग्दिगन्तानां नानाशास्त्राटवी-सञ्चरण-पञ्चाननानां महनीयानां श्रीमतां स्वागतसम्पादनविधौ विनियुक्तोऽहं धन्यम्मन्यः सौभाग्यभाजनमात्मानं मन्ये।

श्रीमतां सपर्या-सम्पादनं नातिसुकरम्। श्रीमतां समागमनसुखेन परिपूर्णं हृदयम्। किं व्याहरामि। परित्यक्तविविधकार्य-कलापानां समयव्ययायासादिक्लेशपरम्परामनुभवतां श्रीमताम्परिचरणं विधातुं यद्यपि न सम्यक्पारयतीयं स्वागतसमितिस्तथापि दयालवो विद्वन्मूर्धन्याः श्रीमन्तः स्वागतसमितेर्यथासम्पादितम्परिचरणं स्वीकृत्य नूनं सहजया करुणया तामनुग्रहीष्यन्ति।

वाराणसी हि नाम न केवलं भारते वर्षे; निखिलेऽपि भूमण्डले संस्कृतविद्याप्रधानपीठत्त्वेन विजयतेतमाम्। पण्डित-प्रकाण्डानां श्रीमतां पुरस्तात् किमहं वाराणस्या महत्त्वं प्रख्यापयामि। अस्यां वाराणस्यां भगवतो विश्वेश्वरस्य महत्यानुकम्पया समालोक्यते स्थाने-स्थाने संस्कृतविदुषाम्, छात्राणाम्, विद्यालयानाम्, सत्राणाम्, छात्रालयानाञ्च स्थितिः। साम्प्रतमपि करालेऽस्मिन्कलिकाले सर्वतो निरुद्धप्रचाराया भगवत्याः सुरगिरः किञ्चिदिव प्रचारः समालक्ष्यते। अत्र-भिन्नभिन्नदेशवासिनां विदुषां महान्समुदायो वरीवर्ति। तदत्र संस्कृत-मन्दिरे संस्कृत-साहित्यसम्मेलनस्याऽधिवेशनं नितरां महत्वपूर्णं गौरवास्पदञ्च वर्तते। ततोऽपि निखिल-भारतीयानां विदुषां समागमः सुवर्णे सुगन्ध इव प्रतीयते। अतो वयं भृशमाशा-सम्भारपूर्णेन चेतसा सम्मेलनस्य साफल्यं सम्भावयामः।

संस्कृतभाषा हि नाम भारतवर्षस्य आर्यजातेश्च गौरवम्। अनयैव दिव्यया गिरा भारतीयास्त्रिकालदर्शिनो महर्षयो ज्ञान-विज्ञानराशीन् वेदान्, दर्शनानि, धर्मशास्त्राणि, अर्थशास्त्राणि, पुराणानि, काव्यानि च प्रणीतवन्तः, यानि साम्प्रतमपि व्यतीतेषु परःसहस्रवर्षेषु, न केवलमस्मत्-पूर्वजानामपित्वाधुनिकानामपि हिन्दूनामधारिणां सर्वेषां गौरवमभिवर्द्धयन्ति। तान्येवाऽस्माकमक्षयनिधिभूतानि, सभ्यताप्रदर्शकानि शास्त्राणि कालक्रमेण वा, दैवदुर्विपाकतो वा, अस्माकमालस्येन वा, यथाकथमपि वा शनैः शनैर्न केवलं ह्रासमापद्यन्ते; प्रत्युत विस्मृतिपथमुपगच्छन्ति। संस्कृत-वाङ्मय-महार्णवे कियन्ति महार्हाणि शास्त्ररत्नानि दिव्येन प्रकाशेन दीप्यन्तेस्म, परमद्य तेषां नामान्यपि कोऽपि न जानातीति कियतीयं महती त्रुटिः। अस्याः सम्पूरणं नितरामावश्यकम्। तत्सम्मेलनेन सर्वप्रथमं विलुप्तप्रायाणां संस्कृतशास्त्राणां पुनरुद्धारे प्रबलः प्रयत्नो विधेयः। पाश्चात्यविदुषामत्र महान्तं प्रयत्नं दृष्ट्वा वयं लज्जिता भवामः।

अपरं संस्कृत-शिक्षण-परीक्षण-प्रकारोऽपि साम्प्रतं विशृङ्खलित एवाऽऽस्ते। प्रचलितसंस्कृतशिक्षण-प्रणा-

ल्यां परीक्षणप्रकारेण च देशकालोपयोगित्वं नितरामावश्यकमस्ति । तदभावादेव साम्प्रतिकाः संस्कृत-पण्डिता देशस्य, समाजस्य, साहित्यस्य, धर्मस्य च समुन्नयने प्रचारणे चासमर्था एव सन्तिष्ठन्ते । किम्बहुना, ते स्वोदरं पूरयितुमपि न समर्था भवन्ति। सभासु, समाजेषु, उपदेशकालेषु, अन्येषु च विविधेषु कार्येषु मूका इव सन्तिष्ठन्ते । तदस्मिन्विषयेऽपि सम्मेलनेन पाठ्य-प्रणालीपरिवर्तने शिक्षण-परीक्षणादिविषये च कश्चन विशिष्टः समुपयुक्तश्च प्रकारो निश्चेतव्यः। येन ते समुन्नताः समादृताश्च भवेयुः।

एवमेव प्राचीन-संस्कृत-ग्रन्थानां सङ्ग्रहणे, प्राचीनविदुषां स्मृतिचिह्न-जीवनचरित्रादिसङ्ग्रहणेऽपि च सम्मेलनेन विशिष्टो दृष्टिपातः कर्तव्यः। इतिहासविरहिते भारते न जाने कियतां महापुरुषाणां कीर्तयो लुप्ताः सन्तीति न ज्ञायते। प्राचीनानां कीर्ति-संरक्षणं हि साम्प्रतिकानामस्माकं यशोऽभिवर्द्धयितुमलं भवेत्। तदत्राऽपि सम्मेलनस्य प्रयत्नो नितरामावश्यकः।

संस्कृत-साहित्ये इतिहासस्य महती त्रुटिरपि चेतसि गाढं खटखटायते । इतिहासाभावात् संस्कृतसाहित्यक्षेत्रे महानन्धकारो दृश्यते । इतिहासाभावादेव मन्ये संस्कृतशास्त्राणां लोपो भवति। संस्कृत-साहित्यस्येतिहाससङ्कलनं तस्य च सर्वत्र संस्कृत-परीक्षासु प्रचारणं सम्मेलनस्य सर्वप्रथमं कर्तव्यम्।

एवमेव सन्ति बहूनि कर्तव्यानि संस्कृत-साहित्य-सम्मेलनस्य । यथा— संस्कृत-पुस्तकालय-स्थापनम्, शिक्षा संस्कारः, पत्र-प्रचारः, गवेषणम्, नवीन-शब्द-कोषनिर्माणमित्यादि-विविधकार्याणि सम्मेलनस्य कर्तव्यकोटौ प्रविष्टानि सन्ति। परं सम्मेलनेन क्रमश एकैकस्मिन्विषये परया भक्त्या, गम्भीरेण च प्रयत्नेन महान्परिश्रमो विधेयः।

साम्प्रतं संस्कृतभाषाया उपरि महतीनां शक्तीनां विद्यन्ते महान्त्याक्रमणानि । प्रत्यहं प्रतिक्षणञ्च सर्वतोऽस्या ह्रासः समालोक्यते । जनताया: श्रद्धाऽप्यत्र शैथिल्याभिमुखी प्रत्यक्षीक्रियते।

साम्प्रतं द्वादशवर्षानन्तरं द्वितीयेऽस्मिन् युगे प्रविविक्षता सम्मेलनेन स्वोद्देश्यपूर्तये साम्प्रतं चिरानुबद्धमालस्यमपहाय स्वार्थ-त्यागपुरस्सरं तथा प्रयतनीयं यथा संस्कृतज्ञानां जीवनं सुरक्षितं स्यात्, संस्कृतभाषा चेयं भारतमातुः सौभाग्यमभिवर्द्धयन्ती भारतीय-सभ्यतां गौरवञ्च वर्द्धयेत् । संस्कृतभाषा, सनातनोधर्मः, द्विजातयश्चेति त्रयाणां वर्तते घनिष्ठो महिष्ठश्च सम्बन्धः। तदेकस्याः संरक्षणेन, समुन्नयनेन, प्रचारणेन च त्रयाणां समुन्नतिः संरक्षणञ्च सिद्धं स्यात्।

एतावदेव सविनयं निवेदनं कुर्वन्नहं स्वीयं भाषणमुपसंहरामि। परमन्ते सविनयं सानुरोधञ्च संप्रार्थये—सहयोगं विना किमपि कार्यं न सेत्स्यति। इदानीं यावद् यद् यद् गतम्, या या च दुर्दशाऽस्माकं सर्वेषां समजनि, यद् यच्च साम्प्रतमनुभूयते कष्टम्, तत्सर्वं संघशक्तेरभावेनैव । भारतीयेषु सङ्घशक्तेः सहयोगस्य च विद्यते महती त्रुटिः । तत्रापि संस्कृतज्ञेषु तु सङ्घटनस्य भावोऽतितरां दुर्लभ इत्यस्माभिः सर्वत्र दृश्यते, श्रूयते, अनुभूयते च। एतस्यामप्यवस्थायां यदि वयं स्वीयं स्वीयं स्वरं स्वातन्त्र्येणाऽऽलपिष्याम-श्चेत् किमपि कार्यं दुष्करमेव । तस्मिन्विषये सर्वत्रैव विद्यते महान्प्रवादो यत् संस्कृतज्ञा न कदाऽपि सङ्घीभूय कार्यं कर्तुं शक्नुवन्तीति। एतस्य किं कारणमिति विस्तृतोऽयं विषयः । परमस्य प्रधानं कारणं पारस्परिकी स्पर्द्धा, अवलेपो वा । एतदेव समुन्नतेर्महत् प्रतिबन्धकम् । तदपहाय सर्वं पारस्परिकं उच्चावचत्वम्, महत्वाकाङ्क्षाञ्च सन्त्यज्य दूरे, श्रीमद्भिः सर्वैः सुरभारतीप्रणयेन, प्रेम्णा, गाम्भीर्येण, धैर्येण, शान्त्या, परिश्रमेण च कार्यं विधेयम्, येन सम्मेलनस्य साफल्यं सुतरां सम्भवेदिति।

अन्ते च पुनरपि स्वागतसम्बन्धिनीनां त्रुटीनां कृते स्वीयमसामर्थ्यं प्रकटयन्नहं तदर्थं क्षमाप्रार्थनञ्च कुर्वन् श्रीमतामाशीर्वादानभिलषामि, विरमामि च।

(राजा) मोतीचन्द्रः




[ नि०—श्रीयुतपञ्चाननतर्करत्नमहोदयाः। ]



( गताङ्कादग्रे )

गणधर्मश्च महाभारत—शान्तिपर्वणि सप्ताधिकशततमाध्याये प्रोक्तः। यथा—

गणानाञ्च कुलानाञ्च राज्ञां भरतसत्तम!।
वैरसन्दीपनावेतौ लोभामर्षौ नराधिप!॥
लोभमेको हि वृणुते ततोऽमर्षमनन्तरः।
तौ क्षयव्ययसंयुक्तावन्योन्यञ्चविनाशिनौ॥

'अनन्तर' इत्यत्र, 'अनन्तर' मितिपाठे 'अन्य' इति कर्तृपदमूह्यम्। एकस्य लोभे तज्ज्ञानादन्यस्मै क्रुध्यति। क्षयो विनाशमूलम्। व्ययोऽपचयमूलम्। हेतुहेतुमतोरभेदात्। क्षयः सङ्घातनाशः। व्ययस्तद्धानिरिति वा। तदुभयसंयुक्तौ तौ लोभि-क्रोधिनावन्योन्यं विनाशयत इत्यर्थः

"तत्राऽदानेन भिद्यन्ते गणाः सङ्घातवृत्तयः।
भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात्॥
भेदे गणा विनाश्या हि भिन्नास्तु सुजयाः परैः।
तस्मात्सङ्घातयोगेन प्रयतेरन् गणाः सदा॥
अर्थाश्चैवाऽधिगम्यन्ते सङ्घात-बलपौरुषैः।
बाह्याश्च मैत्रीं कुर्वन्ति तेषु सङ्घात-वृत्तिषु॥
ज्ञानवृद्धाः प्रशंसन्ति शुश्रूषन्तः परस्परम्।
विनिवृत्ताभिसन्धानाः सुखमेधन्ति सर्वशः॥"

गणैश्च गणमुख्यनिदेशे स्थातव्यमित्ययमन्यो धर्मः।
उक्तञ्च तत्रैव—

प्राज्ञान्शूरान्महोत्साहान्कर्मसु स्थिरपौरुषान्।
मानयन्तः सदायुक्ता विवर्धन्ते गणा नृप!॥

मुख्याऽभावे मुख्यनिदेशाऽकरणे च दोषस्तत्रैवोक्तः—

क्रोधो भेदो भयं दण्डो निग्रहः कर्षणं वधः।
नयत्यरिवशं सद्यो गणान्भरतसत्तम!॥
तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः॥

गणमुख्यधर्मस्तत्रैवोक्तः—

धर्मिष्ठान्व्यवहारांश्च स्थापयन्तश्च शास्त्रतः।
यथावत्प्रतिपश्यन्तो विवर्धन्ते गणोत्तमाः॥
पुत्रान्भ्रातॄन्निगृह्णन्तो विनयन्तश्च तान्सदा।
विभीतांश्च प्रगृह्णन्तो विवर्धन्ते गणोत्तमाः॥
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत!।
गणमुख्यैस्तु सम्भूय कार्यं गणहितं मिथः॥

गणानां मिथो भेदे कर्तव्यमुक्तं तत्रैव—

तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठताम्।
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः॥
कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः।

गोत्रस्य नाशं कुर्वन्ति गणभेदस्य कारकम् ॥
आभ्यन्तरं भयं रक्ष्यमसारं बाह्यतो भयम् ।
आभ्यन्तरं भयं राजन्सद्यो मूलानि कृन्तति ॥

यथा च गणमध्ये धर्मिष्ठव्यवहारस्थापनं, समदृष्टिः, अपराधिनां पुत्रादीनामपि निग्रहः, निगृहीतानां सुशिक्षणम्, सुशिक्षितानां सङ्ग्रहः, गणहितार्थं मन्त्रणां, मन्त्रगुप्तिः मिथोविरोधिनां गणानां निग्रहः, इत्येते गणमुख्य-धर्माः गणविशेषप्रयोजनं तत्रैवोक्तम्—

द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु संमूढान्गणाः सन्तारयन्ति ते ॥

अथ प्रसङ्गागता गणद्रव्यहरणापराधाद्योऽभिधीयन्ते । यथाह याज्ञवल्क्यः—

"गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः ।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत् ॥"
(२ य० अ० १९०)

मनुश्च—

"यो ग्रामदेशसङ्घानां कृत्वा सत्येन सम्विदम् ।
विसम्वदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत् ॥"
(८ म० अ० २१९)

अलब्धराजदण्डस्य त्वविनष्टपापस्य सुतरां प्रायश्चित्तार्हत्वं 'दण्डश्चरति पापहा' (७ म. अ. २५) राजभि र्धृतदण्डाश्च (८ म. अ. ३१८) इत्यादिना दण्डस्य—

अकामतः कृतं पापं वेदाभ्यासेन शुध्यति ।
कामतस्तु कृतं मोहात्प्रायश्चित्तै पृथग्विधैः ॥
(११ अ. । ४६)

इत्यनेन च मनुना प्रायश्चित्तस्य पापनाशकत्वेनाऽभिधानात् । दण्डप्रायश्चित्तयोरभावे तु व्यवहार एव प्रतिषिद्धः । यथा—

प्रायश्चित्तीयतां प्राप्य दैवात्पूर्वकृतेन वा ।
न संसर्गं व्रजेत्सद्भिः प्रायश्चित्तेऽकृते द्विजः ॥
(मनुः ११ । अ. ४१)

एवमन्यत्राऽपि याज्ञवल्क्यः—

"कर्तव्यं वचनं सर्वैः समूहहितवादिनाम् ।
यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम् ॥
समूहकार्य्य आयातान्कृतकार्यान्विवर्जयेत् ।
सदानमानसत्कारैः पूजयित्वा महीपतिः ॥
समूहकार्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ नाऽर्पयेत्स्वयम् ॥"
(२ य. अ. १९१-९३)

महीपतिरिति सम्भवाभिप्रायेण । कैमुतिकन्यायेन तदितरस्य गणकार्यसिद्ध्यर्थमाश्रयणीयपात्रस्याऽपि तत्र ग्रहणं, सामर्थ्यात् । समूहकार्यार्थमागतानां कार्यसाधनमधिकृतेनाऽवश्यं कर्तव्यमित्यावेदयति 'कृतकार्यान्विसर्जयेदि' ति ।

उद्देशज्ञानानिरपेक्षो निरुक्तानेकप्रयत्नसाध्यधर्मश्च विभक्तानां भ्रातॄणां पितृस्वर्गोद्देशिनां प्रत्येकमनुष्ठेयं पार्वणादि कर्म, दिङ्मात्रमेतत् ।

एकोद्देशानेकपुरुषप्रयत्नसापेक्षधर्मेतरधर्मोऽपि सामान्यविशेषभेदाद्द्विविधः । तत्राऽऽद्यमाह विष्णुर्द्वितीयाऽध्याये—

"क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥
आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥"

अयमेव संक्षिप्य मनुना दर्शितो यथा दशमाध्याये—

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः ।
एवं सामासिकं धर्मं चातुर्वर्ण्येऽब्रवीन्मनुः ॥"
(६३)

'चातुर्वर्ण्य' इति प्राधान्याभिप्रायेण, प्रकरणसामर्थ्यायुक्तेरविशेषाद्, —गृह्यमाणमहाभारत—वचनैक वाक्यत्वाच्च सर्वेषामेव मानवानामयं धर्मो वेदितव्य । 'सामासिक' मित्यस्य सङ्क्षेपेण इत्यर्थः । महाभारतवचनं यथा शान्तिपर्वणि पञ्चषष्टितमाध्याये—

यवनाः किराता गान्धाराश्चीनाः शबरवर्बराः।
शकास्तुषाराः कङ्काश्च पह्लवाश्चान्ध्रमद्रकाः॥
पौण्ड्राः पुलिन्दा रमठाः काम्बोजाश्चैव सर्वशः।
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः॥
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः।
मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः॥

इतीन्द्रं प्रतिमान्धातृ—प्रश्नः। अस्यार्थः—"यवनादिकाम्बोजान्ता जातयश्च ब्रह्म क्षत्र–वैश्य शूद्रा, वर्णाश्च दस्यवश्च, तद्वृत्तयश्चैवं प्रभृतयः सर्व एव मानवाः कीदृशं धर्ममाचरिष्यन्ति, ते खलु कीदृशे धर्मे राज्ञा मयास्थापनीया" इति।

इन्द्र उवाच—

"मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः।
आचार्य-गुरुशुश्रूषा तथैवाऽऽश्रमवासिनाम्॥
भूमिपानाञ्च शुश्रूषा कर्तव्या सर्वदस्युभिः।
वेदधर्म–क्रियाश्चैव तेषां धर्मो विधीयते॥
पितृयज्ञास्तथा कूपाः प्रपाश्च शरणानि च।
दानानि च यथाकालं द्विजेभ्यो विसृजेद्यदा॥
अहिंसा सत्यमक्रोधो वृत्तिदारानुपालनम्।
भरणं पुत्रदाराणां शौचमद्रोह एव च॥
दक्षिणा सर्वयज्ञानां दातव्या भूतिमिच्छता।
पाकयज्ञा महार्हाश्च दातव्याः सर्वदस्युभिः॥
एतान्येवम्प्रकाराणि विहितानि पुराऽनघ!।
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव!" इति।

अस्यार्थः—मातापितृसेवा, अस्याचार्यादि–सेवा, ब्रह्मचारिप्रभृति सेवा, गुर्वन्तरसेवा राजशुश्रूषोपलक्षिता राजभक्तिः, यस्य कस्यचित्पुरुषस्य वेदोक्तधर्मे यज्ञादावुपस्थिते वर्णधर्मानतिक्रमेण तत्साहायकरूपा क्रिया, इत्येवं वेदधर्मक्रिया, वेदधर्मो ब्रह्मचर्यं, तदनुकूलक्रियाः सर्वेन्द्रियसंयमरूपा, इति वा। पितृयज्ञ–जलाशय–प्रपाशय्या–पाठशालोत्सर्गाः, द्विजसम्प्रदानक–वनादिदानम्। अहिंसा-सत्य क्रोधाः, जात्युचितवृत्तिरक्षा—द्वाराऽधिकार नियमप्रतिपालनं पुत्रदाराणां भरणं, शौचं, अद्रोहः, यज्ञार्थं दक्षिणादानं पाकयज्ञाश्चेति सर्वमानवसाधारणधर्माः। दस्युभिरप्ययं सेव्यः। तस्मादहिंसादयः सर्वमानवसाधारणा धर्मा इति सिद्धम्। अहिंसादीनां सर्वप्राणिसाधारणप्रीतिप्रतिष्ठानां मातापितृसेवादिरूपभक्तिधर्मव्याप्यतया मनुना व्याप्यानामेव ग्रहणं, व्यापकानां तदधीनत्वात्।

विष्णुसूत्र-महाभारतयोस्तु व्याप्यव्यापकप्रपञ्चस्य श्रोतृ बुद्धिवैशद्यार्थमित्येतावन्मात्रं विशेषः। ये तु कुलपारम्पर्येण मोहबलाच्छ्रुतिस्मृतिप्रामाण्यमनभ्युपगच्छन्तो जातिपतिताः सुतरां द्विजातिबाह्यास्तेषां, दर्शश्राद्धादिरूपपितृ—यज्ञाष्टकादिरूपपाकयज्ञादावधिकारो नास्ति। म्लेच्छादिस्वरूपमेतादृशशूद्रमभिप्रेत्य मनुना दशमाऽध्याये १२६ श० वचने तथैव प्रतिपादितत्वात्। तद्यथा—

"न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति।
नाऽस्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम्॥"

अस्यार्थः—शूद्रे शूद्रविशेषे–म्लेच्छादिस्वरूपे पातकं नास्ति, जातिपतितत्वात्। "किं नाम कर्मास्ति यत्ततोऽपि तं पातयेदि" ति जातिनिन्दार्थवादोऽयम्। तत्र कुलपारम्पर्येण श्रुति–स्मृतिप्रामाण्यानभ्युपगन्तरि संस्कारः पितृयज्ञादिधर्माधिकारश्च नास्ति। यद्यसावहिंसादिलक्षणं धर्ममनुतिष्ठेत्। अनुतिष्ठतु नाम, नासौ निषेद्धव्यः, तेनाऽपि तस्य क्रमोत्कर्षसम्भवात्।

नन्वेतद्वचने शूद्रस्य म्लेच्छादिरूपाऽधर्मशूद्रपरत्वे किं मानमिति, चेदनन्तर–वचनमेवेति। तथाहि—

धर्मेप्सवस्तु धर्मज्ञाः सतां वृत्तिमनुष्ठिताः।
मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च॥

अत्र 'तु'-कारस्य प्रागुक्तशूद्र–व्यवच्छेदार्थतया प्रागुक्तशूद्रा धर्मबहिष्कृता म्लेच्छाद्या इत्यर्थः सिद्धः।

धर्मज्ञा इत्यनेन श्रुतिस्मृतिप्रामाण्याभ्युपगन्तृत्वं सिद्धम् । नहि तदनभ्युपगन्तारो धर्मज्ञा भवन्ति । "सतां वृत्तिमनुष्ठिता" इत्यनेन सन्त, अनिषिद्ध त्रैवर्णिकाचारोपेताः पितृपितामहानामाचारेणाऽनुवर्तमाना इत्यर्थलाभः ।

"येनाऽस्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न रिष्यति ॥" इति ।

चतुर्थाध्यायवचनान्तरेण पितृपितामहसेवितसत्पथानुसरणस्य कर्तव्यतया प्रतिपादनात् । कर्तव्यतया 'शास्त्रप्रतिपादिताचारस्य च निर्विवादसद्वृत्तित्वात् । "धर्मेप्सव" इत्यनेन शूद्राणां पितृयज्ञ—पाकयज्ञादिरूपमन्त्रसाध्य कर्माधिकारे तत्रतत्राऽनुरागोऽप्येको हेतुरिति सूचितम् । कुल्लूकभट्टादयस्तु—'न शूद्रे पातकं किञ्चिदि'ति वचने शूद्रं पदं शूद्रसामान्यपरतया पातकमिति लशुनादिभक्षणजनितपापपरतया व्याचक्षते, तन्न मनोरमम् । एतद्वचनावगतार्थानां द्वि—जातीनां लशुनादि—भक्षणं निषेधतो द्विजातेरेवोपनयनादिकं विदधतश्च वचनान्तरस्य प्राप्त्या पुनः प्रतिपादनस्य वैयर्थ्यात्स्मृत्यन्तर—विरोधाच्च । तथाहि—अभक्ष्य भक्ष्यानुवृत्तौ प्रायश्चित्तविवेकादिधृतविष्णुवचनं—

"विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम् ।
वैश्येऽर्धं पादशेषस्तु शूद्रजातिषु शस्यते ॥"

अत्र लशुनाद्यभक्ष्यभक्षणे यत्प्रायश्चित्तमुक्तं, तत्सम्पूर्णं ब्राह्मणस्य । क्रमेण पादपादहान्या शूद्रस्य पाद इति विधीयेत । तथा च अभक्ष्यभक्षणे शूद्रस्याऽपि पातकं विष्णोरभिमतम् । किञ्च मलानां मद्यानाञ्च भक्षणे चान्द्रायणं कुर्यात् । लशुन—पलाण्डु—गृञ्जनैतद्गन्धिविड्वराह—ग्राम्यकुक्कुट—वानर—गोमांस-भक्षणे चेत्यभिधाय—

"सर्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते भूयः संस्कारं कुर्याद्धि" इति विष्णूक्तम् । अत्र यदि लशुनादिभोजनं शूद्रस्य पातकं न स्यात्, द्विजानामितिविशेषाभिधानपूर्वकं पुनः संस्कारविधानमसङ्गतं स्यात् ! । न ह्यद्विजानामुपनयनसंस्कारः सकृदपि वृत्तो येन पुनः संस्कारः सम्भाव्येत ! । तस्माच्चान्द्रायणमिति सर्ववर्णसाधारणप्रायश्चित्तं, द्विजानां पुनरुपनयनञ्चेति विशेषः । तस्मात्सच्छूद्राणां लशुनादिभक्षणेऽपि पातकमस्तीति विष्णुमतं प्रतीयते । अत्र यदि लशुनादिभक्षणजपातकं शूद्रजातिसामान्ये नास्तीति व्याख्यायते, विष्णु स्मृतिविरोधो दुर्वारः स्यात् । ननु—

छत्राकं विड्वराहञ्च लशुनं ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥

इति मनुना द्विजस्य पतनमुक्तम् । न तु शूद्रस्येति तद्विरोधाद्विष्णुमतमेव सङ्कोचनीयमिति चेन्न । लशुनादिगोमांसान्तभक्षणप्रायश्चित्तविधायकस्यैकस्य विष्णुसूत्रस्य द्विजमात्रप्रायश्चित्तपरत्वे गोमांसभक्षणेऽपि शूद्रस्य प्रायश्चित्ताभावप्रसक्त्या सर्वशिष्टाचारविरोधात् ।

"एतेऽन्त्यजाः समाख्याता येचाऽन्ये च गवाशनाः" इत्यनेन (१ म अ०) व्याससंहितायां गवाशनशूद्राणामन्त्यजत्वाभिधानासङ्गतेश्च । "सतां वृत्तिमनुष्ठिता" इत्येन शूद्राणामनिषिद्धत्रैवर्णिकाचारपालनस्य मनूक्तत्वेन कुल्लूकभट्टादिनैव व्याख्यातत्वाच्च । मनुसंहितायां यत्—"पतेद्द्विज" इत्याद्यभिहितं, तद्द्विजानां प्रायश्चित्तगौरवरोधनाय । तस्मात्कुलपारम्पर्येण श्रुतिस्मृतिप्रामाण्यानभ्युपगन्तॄणां म्लेच्छादिरूपाणां द्विजबाह्यानां न पितृयज्ञाधिकारः । अहिंसादिधर्माधिकारस्त्वस्त्येव । श्रुतिस्मृतिप्रामाण्याऽभ्युपगन्तॄणां कुलपारम्पर्येण सदाचाराणां शूद्राणान्तु पितृयज्ञादावप्यधिकार इति सिद्धम् ।

यद्वा शूद्रे उपनयनाभावाद्विहितानुष्ठानात्पातकं नास्ति । यतस्तस्योपनयनसंस्कारे अधिकार एव नास्ति,

तदतिरिक्ते विहितक्रियारूपे धर्मे च नित्याधिकारो नास्ति। न धर्मप्रतिषेधः। तस्माद्विहितक्रियायां शूद्रस्य काम्याधिकार इत्ययमेव न शूद्रपातकं किञ्चिदि त्यादि वचनार्थः। नाऽस्य धर्मेऽधिकारोऽस्तीत्यत्राऽधिकारपदस्य नित्याधिकारपरत्वं स्फुटीकर्तुमुत्तरपदमाह 'धर्मेप्सव' इति। ये हि निषिद्धाचरणनिरता धर्मकामाः शूद्रा विहितमनुतिष्ठन्ति, ते सच्छूद्रा इत्युच्यन्ते। हिंसाऽनृतस्तेय—क्रौर्याभोज्य-भोजन-पारदार्यादीनां प्रतिषिद्धतया तद्वर्जनरूपाहिंसादिधर्मे सर्वेषामेव मानवानां नित्याधिकार इति सूचयितुं मनुना तत्पञ्चकमेव गृहीतमिति भावः।

अत्र सत्यं प्रधानम्। यथाह श्रुतिः—"सत्येनोत्तभिता भूमिरि" ति (ऋग्वेद ८ अष्टक. ३ य. अ. २० वर्गः। उत्तभिता—अभ्युदयं प्राप्ता। भूमिरिति-स्थानेन स्थानिग्रहणम्। ग्रामं दण्डयेदितिवत्। उत्तभिता सफलेति सायनाऽऽचार्यः।

विष्णुः—

अश्वमेधसहस्रञ्च सत्यञ्च तुलया धृतम्।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते॥
(८ म० अ०)

व्यासः—

'नास्ति सत्यात्परो धर्मो नाऽनृतात्पातकं परम्।"
(महा भारतस्य शान्तिपर्वणि १६२ अध्याये)

सत्यं नाम—अनृतवर्जनम्। वस्तुनो यदयथाभावज्ञापनं तदनृतमिति। ज्ञानकृतादिभेदादनृतं नानारूपं भवति। तत्प्रपञ्चः प्रायश्चित्तसिद्धान्ते वक्ष्यते। इदं हि सत्यं वचनावचनसाधारणम्। सत्यवचने विशेषमाह मनुः—

"सत्यं ब्रूयात्प्रियं ब्रूयान्नब्रूयात्सत्यमप्रियम्।
प्रियञ्च नाऽनृतं ब्रूयादेष धर्मः सनातनः"॥
(४ अ०)

अत्र प्रियाप्रियशब्दौ लोकप्रिय—तद्विद्विष्टवचनौ। तथा च परपीडानावहमिति प्रियशब्दार्थः। अन्यथा-

प्रियसत्यस्य वक्तव्यत्वे दस्यौ श्रोतरि हिंसाफलकसत्यवचनस्याऽपि वक्तव्यतापत्तिः। न चेष्टापत्तिः? महाभारतीयश्रीभगवदुक्तिविरोधात्। तथाहि—

"कौशिको ह्यभवद्विप्रस्तपस्वीनो बहुश्रुतः।
नदानां सङ्गमे ग्रामाददूरात्स किलाऽवसत्॥
'सत्यं मया सदा वाच्यमि' ति तस्याऽभवद्व्रतम्।
सत्यवादीति विख्यातः स तदाऽऽसीद्धनञ्जय!॥
अथ दस्युभयात्केचित्तदा तद्वनमाविशन्।
तत्राऽपि दस्यवः क्रुद्धास्तानमार्गन्तु यत्नतः॥
अथ कौशिकमभ्येत्य प्रोचुस्ते सत्यवादिनम्।
कतमेन पथा याता भगवन्बहवो जनाः॥
स पृष्टः कौशिकः सत्यं वचनं तानुवाच ह।
ततस्ते तान्समासाद्य क्रूरा जघ्नुरिति श्रुतिः॥
तेनाऽधर्मेण महता वाग्दुरुक्तेन कौशिकः।
गतः स कष्टं नरकं सूक्ष्मधर्मेष्वकोविदः॥" इति।
(कर्णपर्व ६९ अ०—५३)

तथा च परपीडानावहस्यैव सत्यस्य प्राधान्यं पर्यवसितम्। यत्तु क्वचिदहिंसायाः सर्वधर्म-प्राधान्यमभिहितं, तत्प्रायेण हिंसा—फलकसत्यमपेक्ष्य वरमहिंसा फलकमनृतमित्येतद्बोधनाय। तथाविधसत्यस्य लोकधारकत्वाभावादितरस्य च तद्भावात्। यथाह महाभारतम्—

'यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः।
अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम्॥
धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः॥"

सत्यस्य प्राधान्यन्तु सत्त्वप्रकर्षजनकतया सकलाधर्महेतुभूततमसो निरोधनेन (कर्णपर्व ६९ अ० ५८। ५९।) यथाह महाभारते शान्तिपर्वणि १९० तमाध्याये व्यासः—

"सत्यं ब्रह्म तपः सत्यं सत्यं विसृजते प्रजाः।
सत्येन धार्यते लोकः स्वर्गं सत्येन गच्छति॥"

इत्युपक्रम्य ।

तत्र यत्सत्यं स धर्मो यो धर्मः स प्रकाश इत्याह। प्रकाशः सत्त्वम् । सत्त्वोत्कर्षजनकतया सत्यमेव सत्त्वमित्युक्तम्। आयुर्घृतमितिवत्। अनृतात्खलु तमः प्रादुर्भूतम् । ततस्तमोग्रस्ता अधर्ममेवाऽनुवर्तन्ते न धर्ममिति। (शान्तिपर्व—१९० अ० ) अत्र क्वचित्प्रतिप्रसवमाह महाभारतम्—

"प्राणात्यये विवादे च वक्तव्यमनृतं भवेत्।"

प्राणात्ययो राजदण्ड—प्रायश्चित्तनिमित्तकातिरिक्तो बोध्यः । दण्डादि-निमित्तकप्राणात्ययसम्भावनायां तु सत्यस्यैव वक्तव्यत्वोपदेशात् । यथा मनुः (८ म० अ० )—

"ब्राह्मणस्वर्णहारी तु राज्ञे मुसलमर्पयेत्।
स्वकर्म ख्यापयंस्तेन हतो मुक्तोऽपि वा शुचिः ॥"इति।

प्रायश्चित्ते त्वाहाऽङ्गिराः—

"कृते निःसंशये पापे न भुञ्जीताऽनुपस्थितः।
भुञ्जानो वर्धयेत्पापमसत्यं पर्षदि ब्रुवन् ॥"

एवमग्रेऽपि यथायथमूह्यम्।

"विवाहकाले रतिसम्प्रयोगे
प्राणात्यये सर्वधनापहारे।
विप्रस्य चाऽर्थे ह्यनृतं वदेत,
पञ्चानृतान्याहुरपातकानि ॥
प्राणात्यये विवाहे च सर्वज्ञातिवधात्यये।
नर्मण्यभिप्रवृत्ते वा न च प्रोक्तं मृषा भवेत् ॥
अधर्मं नाऽत्र पश्यन्ति धर्मतत्त्वार्थदर्शिनः।
यत् स्तेनैरपि सम्बन्धान्मुच्यते शपथैरपि ॥
श्रेयस्तत्राऽनृतं प्रोक्तं तत्सत्यमविचारितम्।
न च तेभ्यो धनं देयं शक्ये सति कथञ्चन ॥
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत्।"

(कर्णपर्व ६९ अ० )

सर्वज्ञाति वधात्यये—सर्वज्ञातिवधरूपे । अत्यये विपत्पाते। सर्वपदं बह्वर्थकम्। शक्ये सामर्थ्ये, बलात्कारं विनेति यावत्।

स्तेनैरिति यत्र यस्य वैधोऽधिकारः, अवैधाल्लाञ्छनाद्वा, अवैधेन प्रकारान्तरेण वा तत्र तस्याऽधिकारं भ्रंशयन्तः स्तेना भवन्ति। तेन तथाविधधर्मप्राणापहर्तारोऽपि धनापहर्तृवत्स्तेना युक्तेरविशेषात्।

न नर्मयुक्तमनृतं हिनस्ति,
न स्त्रीषु राजन्न विवाहकाले।
न गुर्वर्थे नात्मनो जीवितार्थे,
पञ्चानृतान्याहुरपातकानि ॥

न हिनस्ति—न पीडयति, अप्रतिप्रसूतानृतवक्तारं दुःखाकरोति।

मनुरपि—

"शूद्र-विट्-क्षत्र-विप्राणां यत्रर्त्योक्तौ भवेद्वधः।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥
वाग्दैवतैश्च चरुभिर्यजेरंस्ते सरस्वतीम्।
अनृतस्यैनसस्तस्य कुर्वाणा निष्कृतिं पराम् ॥"

(८ म. अ० १०४।५)

नच प्राणात्यय-सम्भावनादिकालीनमनृतवचनं न पापरूपं किन्तु धर्म एव । "प्राणात्यये विवाहे च वक्तव्यमनृतं भवेदि" त्यादि महाभारतादिवचनेन तस्य विधिबोधितत्वात्, तदतिरिक्तानृतवचनस्य पापरूपता युक्तेति वाच्यम्!। मनुस्मृतिविरोधात्। मनुना हि ब्राह्मणादिप्राणरक्षा—फलकस्याऽप्यनृतस्य वक्तव्यतां विदधताऽपि तस्य पापरूपतायाः स्पष्टमुक्तत्वात्। तद्धि वाग्दैवतैश्च चरुभिरित्यादि वचनं प्रागुपदर्शितम् । विवाहकालीनमनृतवचनमपापरूपं, ब्राह्मणादिप्राणरक्षाफलकञ्चानृतवचनं पापरूपमिति को नामानुन्मत्तमानी ब्रूयात् ?। यत्पुन "स्तत्राऽनृतं वक्तव्यमि"ति विधिप्रतिरूपकवचनं सत्यमप्रियमित्यादिवत्तत्र तत्र प्रतिकूलसत्यवचनप्रतिषेधपरतयैव पर्यवसेयम्। यत्र खलु सत्यवचनमुपवर्णितकौशिकोक्तिवद्विसोदर्कतामापद्यते तत्र सत्यं विविञ्चमानोऽपि जीवितनिरपेक्षोऽपि तूष्णीमासीतेत्ययं निर्दोषः

सत्यकल्पः। अत्राऽशक्तश्चेद्वरमहिंसाफलकमनृतवचनमाददीत, न तु हिंसोदर्कसत्यवचनं तदनृतवचनापेक्षया तत्सत्यवचनस्य लोकधारणविरोधितया हीयमानत्वात्। तत्र च गृहीतानृतवचनो मन्वाद्युक्तसारस्वतयागाऽऽदिरूपप्रायश्चित्तं कुर्यात्। यत्र तु सत्यवचसा परकीयविवाहप्रतिबन्धसम्भावना, तत्राऽपि तूष्णीम्भावः प्रथमः कल्पः। अशक्तावनृतवचनं तत्प्रायश्चित्तं च चरेत्।

राजदण्डनिमित्तकातिरिक्त-स्वप्राणात्यय-सर्वस्वापहरणसम्भावनादौ च तूष्णीम्भावो वा सत्यवचनं वाऽऽद्यः कल्पः। यदि नाम तत्सत्यवचनं दस्यूद्देश्यकधनदानादिवचनवद् दुष्टबुद्धिफलकं न स्यात्? तत्राऽशक्तावनृतवचनं न कामकारकृतानृत वचनवद्धेयम्।

न च परप्राण-रक्षण हेत्वनृतवचनवदुपादेयं वा। यदि तु दुष्टबुद्धिफलकं तत्तूष्णीम्भाव एवाऽऽद्यः कल्पः। तत्राऽशक्तावनृतवचनम्। इदं तु परप्राणरक्षण-हेत्वनृतवदुपादेयम्। परिणयादिकालीनमपकारहेतुभूतमनृतवचनमनेनैव व्याख्यातम्। हिंसाफलकमनृतं सर्वथैव वर्जनीयं, सत्यस्याऽपि तत्र वर्जनीयत्वात्। सर्वथा वर्जनीयमनृतान्तरमाह मनुः—

"योऽन्यथा सन्तमात्मानमन्यथा सत्सु भाषते"ति।

(४ अ० २५५)

तथा चात्मोत्कर्षख्यापकमनृतं सर्वथा वर्जनीयमतएव–तदनृतमनुपातकमध्ये याज्ञवल्क्येनाऽपि—

"उत्कर्षे च वचोऽनृतमि"ति (३० अ०) सङ्गृहीतम्।

इति सत्यप्रकरणम्।

---



## वर्णाश्रम स्वराज्यसंघस्येतिवृत्तम्।

नि०—हेधारो पाधिकः श्रीयुत गणपतिशास्त्री।



अज्ञानान्धस्य लोकस्य ज्ञानाञ्जनशलाकया।
चक्षुरुन्मीलितं यन तस्मै श्रीगुरवे नमः॥



विदां कुर्वन्त्येव विद्वांसो यद्—भारतीयैर्ज्ञायं ज्ञायं संसर्गजा दोषगुणा भवन्तीति। अनुभावमनुभावं च नूतने हृदये समाधीयमानस्य संस्कारजातस्याऽनन्यथाभावं दर्शं दर्शं चाधःपातं सर्वथाप्यनात्मनीनादनात्मवतां म्लेच्छानां सेवापरिग्रहादुपजातं, अनुत्तमेन पुरुषोत्तमेन प्रवर्तितस्य साङ्गोपाङ्गवेदनारायणस्य प्रसादादिव सत्प्रज्ञाचक्षुष्यपि भारते वर्षे रजोनिमीलितेनाऽऽङ्गलप्रभावाभिभवेन गजनिमीलिकयेवातिवाहितोऽविदितशिथिलदाढर्य्ः कोऽपि करालः कालः। यत्र, मतिमवष्टभ्य धर्मे स्थितिं दधाना अतएव मनोवाक्कायकर्मस्वेकरसतां दधाना देवैरपि स्पृहणीयाद्भुतसाहसास्ते ते नः पूर्वपुरुषाः कथाप्रसङ्गेषु स्मृतिपथमागता अपि विस्मृतिपथगता इव, तेषां सदाचारा अनुष्ठीयमाना अप्यननुष्ठीयमाना इव, तदुपदिष्ट-वेदादिग्रन्था अधीयमाना अप्यनधीयमाना इव मतिमवष्टभ्य विरलविरलैर्जिज्ञासमानास्तत्। तमःप्रमिवाऽऽसम् भुवनम्। न तदानीं

तम आसीत्, न प्रकाशः न सम्पदासीन्न विपत् । न स्वीयो न परः । न वक्तव्यमासीत् न श्रोतव्यम् । सर्वोऽप्यप्रतिहतस्वेष्टाचारः स्वस्ववासनामन्ववर्तत ।

अमुमेवाऽवसरं प्राप्य कलिरिव पुण्यश्लोकं नैषधमन्तः प्रविश्य म्लेच्छः सप्तद्वीपां वसुन्धरां समग्रां ग्रसित्वाऽवशिष्टमेकं खण्डं भरतखण्डमपि सनातनधर्मभावस्याऽऽवासभूतं ग्रसितुमनाः सनातनधर्माचारविचारनियमेन प्रतिबद्धत्वात्साक्षादशक्नुवानो धर्मार्थेविनियुक्तकनककान्तानां महापुरुषाणां परिग्रहभूतायां प्रजायां कनककान्ताद्यर्थं धर्मनिग्राहकं म्लेच्छभावमात्मनः पुत्रमन्विच्छन् विद्याभ्यासव्यपदेशेनाऽभिचरितुं प्रायुङ्क्त । स तत्र ब्राह्मणान्क्षत्रियान्वैश्यान्शूद्रान्वाह्यांश्चेति सर्वानार्त्विज्यायावृणुत । एवमप्याप्यविच्छिन्नमभिचरत एव तस्य मनोरथसिद्धिर्यत्तावतैव सज्जनान्तःकरणसन्तापक उद्भून्महाभूत इव भयङ्करः कश्चन समाजः, योहि पूर्वपूर्वं गुप्तरूपेणोच्छिन्नमर्यादोऽपि पुरस्ताद्विस्तारितहृदयशून्याचारविचारवाह्यरङ्गप्रसङ्गेनाव्यञ्जितवैरलक्षण एव वर्णरूपसारूप्यात्स्वीय इति जनैर्विश्वस्तो न्यायप्राप्तकनककान्तादिवस्तुजातैर्निर्विशेषं सविशेषं सादरं च वा परिग्राहितो व्यवहारेषु चतुरोऽयमिति धार्मिकाणां सर्वविधाधिकारसंरक्षणार्थं सभासंस्थासु प्रतिनिधितया पुरस्क्रियमाणः क्वचित्कदाचित्प्रकाशं मर्यादातिक्रमेऽपि लौकिकोऽयमिति वाचंयमेषु श्रुतवत्सु, संवृद्धविषयलोलुपतामन्याय्येनोपेयपरकनककान्तादिवस्तुजातेनोपशमयितुं संजातमर्यादातिक्रमरुचिर्मर्यादातिक्रमे शास्त्रीयतां मर्यादायामशास्त्रीयतां मर्यादायाः परिवर्तनीयतां वेत्यादिनानाविधमायारचितवञ्चनाप्रपञ्चो द्वारसहस्रं निर्माय वसन्निव मूषकः कांग्रेसिहिन्दुसभेयार्यब्राह्मसुधारकस्वराजिष्टादिनानारूपधरो बाल्यविवाहसम्प्रदायाद् बाल्यत एवाऽऽरभ्य यावन्मरणं स्त्रीस्वातन्त्र्यनिषेधात् कन्याशालाविधवाश्रमादिपरःशतस्त्रीयत्नोपगमनोऽपि विफलीभूतमनोरथः प्रौढविवाह–विधवाविवाहशुद्धीकृतलेडी विवाहाण्डभक्षणब्रांण्डिपानादिपरायणः परानप्येवं सम्बोधयन् क्रमेण निःशङ्कं वृत्तान्तपत्रव्याख्यानादिद्वारा श्रुतिस्मृतीतिहासपुराणादीनां विषये स्वात्मनो दस्युभावं वाङ्मनसाभ्यां व्यञ्जयन्, स स्वयमनधिगतशास्त्रोऽपि शास्त्रश्रद्धालुलोकवञ्चनाय शास्त्रोदितार्थेऽनधिकारचेष्टां प्राक्रमत । तन्निवर्हणाय शास्त्रार्थनिर्णयेऽधिकृतैः सर्वधर्माचार्यैः पारंत्रिसहस्रैश्च शास्त्रज्ञशिरोमणिभिर्ब्राह्मणैर्वृत्तेऽखिलब्राह्मणमहासम्मेलने प्रकृतोपयोगिषु विषयेषु निर्णयः कृत इति न तिरोहितं प्रियपाठकमहोदयानाम् । तदेव कर्म ब्राह्मणसम्मेलननाम्ना प्रकाश्यमानं संस्कृतमासिकहिन्दीसाप्ताहिकपत्रद्वयमनुवर्तते । अथैवं वाङ्मनसाभ्यां प्रकटीभूते दस्युभावे ताभ्यामेव प्रतिक्रियमाणे कायकर्मभ्यां तदुपजापाय प्रायतत । प्रौढविवाह–विवाहविच्छेद–विधवाविवाहादिषु स्पृश्यास्पृश्यविवेक--भक्ष्याभक्ष्य-गम्यागम्य-पेयापेयादिविवेकविनाशेषु मठमन्दिरधर्मशालान्नसत्रादिधार्मिकधनापहारेषु गोहत्याब्रह्मद्वेषादिषु कांग्रेसद्वारा सत्याग्रहद्वारा मन्त्रोपदेशद्वारा विविधराजकीयशासनद्वारा सर्वशक्त्या सर्वभावेन च स्पष्टमचेष्टत ।

बालिका बालिकापाठशालासु म्लेच्छशिक्षया शिक्षिताः पुनरुच्छृङ्खलास्ताः सञ्जातयौवनास्तादृशेनैव म्लेच्छभावापन्नेन सहोद्वाहिता निर्मर्यादं व्यवहरन्ति । स्त्रियस्ताः स्वभावचपला एकत्राऽचञ्चलां रुचिमकुर्वाणाः परेषु रज्यन्ते । विधवाभिर्मरणोत्तरमप्यनुल्लङ्घनीयधवाभिः सह पुनरुद्वाहः क्रियते । अविचारितवर्णविवेकं दाम्पत्यायाऽनुचरन्ति । यद्यद्रोचते तदेव खाद्यते पीयते च । मठमन्दिरादिषु धर्मे विनियुज्यमानं धनमसहमानाः स्वायत्तीकरणाय राजकीयशासनद्वारा शासितुं प्रयतन्ते । एतादृशकर्मणैव भुक्तमन्नं तेषां जीर्यति । कियदिव वर्णयामः । दासोहं तव दासानुदासः, मोस्ट ओवीडि सर्वेन्ट ( Most Obldient

servent ) इति शपथशतैरनुनीय म्लेच्छ भक्ता कृच्छ्रप्राप्ततद्दास्यप्रसादादासादितेन पार्टीसमयोचितोच्छिष्टमध्वामिषशेषेण स्वात्मानो धन्यंमन्या नग्नयवनीनृत्यदर्शनेष्वर्पितसर्वस्वाः 'बेसेन्ट' सदृशकुलटाप्रवर्तितसिद्धान्तेन नीयमाना अपि सन्तो हन्त ! प्रोत्सहन्त एव देवालयेषु दुष्टचित्तानपि विश्वम्भरं हरिं सेवमानान्हरिदास्यप्रसादभक्षणतद्दर्शनतत्सङ्कीर्तनपरायणान्देवब्राह्मणान् ।

एतादृश्यामपि दशायां कुशिक्षाप्रभावेण तादृशदुष्पूरप्रवाहे प्रवहतां धर्मपथभ्रष्टानां परिमेयानामेव केषाञ्चन हानिं पश्यन्तो महाराज्ञीविक्टोरिया-प्रभृतिभिः शासकैरुद्घोषितां धार्मिकहस्तक्षेपेषूपेक्षां निर्धारयन्तः केवलवर्णरूपसारूप्यात् स्वीय इति स्वराज्यं स्वातन्त्र्यमिति कोलाहलाद्देशभक्त इति च मन्वानाः सत्यपि सामर्थ्ये व्यावहारिकेषु कार्येषु बहुजालजङ्घालेषूद्विग्नतामेवानुभवन्तो वेदशास्त्रेषु धर्मकर्मसु च केवलं जीवितमतिवाहयन्तो लीलयैवैकं राज्यमून्मूल्याऽपरं राज्यं संस्थाप्य च शतशो दर्शितलोकोत्तरप्रभावशक्तिसाहसाः पण्डितप्रकाण्डा व्यवस्थापिकासु सभासु कौन्सिलप्रभृतिषु सर्वत्र प्रतिनिधित्वेनैतानेव ग्राहयन्त । कांग्रेसप्रभृतिषु च सम्भवत्कल्याणोदर्कासु संस्थास्वेतन्मुख्यतयैव स्वाधिकारं प्रतिपित्सवो धनजनमानादिना तानेव प्रोदसहन्त ।

पयःपानफलमिव भुजङ्गस्य किमेतस्योपकारस्य प्रतिफलं फलितम् ? । म्लेच्छम्लेच्छभावापन्नाभ्यामुभाभ्यां मिलित्वा विरोधसहस्रमप्यनादृतम्, अवमतं च मतं वेदशास्त्रानुमतं, तिरस्कृताश्च पण्डिताखण्डलाः, केवलं दुराग्रहाभिनिवेशादार्थिकपारतन्त्र्येण सह धार्मिकपारतन्त्र्यस्याप्यावाहकं सनातनधर्मणामुत्पत्तिमेवाभावयितुं निर्मापितं सारडाविवाहशासनम् । उद्बोध्य चोद्बोध्य चाण्डाला बलान्मन्दिरेषु देवालयेषु कांग्रेसद्वारा प्रवेशिताः । स्वराज्यं स्वराज्यमिति पदे पदे सनातनधर्मानुयायिनामेव स्वत्व माच्छिद्याच्छिद्य परेभ्यो दत्तम् । अहह ! इदमशक्यमर्षणम् । यत्रैव सनातने धर्मे विश्वं जगत् प्रतितिष्ठति, तस्यैव सर्वथा निरुपद्रवस्य स्वगेहे भारते वर्षेऽपि दुर्लभं स्थानमवस्थातुम् ? अरे ! अधर्म म्लेच्छभाव ! धार्मिकक्षेत्राद्भारतवर्षात् पश्यतस्तस्य धर्मस्य कियन्ति रत्नान्यपाहार्षीः । चिराय धर्मार्थमर्पितशरीराणां महामहाकुलीनानामसङ्ख्याताः कुमाराः । वेदार्थेषु परिश्रान्तुं समर्पणीयधियोऽसङ्ख्याता धीमन्तो यज्ञार्थमर्पणीयश्रियः परःसहस्राः श्रीमन्तः साध्वीभावायार्पणीयतनूनि बहूनि कन्यारत्नानि । एवमपि जोषमासीनस्य येन केनापि यदृच्छालब्धेन स्ववृत्तिं निर्वहतः तस्य धर्मस्य न मृष्यसि त्वं कथं चिच्छुष्यदवस्थामपि स्थाणुवदवस्थितिम् । उत्पन्नान् हस्ते कुर्वाणोपि पुनरुत्पत्तिमेव सनातनधर्मणां द्वेक्षि । अन्यथा किमिदं शासनम् ? वर्णसङ्करोनाम सभवति यो हि ऋतुमत्यां परिणीतायां जातः । अनधिकृतश्च वैदिककर्मसु । शास्त्रोक्तजन्मसंस्कारमात्रलभ्यत्वाद्वैदिककर्माधिकारस्य, स्वपरतुल्याधिकारेषु यन्त्रतन्त्रोपकरणेषु बहुधा प्रवीणा अपि हस्तवातवेदपुस्तका अपि म्लेच्छा ब्राह्मणानां मन्त्रोपकरणेषु स्वालभ्यलाभेषु कम्पन्ते ज्वलन्ति चान्तर्हृदयम् । तस्योन्मूलनमेव किं ते देशभक्तिर्नाम । यद्गौरवादेव भारतं वर्षं गुरुत्वेनोन्नमति स्वं शीर्षं हन्त ! तदुन्मूलनायैव स्वराज्यं नाम तदुपार्ज्यम् । अयि ! सखायः ! सनातनधर्मावलम्बिनो जनाः ! योऽयं धर्मः स्पृश्यास्पृश्यभक्ष्याभक्ष्यपेयापेयविवाह्याविवाह्यादिविवेकैः परः सहस्रं वर्षाणां म्लेच्छैराक्रमणेऽपि भवतां स्वरूपं गोपायांचकार, तस्य गुप्तये सम्प्रति किं चिकीर्षध्वम् । यदि न किञ्चिच्चिकीर्षध्वं, केवलं यथा सम्प्रति तदुन्मूलकानां कांग्रेसप्रभृतीनां धनजनसाहाय्यं नन्नेतृतयैव च स्वावस्थानं, तर्हि प्रयुज्यतां प्रास्थानिकं स्वस्त्ययनं वेदशास्त्राणाम् । गीतायाम्—

वेदादिक ! सद्ग्रन्थजात भोः
सम्प्रति यात निजं प्रतिदेशम् ।
साष्टाङ्गं नम इदं भवद्भ्यः
कृते प्रसीदत पुनरागन्तुम् ॥

इति । हा ! धिक् ! इदमशक्यं द्रष्टुम् । उच्छृङ्खलाचारो विद्याहीनो यवनोपि न स्वाभिमानस्य स्वल्पामपि क्षतिं सहते । स्वजातिस्त्रीषु दृष्टिमपि परस्याक्षममाणः क्षणादेव तत्क्षिणोति । शब्दमपि स्वपूज्येषु प्रयुक्तं प्राणैः प्रतिकुरुते । किं बहुना ! अचेतनोपि सूर्यकान्तः सूर्यपादैः स्पृष्टो निकृत इव वमति दन्दह्यमानस्तेजांसि । परन्तु हा ! हिन्दुं ! हा ! सनातनधर्माणं ! अद्य केवलं त्वमेवासि निरभिमानो निर्जीवश्च । मर्यादापुरुषोत्तमो भगवान् जानकीजानिर्जानन्नपि जानकीं निष्कल्मषां, वृथापवादमप्यक्षममाणो देवीं तत्याज । चित्तौड़देव्याः पद्मिन्याश्छायामात्रस्यापि यवनगोचरतामक्षममाणा निःशेषा राजधानी रणाङ्गणचिताङ्गनयोरात्मानं जुहाव । न भस्मापि देव्या यवनहस्तगतम् । वंशस्य तस्य त्वं तस्यैव त्वं ! ता एव त्वयि विद्यास्तान्येव तवोपकरणानि । तदपि त्वयि कोयं मर्मच्छेदी निकारप्रकारः ? तवैव ग्रासपरिपोषितैरेतैर्गोचर्मावृतव्याघ्रैः पश्यतस्तवासूर्यपश्याः कुलकन्याः प्रसह्य भवनाद् बहिराकृष्यन्ते । पश्यतस्तव वीतमर्यादं नर्त्यन्ते दर्शं दर्शं साकूतं हसतां, साहसादङ्गेषु करं प्रसारयतां म्लेच्छानां पुरस्तात् । पश्यतस्तवोपहसन्ति म्लेच्छा, म्लेच्छ इति नाममात्रेणाप्येकदा नखशिखान्तं रोषेण ज्वलतां हिन्दूकन्यकानामद्य स्वसान्निध्यं बहु मन्यमानानां श्रावं श्रावं सँल्लापं हृदयं निर्वापयन्तः । शृण्वतस्तव परमपूज्येभ्यो वेदादिभ्यो निरुपाधिकृपानिधिभ्यो पर्षिभ्यो निष्कारणमपशपन्ते । निवारयतस्तव देवालयेषु हठाच्चण्डालाः प्रवेश्यन्ते । तवैव साहाय्येन प्रतिनिधित्वेन स्वाधिकाररक्षणाय प्रेषितैस्तवोन्मूलनमुपजप्यते । एवमपि त्वं लोचने निमील्य तानेव प्रतिनिधित्वेन वरयसि । तादृशेभ्य एवान्विष्यान्विष्य स्वकन्यारत्नं चार्पयसि । धिगेतत्ते पूर्वपुरुषकुलकलङ्कं निःसत्वं जीवितम् ! वरं म्लेच्छमतप्रवेशो वरं वा वह्नौ भस्मीभावो न पुनरेवंविधं जीवितं विशेषतो महापुरुषवंशेषु—

'मा जीवन्यः परावज्ञादुःखदग्धोपि जीवति ।
तस्याजननिरेवास्तु जननीक्लेशकारिणः' ॥

हाधिक् ! यत्र क्वचन संस्थासु प्रसङ्गेषु वा यस्य कस्य वाऽभिलाषः पूरणीयश्चेत् हिन्दूसंस्कृतिद्वेष्टृभिरेतैर्हिन्दूजनांगस्याधिकारो हिन्दूललना हिन्दूधर्मो हिन्दूधनं यत्किञ्चिदस्माकमेव हिन्दूजनाङ्गस्यैवास्कन्द्यते नेत् कश्चिदिवास्योत्तराधिकारी हिन्दुः श्वसिति । किं नाम पृथिवीतले विलीनाः कुलीनाः ! अब्राह्मणं जगत् ! अक्षत्रिया पृथिवी ! यद्येवं किमिव वर्षतु पर्जन्यः ! किमिति चौषधयः पच्यन्ताम् ।

( क्रमशः )



# विवाहमीमांसा ।

( नि०—वागीशशास्त्री श्रीकृष्णयोगाश्रम पो० कछला बदायूं )



थाऽस्मिन् लोके आबालवृद्धवनिताप्रसिद्धस्य विवाहपदस्य कुत्र कस्मिन्नर्थे शक्तिरिति भवति सुकरः प्रश्नः—

तथाहि—"भार्या त्रिवर्गकरणं शुभशीलयुक्ता
शीलं शुभम्भवति लग्नवशेन तस्याः ।
तस्माद्विवाहसमयः परिचिन्त्यतेऽत्र
तन्निघ्नतामुपगताः सुतशीलधर्माः"

इत्यादि मुहूर्तग्रन्थोक्तवचनैःशुभलग्न-शुभनवांशादिरूपसमयस्य विवाहार्थमेव प्रतिपादनं कृतम् । अत एव को वा विवाहः ? इति तल्लक्षणजिज्ञासा सुतरां सम्पद्यते ।

( १ ) गणपतिपूजनादारभ्य पूर्णाहुतिपर्यन्तं कर्मकलाप एव विवाहशब्दप्रतिपाद्यः । अतएव विवाहपद्धतिरिति नाम धृतं ग्रन्थकर्तृभिः । सति च तस्मिन्कर्मकलापे विवाहिता कन्येति व्यवह्रियते लोके जनैः सर्वत्र ।

( २ ) गणपतिपूजनादारभ्य पूर्णाहुतिपर्यन्तकर्मकलापस्य 'विवाह' शब्दप्रतिपाद्यत्वं नैव संजाघटीति । तादृशकर्मकलापस्य—विस्तृतत्वेन दीर्घकालसाध्यतया शुभग्रहशुभनवांशयुक्तलग्नस्यातिसूक्ष्मतया तादृशलग्ने पूर्वोक्तकर्मकलापरूप—विवाहस्य कर्तुमशक्यत्वात् । एवञ्च यच्छुभनवांशे शुभलग्ने कर्त्तव्यं तदेव प्रतिपादनीयम् ।

( ३ ) पित्राद्यधिकारिकर्तृकमजातरजस्ककन्याकर्मकं स्वर्गादिफलजनकं नामगोत्रोच्चारणपूर्वकं सुपूजितवरोद्देश्यकं यत्कन्यादानं तदेव विवाहशब्दप्रतिपाद्यम् । व्यवहारादपि कन्यादानमेव क्रियते शुभलग्न शुभनवांशे । मनुनाऽपि "अद्भिरेव द्विजाग्र्याणां कन्यादानं विशिष्यते" इति वचनेन कन्यादानमेव प्रतिपादितम् । तत्रैव विवाहपदशक्तिः ।

( ४ ) कन्यादानस्य विवाहशब्द-प्रतिपाद्यत्वं नैव जाघटयते, ब्राह्मादिविवाहेषु यथोक्तरीत्या कन्यादानस्य सत्त्वेऽपि तदतिरिक्तगान्धर्वादिविवाहेषु तथाविधकन्यादानस्याऽभावेन तेषां मन्वाद्युक्तविवाहत्वानुपपत्तेः । उक्तं च मनुस्मृतौ तृतीयाध्याये चन्द्रभुजसंख्यकश्लोकेन—

"ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽसुरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः" इति ॥

गान्धर्वादीनां विवाहत्वानङ्गीकारे तु भारतादौ दुष्यन्तस्य राज्ञः शकुन्तलया साकं ब्राह्मादिविवाहादर्शनेन गान्धर्वविधिना विवाहश्रवणेन च दुष्यन्तस्य शकुन्तलायां भवदुक्तकन्यादानरूप-विवाहमन्तरा स्वत्वानुत्पत्तौ तस्यां तत्कृतभोगादीनां प्रायश्चित्तजनकता स्यात्, "वरं क्लैब्यं पुंसां नहि परकलत्रादिगमन मि"ति निषेधात् । एवंचान्यदेव विवाहशब्दप्रतिपाद्यं वक्तव्यं येन दूषणत्रयाभावः स्यात् ।

( ५ ) भवतु गान्धर्वादीनां विवाहत्वानङ्गीकारो भवतु च दुष्यन्तकृतभोगादीनां शकुन्तलायां प्रायश्चित्तजनकत्वं, नहि चास्माकं कापि हानिः स्यात्, नह्यत्र किमपि प्रमाणं पश्यामो येन कन्यादानस्य विवाहत्वनिषेधो भवेत् । एवञ्च यत्प्रमाणं कन्यादानस्य विवाहत्वनिषेधकदुपलभ्यते चेत्प्रतिपादनीयम् ।

(६) उदगयन आपूर्यमाणपक्षे कल्याणे नक्षत्रे चौलकर्मोपनयनगोदानविवाहा इत्युक्त्वा तेषां पुरस्ताच्चतस्र आज्याहुतीर्जुहुया"दित्याश्वलायनसूत्राद्विवाहात्पूर्वं होमप्राप्तिः समायाति । नहि च कन्यादानरूपविवाहात्प्राक्केनाऽपि होमोऽनुष्ठितः तथाचाश्वलायनसूत्रविरोधपरिहाराय कन्यादानस्य विवाहत्वं परित्यज्यान्यत्र कर्मणि विवाहपदशक्तिर्निर्णीयताम् ।

(७) शाखाभेदात्कर्मभेद इति न्यायादाश्वलायनमते भवतु विवाहात्पूर्वं होमः । परं चास्माकं माध्यंदिनीयशाखिनां मते केनापि सूत्रकारेण पराशरप्रभृतिना विवाहात्प्रागवच्छेदे होमस्य विधानं नो लिखितं, येन कन्यादानस्य विवाहत्वनिषेधस्स्यात्तथाच कन्यादानस्यैव विवाहपदवाच्यत्वमङ्गीक्रियताम् ।

(८) कन्यादानस्य विवाहत्वाङ्गीकारे वरेण कन्यादानस्य प्रतिग्रहे स्वीकृते तस्यां कन्यायामूढात्वधर्मोत्पत्तौ सत्यां कदाचिद्दैववशात्कन्यादानोत्तरं सप्तपद्यर्वाग्वरमृतौ वरान्तरेण साकं विवाहो न स्यात्

"ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥"

इति निषेधात् । तथा च कन्यादानस्य विवाहपदनिष्ठवाचकतानिरूपित–वाच्यता–शालित्वं नैव सम्भवति । किन्तु विवाहपदस्याऽन्यत्र शक्तिः प्रतिपादनीया ।

(९) कन्यादानोत्तरं सप्तपद्यर्वाग् वरमृतौ सत्यां पुनस्तस्याः कन्याया विवाहनिषेधः समीचीन एव बोभवीति, नो वा कुत्राऽपि तस्या वरान्तरेण साकं विवाहो वम्भणितः । यत्र कुत्रचिदपि वरान्तरेण साकं विवाहः कथितस्तत्रैव दोषः प्रतिपादनीयः ।

(१०) कन्यादानोत्तरं सप्तपद्यर्वाग् वरमृतौ वरान्तरेण साकं तस्या विवाहकरणे बहूनि वचनानि सन्ति । तानि वयं प्रकाशयामः

"अद्भिर्वाचा च दत्तायां म्रियेतोर्द्ध्वं वरो यदि ।
न च मन्त्रोपनीता स्यात् कुमारी पितुरेव सा ॥
इति वसिष्ठस्मृतिः ।

नोदकेन न वा वाचा कन्यायाः पतिरुच्यते ।
पाणिग्रहणमन्त्रास्तु नियतं दारलक्षणम् ।
तेषां निष्ठा तु विज्ञेया विद्वद्भिः सप्तमे पदे ॥
इति मनुस्मृतिः ।

"महादोषे तु विज्ञाते पूर्वं सप्तपदीविधेः ।
मरणादौ समुत्पन्ने देयाऽन्यस्मै न दोषभाक्"
इति याज्ञवल्क्यस्मृतिः ।

तथा च वसिष्ठ-यम-मनुयाज्ञवल्क्य-मुनीनां मते कन्यादानोत्तरं वरान्तरेण साकं विवाहस्सम्मतोऽस्ति । तेन कन्यादानस्य नास्ति विवाहपदवाच्यता, किन्त्वन्यत्र विवाहपदशक्तिः कथ्यताम् ।

११ भवत्वन्ययुगेषु वरान्तरेण साकमूढायाः पुनरुद्वाहः । तेष्वेव युगेषु यम-मनु-वसिष्ठ-याज्ञवल्क्यमहर्षीणां वचनानां सार्थकत्वमप्यस्तु, परन्तु, कलौ पाराशराःस्मृताइति स्मृते र्विद्यमानत्वेन—

"ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुमि"ति

पराशरस्मृतेरेव प्रबलत्वात् पुनरुद्वाहनिषेधस्समीचीन एव बोभवितुमर्हति । तथा च कन्यादानस्य विवाहत्वस्वीकारे नाऽस्माकं कापि हानिः प्रतीयते । तथा च कन्यादानमेव शुभलग्ने शुभनवांशे विधातव्यम् ।

१२ 'भवतु कन्यादानस्यैव विवाह पदवाच्यत्वं' चेत्तन्न, पूर्वतरैराचार्यैर्विवाहत्वेन कन्यादानस्य व्यवहारोऽकारितराम्, स एव न दृश्यते किन्तु कन्यादानमन्तरापि विवाहत्वेनोल्लेखः कृत स्तमेव प्रकाशयामः—मार्कण्डेयपुराणे पित्रादिकर्तृक-कन्यादानं विनापि ऋतुध्वजनृपतेर्मदालसया सह विवाहः श्रूयते—

'सा च तं चिन्तायामास तुम्वरुं तत्कुले गुरुम् ।
तत्रापि तत्क्षणात्प्राप्तः प्रगृहीतसमित्कुशः ।
मदालसायाः सम्प्रीत्या कुण्डालागौरवेण च ।
प्रज्वाल्य पावकं हुत्वा मन्त्रवित्कृतमङ्गलः ।
विवाहविधिना कन्यां प्रतिपाद्य यथागतः ।
जगाम तपसे धीमान् स्वाश्रमं हि पद तदा ।'

भारतेऽप्यादिपर्वणि धरानागाध्याये—

शुक्रेण ययातिरुक्तो विवाहमकरोत्—

"एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणम् ।
शास्त्रोक्त विधिना राजा विवाहमकरोच्छुभ—"मिति।

सोपि कन्यादानमन्तरैवाऽभूत् । किञ्च वृहज्जातकग्रन्थे स्त्रीजातकाध्याये कन्यादानविवाहयोर्भेद एव प्रतिपादितः । तथाहि—

"पापेऽस्ते नवमगते ग्रहस्य तुल्यां,
प्रव्रज्यां युवतिरुपेत्य संशयेन ।
उद्वाहे वरणविधौ प्रदानकाले
चित्रायामपि सकलं विधेयमेतदि"ति ॥

मुहूर्ततत्त्वग्रन्थेऽपि—

'वधूप्रवेशे दाने च वरणे पाणिपीडने ।
वेधः पंचशलाकाख्योऽन्यत्र सप्तशलाकजः'

इति वचनेन कन्यादानात्पाणिपीडनस्य पृथगेव निरूपणं कृतम् । किञ्च योगियाज्ञवल्क्येनापि कन्यादानपाणिपीडनयोः स्पष्टतया भेदो वम्भणितोऽस्ति ।

"कन्यका सुदृशे पार्श्वे द्रव्यपुष्पाक्षतानि च ।
निक्षिप्य तानि सम्बद्ध्वा वरवस्त्रेण संयुजेत् ॥
वस्त्रैः संयुज्य तौ पूर्वं कन्यादानं समाचरेत् ।
दानेन युक्तयोः पश्चाद्विदध्यात्पाणिपीडनम् ।

इति वचनात् । तथाच कन्यादानस्य विवाहप्रतिपाद्यत्वं कालत्रयेऽपि न वोभविष्यति, किन्त्वन्यस्मिन्कर्मणि विवाहपदस्य शक्तिरन्वेषणीया ।

(१३) पाणिग्रहणं विवाह इति विवाहलक्षणलक्षितस्य जामातृदक्षिणकरोपरि कन्या—दक्षिणकरं निधाय "दाताऽहं वरुणो राजा द्रव्यमादित्यदैवतं । वरोऽसौ विष्णुरूपेण प्रतिगृभ्णात्वयं विधिरिति" पदकदम्वबोधितकर्मण एव विवाहत्वं भवितुमर्हति, तदेव शुभलग्ने शुभनवांशे च कर्तव्यम् ।

(१४) "पाणेर्ग्रहणं पाणिग्रहणमि" ति व्युत्पत्त्या यद्यप्यस्य कर्मणो विवाहत्वमायातं, तथाप्यस्य "द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्वि" ति प्रतिग्रहरूपार्थप्रकाशनलिङ्गेनानेन मन्त्रेण प्रतिग्रहं कुर्यादित्याकाराया श्श्रुतेरेव कल्पनं सम्भवति, "नतु पाणिग्रहणं कुर्यादि" ति श्रुतेः । एतदर्थप्रकाशकलिङ्गाभावात् । अतो नाऽस्य मन्त्रस्य पाणिग्रहणे विनियोगः, किन्तु प्रतिग्रहमात्र एव विनियोगः, यथा गोः पुच्छावच्छेदेन प्रतिग्रहो भवति तथा पाण्यवच्छेन कन्यायाः प्रतिग्रहः कार्य इत्यत्रैव द्यौस्त्वेति मन्त्रस्य तात्पर्यमस्ति । तदुक्तं हेमाद्रौ—"करं गृहीत्वा कन्यान्त्वि" त्यादि । तथाचाऽन्यस्मिन् कर्मणि विवाहपदस्य शक्तिर्मार्गयितव्या ।

(१५) कन्यादानोत्तरं यदैषीतिमन्त्राङ्कस्य पाणिग्रहस्य विवाहपदवाच्यता वोभवितुतमां, सति च तस्य पाणिग्रहस्य विवाहवाच्यत्वे सर्वं कार्यं सिद्ध्यत्येव तथा च तदेव शुभलग्ने शुभनवांशे च विधेयम् ।

(१६) यदैषीतिमन्त्रस्य क्रियाविशेष—प्रकाशनेन निष्क्रमणबोधकत्वेन पाणिग्रहणबोधकत्वाभावात् । "पित्रा प्रत्तामादाय गृहीत्वा निष्क्रामति वरो यदैषी"ति सूत्रेणाऽपि निष्क्रमण एवाऽस्य मन्त्रस्य विनियोगो बोध्यते, नतु पाणिग्रहणे । तथा च "ततस्तां पाणौ गृहीत्वा निष्क्रामती" ति मूलपाठोऽपि निष्क्रमणतात्पर्यार्थक एव संगच्छते । एवं च विवाहपदस्य शक्तिरन्यत्र कर्मणि च कथनीया ।

(१७) यदैषि गृभ्णामीति मन्त्राभ्यामेकदैव पाणिग्रहणं भवितुमर्हति, तस्यैव विवाह शब्दवाच्यत्वमस्तु, तथाच मूलपाठोऽप्यपाठ एव प्रतीयते ।

(१८) श्रीवाल्मीकिप्रभृतिभिराचार्यै "र्यदैषी" ति मन्त्रप्रतिपादितगृभ्णामीति मन्त्रप्रतिपादितकर्मणोः पौर्वापर्यव्यवस्थापनेन 'यदैषि गृभ्णामी'ति मन्त्राभ्यामेकदैव पाणिग्रहणं विवाहपदवाच्यं न सम्भवति । तथाहि "प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ।
पतिव्रता महाभागा छायेवानुगता सदा ।
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा ॥

एवं दत्वा सुतां सीतां मन्त्रोदकपुरस्कृताम् ।
अब्रवीज्जनको राजा हर्षेणाऽपि परिप्लुतः"

एतावता ग्रन्थेन दान-प्रतिग्रहौ सम्यक्तया प्रतिपादितौ

"सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः
पत्नीभिस्सन्तु काकुत्स्था मा भूत्कालस्य पर्य्ययः ।
जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन् ।
चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः
अग्निं प्रदक्षिणं कृत्वा वेदीं राजानमेव च"

एतेनापि प्रक्रमसमीपवर्त्तिपाणिग्रहप्रदर्शनेन गृभ्णामीति मन्त्रप्रयोज्यपाणिग्रहक्रमस्संसूचितः । तथा च गृभ्णामीति मन्त्रप्रयोज्यपाणिग्रहणमेव विवाहपदवाच्यं बोभवितुमर्हति । तस्यैव मन्त्रस्य पाणिग्रहणे विनियोगोऽपि सिद्धान्तः, "हस्तग्रहणे गृभ्णामीति" ऋग्वेदभाष्यात् । "अथास्यै दक्षिणं हस्तं गृह्णाति" इति पारस्करगृह्यसूत्राच्च । "अवसिक्तायाः सव्येन पाणिनाऽञ्जलिमुपगृह्य दक्षिणेन पाणिना दक्षिणं पाणिं सांगुष्ठमुत्तानं पाणिं गृहीत्वैताः षट् पाणिग्रहणीया जपति वरो गृभ्णामी"त्यादिगोभिलसूत्राच्च ।

"यस्ते मन्त्रकृतः पाणिरग्नौ पापे मया धृतः ।
सन्त्यजामि स्वजं चैव तव पुत्रं सह त्वया" इति रामायणीयवचनाच्च ।

श्रीमद्भागवते तृतीयस्कन्धे द्वाविंशेऽध्याये—

"वाढमुद्वोढुकामोऽहमप्रदत्तां तवात्मजाम् ।
आवयो रनुरूपो सावाद्यो वैवाहिको विधिः ।"

'कामः सभूयान्नरदेव तस्याः,
पुत्र्याः 'समाम्नाय विधौ प्रतीतः'

इति मूलोपरि टीकायां "गृभ्णामीति मन्त्रेण प्रसिद्ध इति श्रीधराचार्योक्तेश्च । एवं च गृभ्णामीति मन्त्रस्य पाणिग्रहणकर्मबोधकत्वसिद्धौ गृभ्णामीतिमन्त्रोच्चारणपूर्वकं यत्पाणिग्रहणं तदेव विवाहशब्दवाच्यं सिध्यति, तदेव च शास्त्रबोधिते शुभमुहूर्ते शुभलग्नेऽभीष्टनक्षत्रे करणीयमिति सर्वशास्त्रराद्धान्तः । गृभ्णामीति मंत्रपुरस्सरपाणिग्रहणस्यैव बोधकानि पाणिपीडनपाणिग्रहकरपीडनकरग्रहादीनि पदानि ज्ञेयानि । तथा च तानि प्रमाणभूतानि वाक्यानि प्रदर्शयामः । शीघ्रबोधे प्रथमप्रकरणे क्रांतिसाम्यफलकथने—

"क्रान्तिसाम्ये च कन्याया यदि पाणिग्रहो भवेत् ।
कन्या वैधव्यतां याति चेशस्य दुहिता यदि ॥

तत्रैव—

न कन्यावरयोर्ज्येष्ठे ज्येष्ठयोः पाणिपीडनम् ।
द्वयोरेकतरे ज्येष्ठे न ज्येष्ठो दोषमावहेत् ॥

मुहूर्तसिन्धावपि—

रक्षोगणो यदि नरो नृगणा कुमारी
सद्राशिकूटखगमैत्रभयोनिशुद्धिः ।
यद्यस्ति तत्र शुभदं करपीडनं स्या-
द्वामभ्रुवां खलु यदा नहि नाडिवेधः'

तत्रैव—

एकराशौ महाप्रीतिश्चतुर्थदशमे शुभम् ।
तृतीयैकादशे वित्तं दुःप्रजा समसप्तके ।
समसप्तके च शुभदौ घटसिंहौ पाणिपीडने ।

अपि च—

बहूनामेकजातानां कन्यकानां करग्रहे ।
ज्येष्ठया मेलनं वीक्ष्य लघ्वीनामेव चिन्तयेत् ।

व्यासस्मृतौ—

दशवर्षव्यतिक्रान्ता कन्या शुद्धिविवर्जिता
तस्यास्तारेन्दुलग्नानां शुद्धौ पाणिग्रहो मतः ।

नारदस्मृतावपि—

"न जन्ममासे जन्मर्क्षे न जन्मदिवसेऽपि वा ।
नाद्यगर्भसुतस्याऽपि दुहितुर्वा करग्रहः ।"

मुहूर्तचिन्तामणिपीयूषधाराटीकायां वसिष्ठः-

रजो दृष्टं यदि कन्यकायाः
कुलद्वयं दुर्गतिमेति तस्याः ।
तस्मान्निताल्तं च तदुक्तकाले
नोल्लङ्घ्य पाणिग्रहणं विधेयम् ।

तत्रैव नारदोऽपि—

युग्मेऽब्दे जन्मतः स्त्रीणां शुभदं पाणिपीडनम्।

मुहूर्त चिन्तामणावपि—

अलिमृगाजगते करपीडनं, भवति कार्तिक-पौष, मधुष्वपि—

इत्यादिभिर्बहुभिर्वाक्यैस्तादृशमुहूर्ते कर-पीडनस्यैव कर्तव्यताया विधानात्करपीडनमेव विवाहशब्दप्रतिपाद्यं प्रतिभाति। तथाच गृभ्णामीति मन्त्रप्रयोज्यपाणिग्रहणस्यैव शुभलग्नशुभनवांशे कर्तव्यत्वं ज्ञेयं, नान्यद्दानादिकर्मणामिति। अतएवैतत्सिद्धान्तं ज्ञात्वा पूर्वजैश्शिष्टैरपि शुभलग्ने पाणिग्रहणमेव कृतम्। तथाहि भारतेऽप्यादिपर्वणि रामधराचन्द्राऽध्याये—

स तां माद्रीमुपादाय भीष्मः सुरसरित्सुतः,
आजगाम पुरीं धीमान्प्रविष्टो गजसाह्वयाम्।
तत इष्टेऽहनिप्राप्ते मुहूर्ते साधुसम्मते।
जग्राह विधिवत्पाणिं माद्र्याः पाण्डुर्जनाधिपः॥

वाल्मीकि रामायणे बालकाण्डे—

अग्निमाधाय तं वेद्यां विधिमन्त्रपुरस्कृतम्।
जुहावाऽग्नौ महातेजा वसिष्ठो मुनिसत्तमः॥
अब्रवीज्जनको राजा कौशल्यानन्दवर्धनम्।
इयं सीता मम सुता सहधर्मचरी तव॥
प्रतीच्छ चैतां भद्रं ते पाणिं गृह्णीष्व पाणिना।
पतिव्रता महाभागा छायेवाऽनुगता सदा॥
इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तदा।
साधुसाध्विति देवानामृषीणां वदतां सदा॥
देवदुन्दुभिनिर्घोषः पुष्पवृष्टिर्महानभूत्।
एवं दत्वा सुतां सीतां मन्त्रोदक पुरस्कृताम्॥
अब्रवीज्जनको राजा हर्षेणाऽभिपरिप्लुतः।
लक्ष्मणाऽऽगच्छ! भद्रं ते उर्मिला मुद्यतां मया॥
प्रतीच्छ! पाणिं गृहीष्व! मा भूत्कालस्य पर्ययः।
तमेवमुक्त्वा जनको भरतं चाऽभ्यभाषत॥
गृहाण पाणिं माण्डव्याः पाणिना रघुनन्दन!।
शत्रुघ्नं चापिधर्मात्मा अब्रवीन्मिथिलेश्वरः॥
श्रुत कीर्तेर्महाबाहो! पाणिं गृह्णीष्व पाणिना।
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः॥
पत्नीभिः सन्तु काकुत्स्था मा भूत्कालस्य पर्ययः।
जनकस्य वचः श्रुत्वा पाणीन्पाणिभिरस्पृशन्॥
चत्वारस्ते चतसृणां वसिष्ठस्य मते स्थिताः।
अग्निं प्रदक्षिणं कृत्वा वेदीं राजानमेव च॥
ऋषींश्चापि महात्मानः सहभार्या रघूद्वहाः।
यथोक्तेन ततश्चक्रुर्विवाहं विधिपूर्वकम्॥

अत्राऽपि दानानन्तरं होमानन्तरं च मा भूत्कालस्य पर्यय इति जनकोक्त्या गृभ्णामीति मन्त्रपुरस्सरपाणिग्रहणस्यैव विवाहत्वमङ्गीकृत्य तस्यैव शुभमुहूर्ते शुभलग्ने कर्तव्यत्वं सूचितमिति स्पष्टतया प्रतिभाति। किञ्च महाभारतेऽप्यादिपर्वणि खग्रहधाराध्यायेऽर्जुनं प्रतियुधिष्ठिरवाक्यम्—

त्वया जिता फाल्गुन! याज्ञसेनी
त्वयैव शोभिष्यति राजपुत्री॥
प्रज्वाल्यतामग्निरमित्रसाह!
गृहाण पाणिं विधिवत्त्वमस्याः॥

अनेन वाक्येनाप्यग्निप्रज्वलनानन्तरं गृभ्णामीति मन्त्रं प्रयोज्य पाणिग्रहणरूपकर्मकरणं सूचितम्। तत्रैव शरखगचन्द्राध्याये

ततः समाधाय स वेद पारगो
जुहाव मन्त्रैर्ज्वलितं हुताशनम्॥
युधिष्ठिरं चाप्युपनीय मन्त्रवित्रि-
योजयामास सहैव कृष्णया।
प्रदक्षिणं तौ प्रगृहीतपाणी
परिणाययामास स वेदपारगः॥
ततोऽभ्यनुज्ञाय तमाजिशोभितं
पुरोहितो राजगृहाद्विनिर्ययौ॥

क्रमेण चानेन नराधिपात्मजा
वरस्त्रियस्ते जगृहुस्तदा करम् ॥

इतिवाक्यैरग्निहोमानन्तरं यद्गृभ्णामीति मन्त्रपूर्वकपाणिग्रहणं तदेव राज्ञा कृतमिति प्रतिपादितम् । तच्च पाणिग्रहणमेव सुलग्ने कर्तव्यमिति स्पष्टम् । मार्कण्डेयपुराणेऽपि त्रिकालज्ञर्षेर्वचनं राजानं प्रति—

पाणिग्रहणकाले त्वं सूर्यभौमशनैश्चरैः ।
शुक्रवाचस्पतिभ्यां च तव भार्या विलोकिता ॥
तन्मुहूर्तेऽभवच्चन्द्रस्तस्याः सोमसुतस्तथा ।
परस्परविपक्षौ तौ ततः पार्थिव ! ते भृशम् ।

दुःखं जातमितिशेषः । एतद्वचनेनाऽपि पाणिग्रहणकाले एव सूर्यादिग्रहघटितलग्ननिरीक्षणं कर्त्तव्यमिति स्फुटतया सूचितम् । 'उदगयन आपूर्यमाणपक्षे पुण्याहे कुमार्याः पाणिं गृह्णीयादि''ति सूत्रादपि पाणिग्रहणमेव सुलग्ने कार्यं, किं बहुना सर्वत्रैव पाणिग्रहणस्य विवाहत्वेन स्वीकारस्तस्यैव सुलग्ने शुभनवांशे करणं योग्यतममिति विभावयन्तु सुधिय इति,

---

## समालोचनम् ।

म० म० पण्डितवरवेदान्तविशारद-श्रीमदनन्तकृष्ण-शास्त्रिमहोदयै र्विरचिता वेदान्तपरिभाषायाष्टीका कलिकाता—युनिवर्सिटी—मुद्रणालये मसृणचिक्कणपत्रेषु स्थूलाक्षरै र्मुद्रिता विराजते । वेदान्तपरिभाषाया बह्व्यष्टीकाः प्राचीना नवीनाश्च समुपलभ्यन्ते । प्रायस्ताः सर्वा अपि दुर्बोधस्थलं परित्यज्याऽन्यत्रैव बहुपरिश्रमं वितन्वते ।

इयं हि विषमस्थलेष्ववश्यमपेक्षितमर्थं सम्यक् प्रकाशयन्ती वेदान्तशास्त्रमधिजिगांसूनां छात्राणां विशेषेणोपकारिका । सार्धं शतद्वयपृष्ठैरेका भूमिकाऽपि शास्त्रिमहोदयै र्लिखिता वर्तते । अस्या अवलोकनेन मननेन च छात्राणामूहापोहकुशला बुद्धिर्भविष्यतीत्यत्र नास्ति सन्देहः । अस्यां हि श्रीमद्बादरायणप्रणीतवेदान्तसूत्राणां शाङ्करमत एव समन्वयो भवति । न तथा श्रीभाष्यकारादीनां मते । इत्येतच्चतुर्णामध्यायानां तदन्तर्गतानां पदानाञ्च विचारेण प्रकटीकृतम् । अत इदं पुस्तकं शाङ्करमतानुयायिभिस्तदितरमतानुयायिभिश्चाऽवश्यं सङ्ग्राह्यम् । अस्य पुस्तकस्योपादेयतायामेकमेव प्रमाणं पर्याप्तमिति मन्यामहे; यद्—वर्षद्वयात्प्रागिदं पुस्तकं मुद्रितं स्वल्पेनैव कालेन सरस्तानुरागिभिः संगृहीतं दुष्प्रापमभवदिति झटिति पुनर्वारं कालिकातायां युनिवर्सिटी-प्रकाशनविभागेन प्रकाशितम् । अस्मिंश्च प्रकाशने पूर्वतोऽपि केचन विषया विद्यार्थिनामुपकाराय स्थापिताः । यथाऽप्ययदीक्षितविरचितस्य सिद्धान्तलेशसङ्ग्रहस्य चतुर्णां परिच्छेदानां सारसङ्ग्रहः स्वल्पैरक्षरैः सुस्पष्टं सङ्गृह्य प्रकाशितः । एवं बहव उपर्युक्ता विषया अत्र सन्निवेशिताः । शास्त्रिमहोदयेभ्योऽनेकान्धन्यवादान्वितरामः, प्रार्थयामश्च जगदीश्वरं यत्-शास्त्रिमहोदयाः सुस्थशरीराः सन्त एवंविधानुत्तमोत्तमान्ग्रन्थान्गैर्वाणवाण्या समुज्जीव्य भगवतः सनातनधर्मस्य प्रचारं विदधत्विति ।

---

## संघस्थापनम् ।

भिवानीपुरे सनातनधर्मानुयायिनां महामहतां सज्जनानां समवायैः सुतरां शोभमानायां महत्यां सभायां सर्वसम्मत्या वर्णाश्रमस्वराज्यसंघ—स्थापनप्रस्तावः सोत्साहमङ्गीकृतः, संस्थापितश्च महता समारोहेण ।

---

* नमो ब्रह्मण्यदेवाय *

# ब्राह्मणमहासम्मेलनम् ।

( मासिकं संस्कृतपत्रम् )



"न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्याऽपि हेतोः ।" [ महाभारतम् ]

द्वितीयवर्षे } सौर-चैत्रशकाब्दाः १८५१ । { द्वादश-सङ्ख्या



## प्रत्यभिज्ञानम्

शान्तः सदा भव ! परित्यज वर्गषट्कं
वित्तस्पृहां जहि च कर्मफलाभिलाषम् ॥
मेधामुपार्जय ! चिरस्मृतिशक्तिपुष्टां
कर्तव्यतो न चल ! शाश्वतदेव जीव ! ॥ १ ॥

प्रादुर्बभूविथ सदातन-शुद्ध-बुद्ध-
सच्चिन्निरञ्जनविभोः परमात्मनस्त्वम् ॥
नैजं स्वरूपममरं स्मर ! नित्यसारं
सन्धेक्षि रे ! किमु भयं विविधप्रकारम् ? ॥ २ ॥

विश्वं चराचरमिदं खलु नाशशीलं
त्रैकालिकश्चरसि तत्र सना सलीलम् ॥
स्वाभाविकस्त्रिजगतामधिपोऽसि जीव !
यस्मादृते लयमयेत समग्रदेहः ॥ ३ ॥

यो वाध्यसे न जरया जनुषा न मृत्या
सत्त्वोदये सति न वाऽपि रजस्तमोभ्याम् ।
यस्माद्विभेति भयमेव नितान्तमत्र
स त्वं स्मरस्यनुपमां न किमात्मशक्तिम् ? ॥ ४ ॥

गात्राणि वासभवनानि विपद्धराणि
कर्मानुसारमुपलभ्य विनश्वराणि ।
मोहं न याहि पथिकस्तरुमूललाभा-
त्किं निर्वृतो भवति ? हन्त ! विवेकशाली ॥ ५ ॥

धर्मं समाचर ! निराकुरु ! मोहपुञ्ज-
माज्ञां न लङ्घय ! हरेर्जगतां विनेतुः ।
स्वीयं स्वरूपममलं निरुपाधिशान्तं
ज्योतिर्मयं त्वरितमाप्नुहि ! कान्तिकान्तम् ॥ ६ ॥

# यागीयपशोराज्यादिकं न प्रतिनिधिः ।

[ नि०—पण्डितराज श्रीराजेश्वरशास्त्री द्राविड़ः । ]



चराचरगुरोः परमेशितुरद्भुतेऽस्मिन् सर्गे समुपजातानां प्राणिनिकायानामैहिकाऽऽमुष्मिकाऽभ्युदयनिःश्रेयसादिफलसाधनान्युपदेष्टुं भगवती श्रुतिः प्रवृत्ता सती चित्तशुद्धिकारणान्यैहिकामुष्मिकफलप्रदानि कर्माण्येव प्राथमिकाधिकारिणां कृते विधत्त; इति हि सर्वेषां वेदविदां घण्टाघोषः। तानि च श्रौतानि कर्माणि अग्न्याधेयप्रभृतीनि "सप्त पाकयज्ञसंस्थाः, सप्त हविर्यज्ञसंस्थाः, सप्त सोमसंस्था" इत्यादीनि याज्ञिकेषु सर्वत्र प्रसिद्धानीति न तिरोहितं विदुषाम्। तेषु च निरूढपशुबन्धादारभ्य सर्वत्रैव पशुयागो विहितः प्रत्यक्षया श्रुत्या।

सोऽयं प्राणिहिंसाविमिश्रो नोपादेय इत्यस्त्यास्तिकम्मन्यानामेव केषाञ्चन महान् व्यामोहः।

प्रेक्षावतां तु दृष्टहिंसादोषाणां वानप्रस्थपारिव्राज्याद्याश्रितवतां शास्त्रानुसारेणैव हिंसायुक्तकर्मव्यावृत्तेः सम्भवात्, तदतिरिक्तानां तु गृहस्थत्वादेव पञ्चसूनादिनान्तरीयकहिंसानिवृत्तेश्च कथमपि वक्तुमशक्यत्वादयुक्त एव यद्यप्ययं हिंसायुक्तकर्मनिषेधवादस्तथापि तेषामेव वैदिकच्छद्मना शास्त्रीय-पश्वालम्भ-निवर्त्तनव्याजेन शास्त्रीयकर्मप्रवर्तनदुराग्रहं प्रतिषेद्धुं किञ्चिदिवाऽत्र विमृशामः।

श्रूयते किल इन्दौरप्रान्ते केनचिद्याज्ञिकेनोक्तव्यामोहाक्रान्तेनैव पशुयज्ञनिवर्तनपुरस्सरं तत्स्थाने आज्याहुतिपुरस्सरं कश्चन श्रौतो यज्ञः [illegible] पशुसाध्यो निर्वर्तयितुमिष्यत इति। तत्र च मुख्यालाभे प्रतिनिधिर्ग्राह्य इति न्यायमुपष्टभ्यैव पशुस्थाने आज्यं होतव्यमिति वादस्तेन याज्ञिकेन प्रवर्तित इति श्रूयते। तदेतत्पशुस्थाने आज्यग्रहणं शास्त्रसम्मतं न वा? आज्येन समापिते च सवनकर्मणि क्रतोरशेषेण फलेन योगः सम्भवेद्वा न वे? ति महान् सन्देह इदानीं तत्रत्येष्वास्तिकयाज्ञिकसमाजेपु समुत्पन्न इति च श्रूयते।

तदत्र किं वा युक्तमिति विशये सति, सति बलवति प्रत्यूहे तादृशक्रतोरनारम्भ एव श्रेयान्, न तु अविहितेनाऽऽज्यपशुना सवनसमापनमिति तत्रत्येतरसमस्तास्तिकयाज्ञिकपक्षमेव वयमनुमोदामहे।

"अनारम्भो मनुष्याणां प्रथमं बुद्धि-लक्षणम्।
आरब्धस्याऽन्तगमनं द्वितीयं बुद्धिलक्षणम्॥"

इति हि प्रसिद्धमेव। पशुयागानाञ्च—आज्यादिना समापनं सर्वथाऽशास्त्रीयमेव। यत्तु—त्वाष्ट्रपात्नीवतयागदृष्टान्तेन पर्यग्निकृतस्य पशोरुत्सर्गस्याऽन्यत्राऽपि यागे विधानसाहसम्, तत्तु अतीव मन्दम्। मीमांसादिपु सर्वत्रैव ह्ययमर्थः सम्यग्विचारितोऽस्ति। यत्-त्वाष्ट्रपात्नीवतादि-यागविशेषेष्वेव केषु चिद्विहितस्य पशूत्सर्गपक्षस्याऽन्यत्र विधानं सर्वथाऽसङ्गतमिति। तथा सति हि संज्ञपनलोहितनिरसनशकृन्निरसनवपाहोमाङ्गहोमादिविधयः सर्वथा बाधिता एव भविष्यन्तीति न तिरोहितं विदुषाम्। इत्येवं निश्चितेऽर्थे विदुषां संशयलेशस्याऽप्यभावादज्ञजनप्रतिपत्त्यर्थं किञ्चिदिव विस्तरे विमृशामः—

तत्र पशुयागेषु पशुस्थाने कस्य प्रतिनिधित्वं कुत्र श्रूयते कुत्र वा न ?" इत्येवं विशये आहाऽऽपस्तम्बः—

"अनागच्छत्यन्यं तद्रूपवर्णवयसं तद्दैवतमुपाकृत्य यजेत" । ( ९-१८-५ )

अत्र रुद्रदत्तवृत्तिः—

"तस्मिन् ( पलायिते निर्हृते वा पशौ ) आगमयितुमशक्ये सति संस्थानवर्णवयोभिस्तत्सदृशं तज्जातीयमन्यमुपाकुर्यात्। तज्जातीयालाभे प्रतिनिधिरुक्तः सत्याषाढभारद्वाजाभ्याम्।

"अजा अवयो गाव इत्यन्यो-
न्यप्रतिनिधयो भवन्ति" इति।

अनेन हीदं स्पष्टमेव ज्ञायते पशुस्थाने तज्जातीयस्य तद्रूपवर्णवयसः प्राथमकल्पिकं प्रतिनिधित्वं, तज्जातीयमात्रालाभे तु अजाविगवामन्योन्यप्रतिनिधित्वम्। न तु क्वचिदपि पशुस्थाने आज्यादीनां प्रतिनिधित्वं स्मर्यते। न हि शब्दमात्रैकशरणानामास्तिकानां शब्दोपदेशमतिक्रम्य स्वकल्पित-प्रतिनिध्युपादानं क्वचिदपि प्रशंसामर्हति। अतो निश्चयेन मन्यामहे यत्—आज्यप्रतिनिधिस्थापनसाहसमिदं वैदिकानामनुपादेयमेवेति।

पशुस्थाने पशोरेव प्रतिनिधित्वमित्येतदन्यत्राप्यापस्तम्बेन सम्यक् सूच्यते। तथा हि—

"मांसीयन्ति ह वा अग्नयोऽजुह्वतो यजमानस्य। ते यजमानमेव ध्यायन्ति। यजमानं संकल्पयन्ति। पचन्ति ह वा अन्येष्वग्निषु वृथा मांसम्। अथैतेषां नान्या मांसाशा विद्यते। यस्य चैते भवन्ति तं ततो नानीजानं पशुना संवत्सरोऽतीयात्। आयुष्यो ह वा अस्यैष आत्मनिष्क्रयण इति वाजसनेयकं भवति भवति"। ( आ० श्रौ० ७-२८-८ )

इति वदताऽऽपस्तम्बमुनिना स्पष्टमेव मांसीयतां श्रौताग्नीनां मांसाशापूरणं यदि यजमानेन न क्रियते तर्हि यजमानमांसमेव ते प्राश्नन्तीति वदता च पशुस्थाने पशोरेव प्रतिनिधित्वं समर्थ्यते। आज्येन तु तत्स्थाननिहितेन कथं मांसाशानिवृत्तिर्भवितुमर्हतीति विद्वांसो विदाङ्कुर्वन्तु। अत्रैव प्रसङ्गादिदमपि सूचयामो यत्-पशुयज्ञविरोधिनामाधुनिकनास्तिकानां समीचीनमुत्तरमप्यत्राऽऽपस्तम्बाचार्येण—

"पचन्ति ह वा अन्येष्वग्निषु वृथा मांसम्"

इत्यादि वदता दत्तमिति। यदि ह्याधुनिका नास्तिका होटलादिस्थानेषु गत्वा म्लेच्छोच्छिष्टं मांसं न भुञ्जीयुस्तदा खलु तेषां वैदिकपशुयज्ञनिषेधकोलाहलः प्रेक्षावत्सु लब्धास्पदोऽपि भवेत्। मूले कुठारन्यायेनाऽऽकण्ठं सुरोपदंशेन गोमांसमपि भुञ्जानानां तेषां तु सभ्यत्वेन परिग्रहं कृत्वा वैदिकपशुयज्ञस्यान्यथाकरणप्रयासस्तु सर्वथा हास्याऽऽस्पदमेव। वरं कलिराक्षसानाममीषां विरोधे बलवति यज्ञस्याननुष्ठानमेव। तथा हि—

पूर्वमपि त्रेतादिषु युगेषु राक्षसैर्मखविघ्ने समुत्पाद्यमाने रामचन्द्रादिसाहाय्येन विश्वामित्रादिभिर्यज्ञो विध्यनुसारेणैवाऽनुष्ठितः। न त्वन्यकल्पेन शास्त्रीयकर्म प्रवर्तितम्। श्रीरामायण एव च अम्बरीषकृतयज्ञे पशोरिन्द्रेणाऽपहारे सति तत्स्थाने पुरुषस्यैव शुनःशेफस्य पशुत्वेन नियोजनं महता प्रयासेन कृतम्। विश्वामित्रेणाऽपि शुनःशेपरक्षणार्थं स्वपुत्राः पशुत्वस्वीकरणार्थमाज्ञप्ताः। यदा हि घृतेनाऽपि पशुकार्यं निर्वर्तितव्यमिति शास्त्रार्थः स्यात्, तर्हि वृथैवाऽयं प्रयासः सर्वोऽपि कल्पयितव्यः स्यात्। सुखेनैव विश्वामित्रस्तत्पुत्रा वा पशुप्रतिनिधिनाऽऽज्येन सवनकर्मसमापनाय राजानमुपदिशेयुरिति रामायणैतरेयकब्राह्मणादिसंदृब्धशुनःशेपोपाख्यानादिपर्यालोचनेनाऽपि आज्यादेः पशुप्रतिनिधित्ववादः सर्वथाऽशास्त्रीय इति गम्यते। स्यादेतत्।

"यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येत्सैव ततः प्रायश्चित्तिः"

इति ब्राह्मणवचनेन पशुस्थाने आज्यहोमस्य विहितत्वादस्येवाऽऽज्ययागस्याऽपि विहितत्वमिति सति पश्वलाभे आज्यपक्षोऽपि शास्त्रीय एव ? इति ।

तदेतदयुक्तम् ।

पशोरवदानं नश्येत् । इत्युक्त्वा यत्किञ्चिदवदान-नाशस्यैवोक्तप्रायश्चित्तनिमित्ततयाऽनूद्यमानत्वेन कृत्स्न-पश्वलाभविषयताया अस्मिन्वचने कल्पयितुमशक्य-त्वात् । अन्यथा हि "यदि पशुर्नश्येत्" इत्येव किमिति नारभ्येत ? । तदेतत्सर्वं स्पष्टमेव रुद्र-दत्तेनाप्यापस्तम्ब-सूत्रव्याख्यायामुक्तम् । तथाहि—

"पुनश्चोक्तं ब्राह्मणे-यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येत्, सैव ततः प्रायश्चित्ति" रिति । यदि पशुसम्बन्ध्येकमनेकं वाऽवदानं नाशदोषादिनाऽवदानायोग्यं स्यात्तस्य स्थाने ध्रौवादाज्यादवद्येदित्यर्थः । तदुक्तं भरद्वाजेन—

"यद्यद्धविस्तस्य तस्याऽऽज्यं प्रतिनिधिरिति" कृत्स्न-नाशे तु पुनरालम्भः :

केचित्तु वपाहृदययोर्नाशेऽपि पुनरालम्भमिच्छन्ति । तयोः पश्वात्मत्वसंस्तवात् । यथा आत्मा वपेति, पशो-र्वा आलब्धस्य हृदयमात्माभिसमेतीति च । तदयुक्तं, विशेषानुपदेशात् । अर्थवादमात्रत्वाच्चात्मप्रवादस्य । तदुक्तं कात्यायनेन—

"अवदानहानौ नाद्रियेत, हृदयनाशे त्वन्यमाल-भेतेत्येके हृदयं पशुरिति श्रुतेः । सर्वेषां वाऽऽज्यस्य यजेत, अर्थवादमात्रं पशुवचनमि"ति ।

अत्र हि वपाद्यवदाननाशे पुनः पश्वालम्भो योग्यो वा नवेत्येतद्विषये मतभेदसत्त्वेऽपि कृत्स्नपशुनाशे पुनः पश्वालम्भो विस्पष्टमेव विहितः । अन्यथा ह्यन्य-स्य तद्रूपवर्णवयसः कथं विधिरुपपद्येतेति विचारयन्तु मीमांसकधुरीणा एव । अतएव—

"यस्य सर्वाणि हवींषि नश्येयुर्दुष्येयुरपहरेयुर्वाऽऽ ज्येनैता देवताः प्रतिसंख्याय यजेते"त्यादिना सर्वेषा-मेवाऽप्रत्तदैवतानां हविषामपचारे तद्देवताकस्याऽज्य-होमस्य तत्स्थाने विधानं कृत्वा पुनः—

'अथान्यामिष्टिमनुल्वणां तन्वीत, यज्ञो हि यज्ञस्य प्रायश्चित्तिः' ।

इति पूर्वेष्टिसमापनानन्तरं पुनर्मुख्येन हविषा द्वितीयस्या इष्टेर्विधानमपि सङ्गच्छते । यद्यप्युक्त-सूत्रस्य सर्वहविरपचारे पुनरिज्याविधानपरतैव शब्दतो ऽवगम्यते, तथापि —

"गुणभूतानामपि हविषामत्यन्तमावाहनात्प्रागूर्ध्वं च सर्वदाहे हविरावृत्तिः, नेज्यावृत्तिरित्यर्थः" ।

इति वदता रुद्रदत्तेन एकैकस्याऽपि हविषः सर्वनाशे पुनरावृत्तिर्न्यायसाम्यात्पूर्वोक्तयुक्तेश्च सम्प्रतिपादितैवेति न तिरोहितं विदुषामापस्तम्बसूत्रदर्शिनाम् ।

तथा च सम्यगुपरि निर्दिष्टविषयाणां विचारे क्रियमाणे इदमेव युक्तं पश्यामो यत् पशुयज्ञे आज्या-दिप्रतिनिध्युपादानेन पशुनिवर्तनोद्योगोऽयमशास्त्रीय एवेति । अतश्च प्रार्थयामहे श्रीकाशीविश्वेश्वरं यत्—

आज्यप्रतिनिधीकरण —दुराग्रहग्रहिल — हृदयाना-मिन्दोरनगरस्थ—याज्ञिकवराणां मनसि सद्विचार—परिस्फूर्तिदानेन वेदविप्लवपरिहारं विधायाऽनुगृह्णातु समस्ताऽहितकजनाननन्यशरणानि' ति शिवम् ।

# रजोवीर्यशुद्धिरेव भारतीयानां वैशिष्ट्यम्।

[ निबन्धकाः—धर्मप्राण-श्रीयुत पं० लक्ष्मणशास्त्रिणो द्राविड़ाः। ]

( गताङ्कादग्रे )

सम्प्रत्तिकर्मोपदेशेन भगवत्या श्रुत्येदमेव सूच्यते—

यः पुत्रः पितृपितामहपरम्परायातानि सर्वाण्येव कर्मजातानि यथावत्परिपालयति स एव पुत्रशब्दवाच्यतामनुभवितुं योग्यः। अत एव पुत्रशब्दनिर्वचनमपि श्रुत्यैवेत्थम्प्रदर्शितं,—"पूरयति त्रायते चेति पुत्र" इति। पित्रा यत्कर्माऽर्धमेव सम्पादितं तस्य पूरणं पुत्रेण कर्तव्यम्। अतएव स पितुः प्रतिनिधिरपि भवति, पैतृकं सकलं रिक्थमपि गृह्णाति, यदि पैतृकधर्मरक्षणं न तेन क्रियेत तर्हि पैतृकधनमपि न ग्रहीतुं शक्यते। अतएव स्मृत्यादिग्रन्थेषु दायभागप्रकरणे स्मर्यते। तत्र, देवलः—

"मृते न पितरि क्लीवकुष्ठ्युन्मत्तजडान्धकाः।
पतितः पतितापत्यं लिङ्गी दायांशभागिनः"॥

मनुरप्याह—

अनंशौ क्लीवपतितौ जात्यन्धवधिरौ तथा।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥

नारदोऽप्याह—

"पितृद्विट् पतितः षण्ढो यश्च स्यादवपातिकः।
औरसा अपि नैतेंऽशं लभेरन्क्षेत्रजाः कुतः" ?॥

आवपातिकः-अवपातितः। "आवपातिकस्य रिक्थपिण्डोदकानि निवर्तन्ते" इति शङ्खलिखितस्मरणात्। अवपातितस्य महापराधेन वन्धुवहिष्कृतस्येत्यर्थः। विष्णुरपि—

पतितक्लीवाऽचिकित्स्यरोगविकलास्त्वभागहराः।

बृहस्पतिरपि—

'सवर्णाजोऽप्यगुणवान्नार्हः स्यात्पैतृके धने।"

अगुणवान् पितुर्दृष्टादृष्टकार्योपयोगिगुणरहितः। तथा चानन्तरमुक्तं तेनैव—

'उत्तमर्णाधमर्णाभ्यां पितरं त्रायते सुतः।
अतस्तु विपरीतेन नाऽस्ति तेन प्रयोजनम्॥
तया गवा किं क्रियते? या न दोग्ध्री न गर्भिणी।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः?॥
शास्त्रशौर्यार्थरहितस्तपोविज्ञानवर्जितः।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमः स्मृतः" इति।

उत्तममृणमृषिदेवपितॄणामृणम्। अधममृणं धनिकहस्ताद्गृहीतमृणम्। यथा मुत्रपुरीषे स्वकीयोदरान्निर्गतेऽप्यत्यन्तहेयभूते, तथैव विद्यादिरहितः सूनुरौरसोऽपि हेयभूत इति मूत्रपुरीषोच्चारसम इत्युक्तम्। मनुरप्येतदेवाऽऽह—

"सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनमि"ति।

विकर्मस्था निषिद्धकर्मैकरक्ता इत्यर्थः। तथा याज्ञवल्क्योऽपि—

'क्लीवोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः।
अन्धोऽचिकित्स्य रोगाद्या भर्तव्यास्तु निरंशकाः॥'

एतेषां निरंशानामपि ग्रसाच्छादनादिकं रिक्थहारिभिर्देयमिति प्रतिपादितं मनुना—

'सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत्'' इति ॥

परन्तु पतितानां भरणमपि न कार्यमिति देवलेन प्रत्यपादि —

'तेषां पतितवर्जेभ्यो भक्तवस्त्रं प्रदीयते''इति ।

बौधायनेन तु पतितोत्पन्नस्याप्यभरणमुक्तं 'पतित-तज्जातवर्जमि''ति । एवं परस्सहस्राणि स्मृतिवचांसि विद्यन्ते महापातकोपपातकानुपातकसङ्करीकरणादि-पापैः सनातनधर्मपथाद्भ्रष्टानां पतितानां ग्रासाच्छाद-नादिप्रदानस्याऽप्यनर्हताबोधकानि । एवंविधानां सन्ततीनामुत्पादनं यदि प्रतिरोद्धव्यं, यदि वा स्वर्गतानां पूर्वजानां नरके निपातोऽनभीष्टस्तर्हि सर्वैरेवैतद्विषये प्रक्षेपणीया शुभा दृष्टिर्यदस्माकं धर्मस्य जातेः स्वरूपस्य सर्वविधायाः समुन्नतेश्च निदानं रजोवीर्यशुद्धिरूपं वैशिष्ट्यं तत्सर्वथा रक्षणीयम् । तेनैव भारतं वर्षं पूर्वगौरवं पुनः प्राप्स्यति । सुधारकै राजकीयैश्चाऽस्माकं समूलोन्मूलनायैव सारडाविधाननामकं बाल्यविवाह-प्रतिबन्धकं किमपि शासनं प्रवर्तितम् । तस्य यथा नि-रुपयोगिताऽकर्मण्यता सिद्धा स्यात्तथा सर्वैः सनातन-धर्मीयैरिदं शासनमेव भारते वर्षे न सञ्जातमिति बुद्-ध्वा पूर्ववदेव शास्त्रकथितप्रकारेण यथाकालं कन्यकानां विवाहान् सम्पाद्य सनातनधर्मरक्षणं कर्तव्यमिति-निवेद्य विरमाम इति ।

श्रीलक्ष्मणशास्त्री द्राविड़ः ।

---

## श्रीकाश्यां वृत्तेऽखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलने सभापतिपदमलङ्कृतवतो महामहोपाध्याय-डाक्टर-पं० गङ्गानाथझामहोदयस्याऽभिभाषणम् ।

या देवी सर्वभूतेषु चितिरूपेण संस्थिता ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥

अयि सहृदया विद्वांसः !

भवादृशां पण्डितप्रकाण्डानां समाजे यदहम-ग्रासने स्थापितस्तदहो ! मम भागधेयम् । एतादृशी प्रतिष्ठा संस्कृताध्यायिनाम्परमपुरुषार्थ इव भवति । तस्य सिद्धावहम्भवतां कृपाभारं भजमानः कार्यस-ञ्चालने साहायकं प्रार्थये ।

सर्वासु सभासु सभापतेरभिभाषणं प्रायशो विपुलं ललितं च भवति । अद्य तु मदीयान्मति-दोषाद्वा स्यादवाक्पाटवाद्वा तद् भाषणमल्पाल्पं लालित्यादिगुणरहितं भवतीति क्षमां याचे ।

एकत्रीभूतैः सज्जनैरद्यत्वेऽन्यैः किं कर्तव्यमित्या-देशोपदेशात्मका एव प्रस्तावाः प्रायः प्रस्तूयन्ते । परिणामश्चास्याऽकिञ्चित्कर एव दृश्यते । भवतां सविधे ममैषा प्रार्थना यदन्यैः किं कर्तव्यमिति तावत्तिष्ठतु नाम संस्कृतसाहित्यस्योन्नतिविषयेऽस्माभिः किं किमनुष्ठेयमित्येव विशेषतो विवेचनीयम् । एवं

कृते स्वीकृतान् प्रस्तावान् कार्यरूपे परिणमयितुं वयं प्रयतिष्यामहे समुचितकार्यप्रणाल्या च साफल्यमपि लप्स्यामह इति सुस्थिरम्।

संस्कृतसाहित्यस्योन्नतिर्न केवलं भारतवर्षस्यापितु समस्तसंसारस्येष्टेत्यत्राधुना नास्ति कोऽपि विवादलेशः। गतेषु तु पञ्चविंशतिवर्षेष्वत्र कश्चिद्ह्रासः समजनीत्यप्यपरोक्षमेव विदुषाम्। अत्र किं कारणमिति परीक्षणीयं भवति।

यस्मिन् वर्षे श्रीमन्तः सम्राजो देशममुमलञ्चक्रुस्तदाप्रभृति तदीयाज्ञानुसारेण संस्कृताध्ययनस्य प्राचीनपरिपाटया नवीनप्रणाल्या चोन्नतिर्यथा भवेत्तथा प्रयतनीयमिति राजपुरुषाणामध्यवसायः समजनि। तदनन्तरं संस्कृतादिप्राचीनभाषारसिकानाम्पञ्चपाणामेका समिति निर्दिष्टा यस्याः परामर्शानुसारेण प्रतिप्रान्तं तत्तत्प्रान्तीयप्राचीनरीत्यनुकूलं संस्कृताध्ययनकार्ये नानाप्रकारकं प्रोत्साहनं प्रदत्तम्। पाठशालानां सङ्ख्याविवृद्धाविदमेव कारणम्।

यद्यपि प्राचीनाध्ययनपरिपाटी विशेषतः संवर्धनीयेति सिद्धान्तितमासीत्, तदर्थमेव च ग्रामेषु प्राचीनाः स्वगृह एव कतिपयच्छात्रानध्यापयन्तोऽध्यापका अन्विष्य प्रोत्साहनीयाः संरक्षणीयाश्चेत्यपि राजाज्ञा सासीत्, तथाप्याधुनिकपरीक्षारीतिमेवावलम्बमानाः पाठशाला इतस्ततः स्थापिताः संवर्धिताश्चेत्येतावन्मात्रमेव निर्गलितम्फलं दृश्यते। परीक्षारीतिश्च कीदृशीं दुष्काष्ठामारूढेत्यस्मादेव स्पष्टं यत् परीक्षोत्तार एव चरमपुरुषार्थश्छात्राणामिदानीन्तनानां न पुनः शास्त्रज्ञानसम्पादनम्। अस्मादेव च कारणाद् वर्षमध्ये कार्तिकमारभ्य माघपर्यन्तं मासचतुष्टयमेवाधीयते तैः। तावन्मात्रेण कालेन परीक्षोत्तारापेक्षितस्य ग्रन्थज्ञानस्य कतिपयप्रश्नज्ञानस्यैव वा सुसम्पादत्वात्। किञ्चास्य फलम्। तदेव, यदुक्तिम्—परीक्षोत्तारो भवति शास्त्रज्ञानं न भवति। परीक्षाप्रचारात् प्राक् ये ग्रन्थास्त्रिभिश्चतुर्भिर्वा वर्षैरधीतास्तेऽधुना मासचतुष्टयमेव यथाकथञ्चित्समाप्यन्ते—तत्रान्यत् किम्फलं स्यात्। संस्कारसञ्जननमेवाध्ययनस्य फलम्—तत्र च कालोऽपेक्ष्यते। अस्य दुष्परिणामस्य प्रतीकारः सुसाध्य एव प्रतिभाति। यदि परीक्षोत्तारार्थं मासचतुष्टयमेव पर्याप्तं तर्ह्यवशिष्टेषु मासेष्वापाततोऽधीतानां ग्रन्थानां प्राचीनपरिपाट्या आलोडनं क्रियेत चेत् भविष्यत्येव संस्कारस्य परिशीलनम्। मासद्वयपरिमितं ग्रीष्मावकाशं वर्जयित्वा—विशेषतः परीक्षासमनन्तरं फाल्गुनचैत्रवैशाखमासेषु छात्रास्तादृशं गभीरं परिशीलनं कुर्युरित्यध्यापकैः पाठशालाव्यवस्थापकैश्च यतनीयम्। सामदानाद्युपायैरेतत्सम्पादनीयम्। एवमेव शास्त्ररसास्वादनं शास्त्रीयसंस्कारलाभश्चावश्यं भविष्यति। एवं कृते परीक्षाप्रचारजनितशास्त्राभ्यासप्रसारेण सहैव प्राचीनगम्भीरपाण्डित्यसम्पादनमपि भविष्यतीति हस्तद्वयेन मोदकावाप्तिः।

संस्कृतविद्यागाम्भीर्यमेव चास्माकमेतद्देशीयानां वैशिष्ट्यम्। पल्लवग्राहिपाण्डित्ये त्वन्य एव प्रवीणाः। अस्मादपि कारणात् प्राचीनगम्भीरविद्यासंरक्षणोपायः सर्वात्मनाऽस्माभिर्विधेयो भवति। अस्मिन् कार्ये विलम्बो न कार्यः। प्राचीनपरिपाटीपटूनां पण्डितानां सङ्ख्यायाः प्रतिदिनं ह्रास एव दृश्यते। कतिपयवर्षानन्तरं दृष्टान्तरूपेणापि केचन स्थास्यन्ति न वेत्यपि सन्देहास्पदम्।

काव्यनाटकादिपरिशीलनमपि छात्रेषु नोपलभ्यते। एवमेव तेषु व्युत्पत्तेरभाव एव भवति। अनध्यायदिनेषु मुख्यं शास्त्रं विहाय काव्यादिकमेव पाठयामासुः प्राचीना अध्यापकाः, छात्राणां जीवनं चैतावता प्रमोदपूर्णं बभूव। सायङ्काले च छात्रा उद्यानेषु नदीसरोवरादीनां तटेषु वैकत्रीभूय शास्त्रार्थेन काव्यचर्चया श्लोकादिगानैर्व्यायामादिभिश्च विनोदं वितेनिरे। अद्य तैतस्य प्रमोदविनोदस्थानं परनिन्दापिशाच्या

कवलितम् । किं बहुना । इदानींतनानां छात्राणां जीवने प्रमोदस्याभाव एव सर्वथा दृश्यते । स्वास्थ्यहानिरपि छात्राणामस्यैव परिणामः ।

सर्वस्यैतस्य परीक्षापरिपाटीदुष्परिणामस्य प्रतीकारः सुकरो भवति, यदि वयमैकमत्येन तत्र बद्धपरिकरा भवामः । अत्र च द्रव्यस्याऽप्यपेक्षा तादृशी नास्ति यतस्तदर्थं विलम्ब्येतास्माकं कार्यम् । अपेक्ष्यते तु सर्वतोभावेन कर्तव्यताध्यवसायः । स चेल्लब्धोऽन्यत् सर्वं सुलभम् ।

एतावतः प्रयासस्य किम्प्रयोजनमिति चेत्–धर्म एवेत्यवधेयम् । ब्राह्मणेन निष्कारणमेव वेदोऽध्येतव्य इति शास्त्रम् । वेदपदेन चात्र सर्वाश्चतुर्दशविद्याः सङ्गृह्यन्त इति साम्प्रदायिकानां सिद्धान्तः । शास्त्राध्ययनस्य शास्त्रज्ञानमात्रं मुख्यं फलम् । अन्यत् सर्वं जीविकासम्पत्त्यादि गौणं प्रासङ्गिकञ्च । एवं चेज्जीविकासम्पत्त्यनुकूलैव विद्याभ्यासपरिपाट्यनुसृता तर्हि मुख्यस्य फलस्य हानिरेव । जीविकासम्पत्तौ यादृशमदृष्टमपेक्ष्यते तस्मादत्यन्तभिन्नं शास्त्रज्ञानसम्पत्त्यापेक्षितमदृष्टम् । यतो न सर्वे पण्डितप्रकाण्डाः सर्वत्र जीविकालाभे कृतकृत्या भवन्ति, न च सुखजीविकाः सर्वे पण्डिता एवेति सुप्रसिद्धमेव । तत्त्वतस्तु जीविकासम्पादनेऽपि गभीरमेव पाण्डित्यं सफलतरं न पुनः पल्लवग्राहि । यदि पल्लवग्राहिणा पाण्डित्येन जीविकासम्पत्तिः स्यात्तर्हि ये केचनाङ्गलभाषापरिशीलितधिषणास्तेषां सर्वेषां संस्कृतज्ञानां जीविकालाभः सुलभः स्यात् । एवं तु न दृश्यते । बहव एतादृशा निर्जीविका एवेतस्ततः पर्यटन्त उपलभ्यन्ते ।

परीक्षाप्रकारः सुलभतरः कार्य इति भवति केषाञ्चिन्मतम् । यादृशी परीक्षाऽधुना भवति तादृश्यापि कीदृशं पाण्डित्यं सम्पाद्यत इति नाऽपरोक्षं सुधियाम् । एवं स्थिते यद्यत्रापि सौकर्यं स्यात्तर्हि कीदृशं पाण्डित्यं सम्पत्स्यत इति विमर्शनीयम् ।

संस्कृतपरीक्षासु भाषान्तराणामाधुनिकेतिहास—भूगोलादि विषयान्तराणां च समावेशो नातीवेष्टः । संस्कृतविद्यार्थिभिः पण्डितपदवी प्रार्थनीया न पटवारी पदवी । उक्तानां विषयाणामध्ययनमभीष्टं चेद्भवेत् केषाञ्चित्, पठन्तु नाम ते तानि — सर्वे निर्बन्धेन न पाठनीयाः ।

प्रश्नोत्तरप्रकारोऽपि पाठशालासु शिक्षणीयः । ग्रन्थानधीत्य प्रश्नोत्तरं सम्यग्जानन्तोऽपि सम्यगुत्तरे के कियन्तश्च शब्दा अपेक्षिता इति निश्चयो नातीव सुकरः । एवं च स्वबुद्ध्योत्तराणि विलिख्यापि यदा छात्रा अनुत्तीर्णा भवन्ति तदा परीक्षकेषु पक्षपातादिदोषमारोपयन्तो दृश्यन्ते ।

अध्यापकसविधे निवेदनीयं भवति यच्छात्राणामुपस्थितिबोधकपत्रेषूपस्थित्यनुपस्थिती यथार्थमेव लेखनीये । मिथ्यालेखनेन या कृपा प्रदर्श्यते सा प्रत्युत छात्राणामतीवाऽनर्थकरी भवति । प्रायः सर्वासां पाठशालानामुपरि कलङ्कोऽयमारोप्यते लोकैर्यदुपस्थितिपत्रं विश्वसनीयं न भवतीति; अध्यापकैस्तथा विधेयं यथाऽस्यारोपणस्यावकाशो न स्यात् ।

एते केचन विवेचनीया विषया उपलक्षणरूपेण प्रस्तुताः । सर्वानेतानपरांश्च संस्कृतसाहित्यसम्बन्धि विषयान् स्वस्थचित्तेन भवन्तो विचारयिष्यन्तीत्याशासे, पुनश्च प्रार्थये यदस्य सम्मेलनस्य सञ्चालनं चारुरूपेण यथा स्यात्तथा मम साहायकं भवद्भिर्विधेयमिति ।

धीराः कुशाग्रमतयो भवतः प्रणम्य
मौलौ निधाय करवारिरुहे समीहे ।
वाणीयमर्थरहिताऽपि विशृङ्खलाऽपि
सानुग्रहेण हृदयेन विवेचनीया ॥

❊ इति ❊



# धर्मसिद्धान्तः

( निब०-श्रीयुत पञ्चानन तर्करत्न महोदयाः । )

## अथाऽहिंसा ।

स चाऽधिकारिभेदेन हिंसासामान्यवर्जनरूपा वैधहिंसातिरिक्तहिंसावर्जनरूपा चेति वैकल्पिकी । तत्राऽऽद्यायां प्रमाणम्—

"मा हिंस्यात्सर्वा भूतानी"ति, "अग्नीषोमीयं पशुमालभेत" इत्यादिका च श्रुतिः—

या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥

इत्यादि—स्मृतिश्च ( मनु ५ म० अ० ) ।

अत्र वेदपदं धर्मप्रमाणपरम् । धर्मो हि निर्बभाविति हेतुवन्निगदस्वरसात् । श्रुतौ "भूतानी"त्यस्य प्राणिन इत्यर्थः । ते च जरायुजाण्डज-स्वेदजोद्भिज्ज-भेदाच्चतुर्विधाः । हिंसा प्राणवियोगफलको व्यापारः । तदेतद्धिंसाशब्दः शक्त्या हननमात्रवृत्तिरपि शक्तिभक्तिभ्यामनुमनन—विशसन—हनन—विक्रय—मांसक्रय-पचन—परिवेषण—भोजन—साधारणः, बन्धनादिरूपक्लेशजनकव्यापारसाधारणश्च ।

तथाच मनुः—

"अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्ता चोपहर्ता च खादकश्चेति घातकाः ॥"

अस्यार्थमाह कुल्लूकभट्टः—यदनुमतिव्यतिरेकेण हननं कर्तुं न शक्यते सोऽनुमन्ता । विशसिता—अङ्गानि यः कर्त्तर्यादिना पृथक् पृथक् करोति । निहन्ता—मारयिता । क्रयविक्रयी—मांसस्य क्रेता विक्रेता च । गोविन्दराजस्तु "यः क्रीत्वा विक्रीणाति स क्रयविक्रयी"त्येकमेवाऽऽह ।

तदयुक्तम्—

"हननेन तथा हन्ता धनेन क्रायकस्तथा ।
विक्रयी तु धनादानां संस्कर्ता तत्प्रवर्तनात् ॥"

इति यमवचनेन पृथङ्निर्देशात् । संस्कर्ता पाचकः । उपहर्ता परिवेषकः । खादको भक्षयिता । वस्तुतः—विक्रयीत्यस्य न मांसस्य विक्रेतेत्येतन्मात्रमर्थः । किन्तु घातकस्वत्वप्रयोजकं पशुविक्रयं यः करोति, यश्च मांसं विक्रीणीते तौ द्वौ विक्रयिशब्देनोच्येते । विक्रयोऽप्यत्र विक्रय-विनिमयाऽन्यतररूपः । एकत्र तथा दर्शनात् ।

"विक्रयैर्गां विनिमयै र्दत्वा गोमांसखादके ।
व्रतं चान्द्रायणं कुर्याद्वधे साक्षाद्वधी भवेत् ॥"

इति स्मार्त—धृतस्मृतिसागरसारीयगोभिलवचनात् । दानमपि कैमुतिकन्यायेन ग्राह्यम् । पाकादिकं मांसस्यैवेति बोध्यम् ।

अत्र हननपदेन हन्तृत्व-हननप्रयोजकत्वे प्रत्येतव्ये । प्रयोजयिता, अनुमन्ता, कर्ता, चेति सर्वे स्वर्ग—नरक—फल भोक्तार इत्यापस्तम्बसूत्रेण प्रयोजयितुरपि प्राप्त्या तस्य निहन्तर्य्यन्तर्भावनस्यैवौचित्यात्प्रयोजयितृसाधारणत्वात् कर्तृत्वस्य । यद्वा अनुमन्तृपदेनैव अनुमन्तृप्रयोजयित्रोर्ग्रहणम् ।

ननु अस्तु तावदनुमननहननयोर्हिंसारूपत्वं, प्राणिघातिनि प्राणिविक्रयस्य हिंसोदर्कतया बन्धनादेश्च क्लेशजनकतया भवतु नाम कथञ्चित्तथात्वमितरेषान्तु मांसोत्पादनहेतु-विशसन—मांसक्रयादिरूपमांसतन्त्रव्यापाराणां कथं हिंसात्वमनुभवगम्यमिति चेन्नैवम् ।

दृश्यते हि बहवोधनार्थितया हननाय प्रवर्तन्ते, न च तेषां सर्वेषां हननमात्रेण धनलाभः किन्तु, मांसविक्रयेण ।

न च मांसमपि हननमात्रेण सम्पद्यते, किन्तु विशसनेन । नापि विक्रयः क्रेतारमन्तरेण सम्भवति । क्रयोऽपि तस्य धनार्थं वा भोजनार्थं ? धनार्थं चेद्भोक्तरि पुनर्विक्रयाय भवति । भोक्ता च पचनपरिवेषणे ह्यपेक्षमाणस्तृप्तिकामो भुक्त्यै प्रवर्तते इत्येवं विशसनादिरूपमांस–तन्त्रव्यापाराणामनेकहिंसोपयोगितया हिंसारूपत्वमिति । तथाच मनुः—

नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् ।
न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं विवर्जयेत् ॥

मांसं विवर्जयेदित्यस्य मांसविशसन–क्रयविक्रयादिरूपं क्रियावित्तं न कुर्यादित्यर्थः । मांसं न भक्षयेदिति तु कुल्लूक भट्टादयः ।

अत्रापि विशसनादीनां प्रायेण भोजनसापेक्षतया भोजननिवृत्त्यैव तन्निवृत्तिरित्याशयेन विशेषेण भोजननिवृत्तिमुपदिशति स एव —

"समुत्पत्तिं च मांसस्य वधबन्धौ च देहिनाम् ।
प्रसमीक्ष्य निवर्तेत सर्वमांसस्य भक्षणात् ॥
वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः ।
मांसानि च न खादेद्यस्तस्य पुण्यफलं समम् ॥"

अशक्तावाह—

"क्रव्यादान्शकुनीन्सर्वां स्तथा ग्रामनिवासिनः ।
अनिर्दिष्टांश्चैकशफां ष्टिट्टिभं च विवर्जयेत् ॥
कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम् ।
सारसं रज्जुवालं च दात्यूहं शुकसारिके ॥
प्रतुदान् जालपादांश्च कोयष्टिनखविष्किरान् ।
निमज्जतश्च मत्स्यादान्सौनं वल्लूरमेव च ॥
बकञ्चैव वलाकञ्चं काकोलं खञ्जरीटकम् ।
मत्स्यादान्विड्वराहांश्च मत्स्यानेव च सर्वशः ॥"

क्रव्यादाः शकुनादयो गृध्रादयः । ग्रामवासिनः पारावतादयः । टिट्टिभः पक्षिविशेषः । कलविङ्कश्चटकः हंस-चक्रवाकयोः पृथग्ग्रहणम् जालपादान्तराणामापदि भक्षणानुज्ञानार्थम् । प्रतुदाश्चञ्च्वा प्रतुद्य भक्षयन्ति ये दार्वाघाटादयः । जालपादाः सरारिप्रभृतयः । नखविष्किरा श्येनादयः । नखविष्किरग्रहणेन ग्रामकुक्कुटस्य प्राप्तावपि पूर्वं ग्रामकुक्कुटग्रहणं ग्रामारण्यकुक्कुटस्य भक्ष्यत्वाभ्यनुज्ञानाय । निमज्जतो मत्स्यादा निमज्ज्य ये मत्स्यान्खादन्ति ते मद्गुप्रभृतयः । सौनं मारणस्थानभवं वल्लूरं शुष्कमांसम् । काकोलो द्रोणकाकः । मत्स्यादा नक्रादयः । विशेषातिरिक्ताः सव मत्स्याः ।

स्मार्तधृतः शङ्खः—

"गामश्वरं कुञ्जरोष्ट्रौ च सर्वं पञ्चनखं तथा ।
क्रव्यादं कुक्कुटं ग्राम्यं कुर्यात्संवत्सरं व्रतम् ॥"

स्मार्ता हि तथेत्यस्य भुक्त्वेत्यर्थमाहुः । युक्त ञ्चैतत्, प्रकरणात् । क्रियापदरहितानां कर्मपदानां निराकाङ्क्षत्वेनाऽन्वयायोगाच्च ।

अद्यतनमुद्रितशङ्खसंहितायां सप्तदशाध्याये यदेतत्सदृशवचनं दृश्यते तत्र "गामश्वं कुञ्जरोष्ट्रावि" त्यत्र "गौधेरकुञ्जरोष्ट्रमि"ति पाठः । वक्ष्यमाणश्रुत्या ( ऋग्वेद ८ मण्डले १३ अ० ९० सूक्ते १५ ऋचा ) गोवधस्य विशेषतो निषिद्धतया—

"नाऽकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित्"

इति मनूपदर्शितन्यायाच्च । गोवधमूलकगोमांसभक्षणस्यैव निषेधः शङ्खसम्मतो भवितुं युक्त इति स्मार्तधृतपाठ एव श्रेयान् ।

मुद्रितपाठस्तु प्रामादिकः । गोमांसभक्षणे व्यक्तं प्रायश्चित्तमाह पराशरः—

"अमेध्यरेतोगोमांसं चाण्डालान्नमथापि वा ।
यदि भुक्तञ्च विप्रेण कृच्छ्रं चान्द्रायणं चरेत् ॥
तथैव क्षत्रियो वैश्यस्तदर्धं च समाचरेत् ।

शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत्॥
(अ० ११।११२)

विष्णुरपि—

"मलानां मद्यानाञ्चाऽन्यतमप्राशने चान्द्रायणं कुर्यात्। लशुनपलाण्डु-गृञ्जनैतद्गन्धि-विड्वराह-ग्राम्यकुक्कुट-वानर-गोमांस-भक्षणे चे"ति।

मनुः—

"न भक्षये देकचरानज्ञातांश्च मृगद्विजान्।
भक्ष्येष्वपि समुद्दिष्टान्सर्वान्पञ्चनखां स्तथा॥"

सामान्यतो निषिद्धेतरतया भक्ष्यतया सम्भावितानिति "भक्ष्येष्वपि समुद्दिष्टानि" त्यस्याऽर्थः।

वैधहिंसा च त्रिविधा पारलौकिकदुःखविशेषानुत्पाद-सुखान्यतर साधनात्मक धर्मरूपा। वृत्तिरूपा, आततायिनिग्रह—रूपा च। तत्राऽऽद्ये प्रत्येकं द्विधा। नियतानियत-भेदात्। पारलौकिक-दुःखनिवृत्ति सुखान्यतरसाधनमात्ररूपा नियता।

यथा—क्षत्रियाणां धर्मयुद्धे रिपुहननम्। तथाहि विष्णुसंहितायां—"द्विजातिधर्मोपक्रमे ब्राह्मणस्याऽध्यापनम्। क्षत्रियस्य शस्त्रनित्यतेति। श्रीमद्भगवद्गीतायामर्जुनं प्रति श्रीकृष्ण-वाक्यम्,—

"स्वधर्ममपि चाऽवेक्ष्य न विकम्पितुमर्हसि।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते॥"

एवमन्येऽपि वध्य-वधाऽऽदयो राजधर्मा द्रष्टव्याः।

अनियता यथा—ब्राह्मणादीनां यागादौ पूजादौ च हिंसा। तथाहि श्रुतिः—

"अग्नीषोमीयं पशुमालभेते"ति। वायव्यं श्वेतमालभेते"ति च।

विष्णुः—

"अनुपातकिनस्त्वेते महापातकिनो यथा।
अश्वमेधेन शुध्यन्ति"।

तिथितत्त्वधृतभविष्यपुराणम्—

"अजानां महिषाणाञ्च मेषाणाञ्च तथा वधात्।
प्रीणयेद्विधिवद्दुर्गां मांसशोणिततर्पणैः॥"

"वशिष्ठः—पितृदेवताऽतिथिपूजायां पशुं हिंस्यात्।"

गौतमः—न दोषो हिंसायामाहवेऽन्यत्र व्यश्वसारथ्यायुधकृताञ्जलि-प्रकीर्णकेश—पराङ्मुखोपविष्ट—स्थलवृक्षारूढ—गोब्राह्मणवादिभ्यः क्षत्रियश्चेत्। अन्यस्तमुपजीवेत्तद्वृत्तिः स्यात्। अन्यस्तमुपजीवेत्तद्वृत्तिः स्यादित्यक्षत्रियाणामापद्वृत्तिरूपां हिंसा मनुजानाति। इदमुपरिष्टाद्विवेचयिष्यामः। गोब्राह्मणवर्णधर्मरक्षाद्यर्थमक्षत्रियाणां परिपन्थिनिवर्हणमप्येतद्रूपम्। तथा च महाभारतम्—

"ब्रह्मवीर्ये मृदूभूते क्षात्रवीर्ये च दुर्बले।
दुष्टेषु सर्ववर्णेषु ब्राह्मणान्प्रति सर्वशः॥
ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः।
ब्राह्मणान्परिरक्षन्तो धर्ममात्मानमेव च॥
मनस्विनोमन्युमन्तः पुण्यश्लोका भवन्ति ते।
ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते॥"

तथा—

"अपारे यो भवेत्पारश्चाऽप्लवे यः प्लवो भवेत्।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति॥"

एवम्—

"स्वाम्यर्थे ब्राह्मणार्थे च मित्रकार्ये च ये हताः।
गोग्रहे निहता ये च ते नराः स्वर्गगामिनः॥"

शुद्धितत्त्वीयविष्णुधर्मोत्तरवचनं स्वाम्याद्यर्थं निहतस्य स्वर्गफललाभमुपदिशत्तदर्थहिंसां विदधाति।

मनुः—

"शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते।
द्विजातीनाञ्च वर्णानां विप्लवे कालकारिते॥
आत्मनश्च परित्राणे दक्षिणानाञ्च सङ्गरे।
स्त्रीबालाऽभ्युपपत्तौ च धर्मेण घ्नन्न दुष्यति॥
ब्राह्मणस्त्रीषु कालेषु शस्त्रं गृह्णन्न दुष्यति।
आत्मत्राणे वर्णदोषे दुर्दम्यनियमेषु च॥"

आत्मपरित्राणादिसमभिव्याहारान्न दुष्यतीति वस्तुतो वर्णधर्मरक्षार्थं द्विजातिभिः शस्त्रं ग्राह्यमिति विधिः । अश्वमेधगवालम्भ-पलपैतृकादीनां क्वचिद्विहितानामपि कलौ निषिद्धतया तादृशहिंसा कलौ न वैधीति बोध्यम् । प्रमाणन्तु—

अश्वमेधं गवालम्भं सन्यासं पलपैतृकम् ।
देवरेण सुतोत्पत्तिं कलौ पञ्च विवर्जयेत् ।।

इति सायनाचार्य-रघुनन्दनादि धृतवचनम् ।

अत्रेदं बोध्यम्— क्षत्रियो यया रणचर्यया नोपजीवेत्सा हि तस्य धर्मरूपा । यया वोपजीवेद्वृत्तिरूपामेव तस्य तामवेहि । एव मेव ब्राह्मणस्याध्यापनमपि धर्मरूपं वृत्तिरूपं च वेदितव्यम् । अत एव विष्णुर्य धर्ममाह सैव मनूक्ता वृत्तिः । तथाहि—

"शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्पशु-कृषिर्विशः ।
आजीवनाऽर्थं धर्मस्तु दानमध्ययनं यदि ।।"

विष्णुश्च द्विजातिधर्मानुपक्रम्य ब्राह्मणस्या-ध्यापनमिति ( २ अ ) सूत्रेणाऽध्यापनं ब्राह्मणस्य धर्म इत्युपदिशन्पुरस्ताद्वृत्तिरूपस्याऽध्यापनार्थं धर्मरूपतां निषेधति—

"यश्च विद्यामासाद्याऽस्मिंल्लोके तया जीवेत्, न सा तस्य परलोके फलप्रदा भवेदि"ति । ( ३० अ० )

अतएव मनुः—

"अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ।।
षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।
याजनाऽध्यापने चैव विशुद्धाच्च प्रतिग्रहः ।।"

एतेन क्षत्रियस्य नियतवृत्तिरूपा हिंसा व्याख्याता । एवं निषादादीनामपि नियतवृत्तिरूपा हिंसा भवति । यथा मनुः—

"मत्स्यघातो निषादानां त्वष्टिस्त्वायोगवस्य च ।
क्षत्तुग्रपुक्कसानां तु बिलौको वध-बन्धनम् ।।"

चाण्डालश्वपचानुपक्रम्य स एव—

"वध्यांश्च हन्युः सततं यथा शास्त्रं नृपाज्ञया ।"

अनियतवृत्तिरूपा यथा— ब्राह्मणस्याऽऽपदि क्षत्रवृत्तिः—

"अजीवँस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा ।
जीवेत्क्षत्रियधर्मेण सह्यस्य प्रत्यनन्तरः ।।"

इति मनुना स्मरणात्, आपद्यनन्तरा वृत्तिरिति विष्णुस्मरणाच्च । यत्तु गौतमः—

"अन्यस्तमुपजीवेत्तद्वृत्तिः स्यादित्यनेन क्षत्रोपजीविवर्णान्तरस्य क्षत्रवृत्तित्वोपदेशेनाऽऽहवे हिंसामाचरणीयामभ्यनुजानाति । तदप्यापद्विषयम् । अन्यथा—

"अध्यापनमध्ययनमि"त्यादि वचनै र्मन्वाद्युक्त्या ब्राह्मणस्याधिकाः प्रवचन-याजन प्रतिग्रहा इति । ( १० अ० ) । स्वोक्तया वृत्तिव्यवस्थया "अजीवन्नि" त्यादि विशेषवचनेन ( मनुः ) च विरोधो दुर्वारः स्यात् ! । प्राणाऽत्यये हेतुभूतां क्षुधमुपशमयितुकामस्य गत्यन्तरविरहितस्य ये हननमांसभोजने ते अप्यनियतवृत्तिरूपायां हिंसायामन्तर्भवतः । वर्तनहेतुत्वादवस्थाविशेषमात्रनिर्दिष्टत्वाच्च । यथोक्तं मनुना—

"अजीगर्तः सुतं हन्तुमुपासर्पद्बुभुक्षितः ।
न चाऽलिप्यत पापेन क्षुत्प्रतीकारमाचरन् ।।
श्वमांसमिच्छन्नार्त्तोऽत्तुं धर्माऽधर्मविचक्षणः ।
प्राणानां परिरक्षार्थं वामदेवो न लिप्तवान् ।।"

अन्यच्च—

"क्षुधार्तश्चाऽत्तुमभ्यागाद्विश्वामित्रः श्वजाघनीम् ।"

वृत्तान्तोऽयं विस्तरेण वर्णितो महाभारते । अन्या पुनश्चतुर्विधा— स्वधर्मरक्षार्था, स्वप्राणरक्षार्था, स्वद्रव्यरक्षार्था, स्वयशोरक्षार्था, चेति । द्रव्यपदेन स्त्रीपुत्रक्षेत्रपशुहिरण्यादीनां ग्रहणम् । तथा च मनुः—

नाततायिवधे दोषो हन्तुर्भवति कश्चन ।
प्रकाशञ्चाऽप्रकाशञ्च मन्युस्तन्मन्युमृच्छति ।।

आततायी तु—

उद्यतासिविषाग्निञ्च शापोद्यतकरं तथा।
आथर्वणेन हन्तारं पिशुनञ्चैव राजसु॥
भार्यातिक्रमिणञ्चैव विद्यात्सप्तातातायिनः।
यशोवित्तहरानन्यानाह धर्मार्थहारकान्॥

इति विष्णूक्तः।

राजसु पिशुनं वधदण्डफलकेनाऽपराधेन धर्माधिकरणेऽनृतेनाऽभिशंसन्तमित्यर्थः। वैधहिंसारतस्याऽलब्धकामस्य मरणेऽपि शुभमाह तृतीयाऽध्याये पराशरः—

"ब्राह्मणार्थे विपन्नानां वन्दिगोग्रहणे तथा।
आहवेषु विपन्नानामेकरात्रन्तु सूतकम्॥
द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदकौ।
परिव्राड् योगयुक्तश्च रणे चाऽभिमुखे हतः॥
यत्र यत्र हतः शूरः शत्रुभिः परिवेष्टितः।
अक्षयांल्लभते लोकान्यदि क्लीवं न भाषते॥
जितेन लभ्यते लक्ष्मीर्मृतेनाऽपि सुराङ्गनाः।
क्षणविध्वंसकेऽमुष्मिन्का चिन्ता मरणे रणे?।
यस्तु भग्नेषु सैन्येषु विद्रवत्सु समन्ततः॥
परित्राता यदा गच्छेत्स च क्रतुफलं लभेत्।
यस्य च्छेदक्षतं गात्रं परशक्त्यृष्टि मुद्गरैः॥
देवकन्यास्तु तं वीरं गायन्ति रमयन्ति च।
वराङ्गनासहस्राणि शूरमायोधने हतम्॥
नागकन्याश्च धावन्ति "मम भर्ता भवेदिति"॥

ललाटदेशाद्रुधिरं हि यस्य
तप्तं च जन्तोः प्रविशेच्च वक्त्रे।
तत्सोमपानेन हि यस्य तुल्यं
सङ्ग्रामयज्ञे विधिवच्च दृष्टम्॥
यं यज्ञसङ्घैस्तपसा च विद्यया
स्वर्गैषिण श्चाऽत्र यथैव विप्राः।
तथैव यान्त्येव हि तत्र वीराः
प्राणान्सुयुद्धेन परित्यजन्तः॥ इति

यत्तु गीतायाम्—

'पापमेवाऽऽश्रयेदस्मान्हत्वैतानाततायिनः'

तन्निवृत्तिधर्मकामस्याऽर्जुनस्याऽभिप्रायमनुरुध्योक्तम्। न तु तत्त्वतः। निवृत्तिधर्मे तस्याऽनधिकारस्य भगवता स्पष्टमुक्तत्वात्। मांसभोजनरूपा गौणी हिंसा च यथोक्तधर्मरूपायां वृत्तिरूपायां वा यथायथमन्तर्भूता वैधी। वैधमांसभोजनरूपतया वा पृथग्गणनीया। तथाहि याज्ञवल्क्यः—

"भक्ष्याः पञ्चनखाः श्वाविद्गोधा कच्छप-शल्लकाः।
शशश्च मत्स्येष्वपि च सिंहतुण्डकरोहिताः॥
तथा पाठीनराजीवौ सशल्काश्च द्विजातिभिः॥"

मनुरपि—

"पाठीनरोहितावाद्यौ नियुक्तौ हव्य—कव्ययोः।
राजीवान्सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः॥

अद्यादिति शेषः।

मनुः—

"यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः।
प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया॥
यथाविधिनियुक्तस्तु प्राणानामेव वाऽत्यये।
स्वमांसं परमांसेन यो वर्द्धयितुमिच्छति॥
अनभ्यर्च्य पितॄन्देवांस्ततोऽन्यो नास्त्यपुण्यकृत्।"

तथा च प्रागुक्तवचन—जातप्रतिषिद्धव्यतिरिक्तानि व्यक्तं विहितानि च मांसानि यज्ञशेष—श्राद्धशेषरूपाणि, देवनैवेद्यरूपाणि वा भुञ्जीत, तदितरस्याऽपि श्राद्धे नियुक्तो ब्राह्मणकाम्यया वा प्राणाऽत्यये वेति।

हिंसायां विशेषनिषेधमाह—

"माता रुद्राणां दुहिता वसूनां,
स्वसाऽऽदित्यानाममृतस्य नाभिः।
अनुवोचं चिकितुषे जनाय,
मागामनागामदितिं वधिष्ट॥"

(८ मः १ मः ९० सूक्ते ५)

अस्यार्थः सायणाचार्येणोक्तो यथा—

या गौ रुद्रपुत्राणां मरुतां माता जननी। वसूनां दुहिता पुत्री। आदित्यानां स्वसा भगिनी। अमृतस्य पयसो नाभिः—आवासस्थानम्। तां, अनागां+अनागसं, अदितिं+अदीनां, गां+गोरूपां देवीं मा वधिष्ट! हे जना! मा हिंसिष्टेति। चिकितुषे चेतनावते जनाय नु इदानीं प्रावोचं, अहं प्रावोचमिति।"

श्रुत्यन्तरं—

'ब्राह्मणान्नावगुरेन्न हन्यान्न लोहितं कुर्यादिति" अवगोरणं दण्डाघातोद्यमः। मनुः—

"बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः।
शरणागतहन्तॄँश्च स्त्रीहन्तॄंश्च न सम्वसेत्॥"

इति नरवधे विशेषनिषेधश्च राजकृतः सिद्ध एवेति तन्न प्रपञ्चितम्।

अथ भाक्तब्रह्महत्या।

सा च निःस्वब्राह्मणं स्वयं भिक्षार्थमाहूय नास्तीत्युक्त्वा प्रत्याख्यानम्। अनाततायिविद्वद्वृत्तिहरणं, तृषार्तगोयूथस्य जलपानप्रतिबन्धः, अजानता श्रुतिस्मृत्योरसदर्थकल्पनं, सदृशे वराय दुहितुरसम्प्रदानं, मर्मातिगालीकशोकवार्तया परदुःखोत्पादनं, अन्धकाण-पङ्गु-जड़ानां सर्वस्वहरणं, आश्रम-वन-ग्राम नगराणामन्यतमत्राऽग्निक्षेपश्चेत्यष्टविधा। अत्र च प्रमाणं महाभारतानुशासनपर्वीयचतुर्विंशाध्याये द्रष्टव्यम्।

तत्र हि मुख्या हिंसा सर्वप्राणि-साधारणी सम्भवति। गौणी च यथा सम्भवमुन्नेया। यो हि मुख्यया गौण्या च वैधव्यतिरिक्तया हिंसया कमपि प्राणिनं न दुःखाकर्तुं कामयतेऽपि सोऽहिंसक इत्युच्यते।

"योबन्धनवधक्लेशान्प्राणिनां न चिकीर्षति।
स सर्वस्य हितप्रेप्सुः सुखमत्यन्तमश्नुते॥"

इति मनुवचने चिकीर्षतीत्यनेन तत्तत्कामनापर्यन्तवर्जनस्य प्रकृष्टतत्तद्वर्जनरूपतायाः सूचनात्। एवमनृतविवर्जनादावपि बोध्यम्। अतएव—

"परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम्।
वितथाभिनिवेशश्च त्रिविधं कर्म मानसम्॥"

इति दशविधपापगणनायां मानसपापत्रयमभिहितम्।

परद्रोहसामान्यवर्जनरूपा मुख्या ह्यहिंसा मुमुक्षुधर्मः। सर्वमांसभोजन-विशसन-क्रयविक्रय-पचन-परिवेषण-निवृत्ति निरुक्तधर्मरूपाततायिविग्रहरूपाभ्यां वैधहिंसाभ्यामतिरिक्ताया हिंसाया वधबन्धनप्रहार तत्प्रवर्तन-तदनुमानरूपाया वर्जनं च संसारासक्तब्राह्मणस्य प्रकृष्टो धर्मः। अनापदि ब्राह्मणस्य वृत्तिरूपहिंसाया असम्भवात्। क्षत्रियादीनां वृत्तिरूपहिंसाऽप्यहिंसां न व्याहन्तीति प्रागुक्तम्। अशक्तौ प्राक्प्रतिषिद्धेतरमांसमात्रभोजनेऽप्यहिंसा भवति ग्राम्यकुक्कुटादिमांसभोजनादिनिषेधो द्विज-सच्छूद्रसाधारणः। सच्छूद्राणां वैश्यतुल्यसदाचारत्वेन कीर्तनात्। तथा च मनुः—

"शूद्राणां मासिकं कार्यं वपनं न्यायवर्तिनाम्।
वैश्यवच्छौचकल्पश्च द्विजोच्छिष्टं तु भोजनम्॥"

इति। अन्येषां तन्निवृत्तिकाम्या। गोमांसं तु सर्वैरविशेषेण वर्जनीयम्। कलौ गोवधस्य विशेषतो निषेधात्। मांसभोजनस्य तद्वधाधीनत्वाच्च स्वयं मृतपशुमांसञ्च सर्वैरेव वर्जनीयम्। रोगहेतुत्वेनाऽभिधानात्।

गो-ब्राह्मण-बाल-स्त्री-शरणागतोपकर्तृहिंसायां तु विशेषेण विरन्तव्यम्। प्रागुपदर्शितप्रमाणसिद्धान्तादन्यदवधारणीयमिति सङ्क्षेपः।

इत्यहिंसाप्रकरणम्।

# अथाऽस्तेयम्।

स्तेयं नाम—अवैधेनोपायेन द्रव्यस्य ग्रहणम्। द्रव्यग्रहणे वैधोपायाश्च मनुना प्रोक्ताः—

"सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः।
प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च॥"

(१० म० अ०)

तदर्थः—कुल्लूकभट्टादिसम्मतो यथा—

दायाद्याः सप्त धनागमाः। यथाधनाधिकारं धर्मादनपेताः। तत्र दायोऽन्वयागतधनम्। लाभो निध्यादेर्मैत्र्यादिलब्धस्य च। क्रयः प्रसिद्धः। एते त्रयः सर्वेषां मानवानां धर्म्याः। जयधनं विजयत्वेन क्षत्रियस्य धर्म्यम्। प्रयोगो वृद्ध्यादिः। कर्मयोगः—कृषि-वाणिज्ये। प्रयोग-कर्मयोगौ वैश्यस्य धर्म्यौ। सत्प्रतिग्रहो ब्राह्मणस्य धर्म्यः। एवं चैतेषां धर्म्यत्व-वचनादन्येष्वनापद्विहितेषु वृत्तिकर्मसु प्रवर्तितव्यम्। तदभावे चापद्विहितेष्विति। अनापद्विहिता आपद्विहिताश्च वृत्तयो वक्ष्यन्ते। क्रयशब्दाद्विक्रय—विनिमयौ तुल्ययोगक्षेमतया ग्राह्यौ। अनपगतपरस्वानां द्रव्याणा-मात्मसात्करणमिति फलितार्थः।

अत्र परस्वत्वपदं स्व-स्वत्व-प्रतिबन्धकपरम्। तेन दीयमानधनस्य दानप्रतिग्रहयोरन्तराले प्रतिग्रहीतृत्वेन दात्रभिमतादन्येन पुरुषेण यदात्मसात्करणं तस्य नाऽसङ्ग्रहः। तथाविधस्तेयाऽभावोऽस्तेयम्। तत्र श्रुतिरपि प्रमाणमस्ति—

"ईशावास्यमिदं सर्वं यत्किञ्चिज्जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥"

(यजुर्वेदमाध्यन्दिनशाखा ४० अ०)

अस्य मन्त्रस्य कर्माचार्यपारम्पर्यसम्मतोऽर्थः—

'यत्किञ्चिज्जगत्—जडजातं, जगत्यां ब्रह्माण्डे, 'वर्तते' इति शेषः। इदं तदिदं सर्वं, ईशा ईश्वरेण, वास्यं, वासनीयं यथावत्स्थापनीयमितियावत्। (अतः) कस्य स्वित् कस्याऽपि धनं मा गृधः—मा काङ्क्षीः। त्यक्तेन तेन (धनेन) भुञ्जीथाः सुखमाप्नुयाः! कस्य-स्विदित्युक्त्या अन्यस्येति गम्यते, अन्यथा तदुपादान-मनर्थकं स्यादिति भावः। ईश्वरो हि विश्वराजः, यथावद्वस्तु रक्षति। तं हि सर्वदर्शिनं वञ्चयित्वा परधनग्रहणमसम्भवम्। अतस्तत्र लोभो न कर्तव्यः। परधनानां लोभाविषयत्वे तेनैवाऽस्तेयधर्मेण सुखमाप्नुया इति भावः। स्मृतिवचनानि च मनुसंहिताष्टमाध्यायादिस्थानि बहूनि सन्ति। अनतिप्रयोजनकतया बाहुल्यभिया च तदुल्लेखाद्विरम्यते। अवैधोपायेन छलबलादिना परस्य यशोनाशनं धर्मनाशनञ्च गौणस्तेयम्। अत एवाऽऽततायि गणनायां विष्णुना—

"यशो वित्तहरानन्यानाहुर्धर्मार्थहारकान्।"

इत्यत्र यशो धर्मयो रन्यतरत् धर्मत्वेनाऽऽरोपितम्।

यद्वा वित्तपदार्थवस्तुविशेषयशसोरर्थपदार्थवस्त्वन्तरविशेषधर्मयोश्चैकया हरणक्रियया सम्बन्ध उक्तः। तथा च तेषां समानरूपत्वमभिप्रेयते। अनेनोपायेन परकीयाधिकारभ्रंशनरूपमपहरणमाश्रित्य तत्कर्तृतया तथैव प्राणादिनाशकेषु, परकीयवृक्षादिच्छेदकेषु, चौरादिपदप्रयोगोऽपि घटते।

इत्यन्यदेतत्।

किञ्च—

"योऽदण्डादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्।
याजनाऽध्यापनेनाऽपि यथा स्तेनस्तथैव सः॥"

(८ मः अ०)

इति मनुवचनाच्चौरप्रतिग्रहोऽपि चौर्यसमानः। एवमिति अस्तेयरूपसामान्याभावप्रतियोगितया तस्याऽपि ग्रहणमावश्यकम्।

"इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः।
तै र्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः॥"

इति श्रीमद्भगवद्गीतावचनात् । देवसात्कृतव्यतिरिक्तान्नभोजनमपि स्तेयरूपमित्यादि मुख्यलक्ष्यस्तेयाभावो धर्मः । आदिपद ग्राह्यं कूटपण्य—विक्रय-चौर—भक्तादिदानरूपं दिङ्मात्रमुदाह्रियते ।

"द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारकान् ।
प्रकाशांश्चाऽप्रकाशांश्च चारचक्षुर्महीपतिः ॥
प्रकाशा वञ्चकास्तेषां नानापण्योपजीविनः ।
प्रच्छन्न वञ्चकास्त्वेते ये स्तेनाऽऽटविकादयः ॥"
( ९ म० अ० )

इति मनुवचनम् ।

"भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।"
दत्त्वा चौरस्य हन्तुर्वा जानतो दण्ड उत्तमः ॥" इति
(२ य० अ० २७९) याज्ञवल्क्यः ।

अशक्तौ विशेषस्तु मनुगोतमोक्तो वर्तमानराजविधिप्रतिषिद्धोऽपि धर्मस्वरूपप्रदर्शनाय प्रदर्श्यते ।

मनुः—

"वानस्पत्यं मूलफलं दार्वग्न्यर्थं तथैव च ।
तृणञ्च गोभ्यो ग्रासार्थमस्तेयं मनुरब्रवीत् ॥"
( ८ म० अ० )

गोतमः—

"वीरुद्वनस्पतीनां पुष्पाणि स्ववदाददीत ।"
( १२ । अ० )

इति ।

इत्यस्तेयप्रकरणम् ।

---

श्रीमत्परमहंस परिव्राजकाचार्यवर्येत्याद्यनेक विरुदावली विराजितैः श्रीमज्जगद्गुरुश्रीशंकराचार्य—
संकेश्वरकरवीरपीठाधिष्ठितैः—

**श्रीमदभिनवसच्चिदानंदविद्यानृसिंहभारती—**

स्वामिमहाराजचरणैः गोब्राह्मणपरिपालनैकधुरीण श्रीमत्पटवर्धन कुलतिलक मिरजराज्याधिपति—
**श्रीगंगाधरराजस्य** ज्येष्ठसुतस्य यौवराज्यमलंकुर्वाणस्य **श्रीनारायणराजस्य** तनुजनुषः—
आयुष्मतः **श्रीमाधवराजस्य** उपनयनमहोत्सवेऽनुगृहीतम् ॥

# मंगलाशीर्वचनम् ।

पांचालीपरिरक्षणैकरसिकः प्रावर्धयत् यः पटान्, ख्यातोऽयं पटवर्धनेत्यभिजनः तस्य प्रसादाद् भुवि ।
**श्रीगंगाधरभूपतिः** सुचरितस्तद्वंशमुक्तामणिः, पौत्रस्य व्रतमंगले प्रभवतु **श्रीसद्गुरो**राशिषा ॥ १ ॥
तस्य ज्येष्ठसुतादृगभीरमनसः सद्यौवराज्ये स्थितात्, **श्रीनारायणराजतो** धृतजनुर्जैवातृको **माधवः** ।
अस्तोकैर्विभवैः कृतोपनयनो मेधां व्रजेत्पावनीम्, आयुः पूर्णमथो बलं निरुपमं ब्राह्मं च वर्चः परम् ॥ २ ॥
**धर्मो** हि प्रभवः सुखस्य गदितो यश्चोदनालक्षणः,सा स्वाध्यायनिषेवणात् स्वधिगमा तत्राधिकारी द्विजः ।
एषा च द्विजता यथोक्तविहितात्संस्कारतः प्राप्यते, तेनाऽनेन सुसंस्कृतो बटुरयं ब्राह्मीं श्रियं प्राप्नुयात् ॥३॥
कारुण्येन सुरार्थितः कलियुगे भिन्दन् भिदां वादिनाम्, अद्वैतं निगमागमोचितमिह व्याचष्ट सायुज्यदम् ।
स श्रीमद्भगवत्पदाभिधपरिव्राडीश्वरः **शंकरः**, स्वच्छात्रस्य बटोरिहोपनयने कुर्यात् परं मंगलम् ॥ ४ ॥
कल्याणं सहराष्ट्रकस्य नृपतेः कुर्याद्बटोश्च स्थिरं, **हेरम्बः** कुलदैवतं स भगवान् भक्तेष्टकल्पद्रुमः ।
दद्याद्भक्तिमतिस्थिराञ्च विमलामाचार्यपीठाश्रितां, जीयाच्चान्वय एष शाश्वत इह **श्रीशारदानुग्रहात्** ॥ ५ ॥

॥ इति शिवम् ॥

# धर्माधर्मयोर्वंशनिरूपणम् ।

[ निबन्धकः—श्रीशङ्करशास्त्री, काशी । ]

श्रीमद्भागवते चतुर्थस्कन्धे धर्माधर्मयोर्वंशः सृष्टिप्रक्रियामाश्रित्य मनोहारिणा प्रकारेण निरूपितः । स चेत्सम्यग्विचार्यते तर्हि महानुपकारः सम्भाव्येत ! इति मत्वा पाठकानाम्पुरतस्तमेवांऽशमुपाहरामः—

"मनोस्तु शतरूपायां तिस्रः कन्याश्च जज्ञिरे ।
आकूति, र्देवहूतिश्च, प्रसूति, रिति विश्रुताः"

इत्यनेन श्लोकेन मनुकन्यानां तिसृणामुत्पत्तिमुक्त्वा—

"आकूतिं रुचये प्रादादपि भ्रातृमतीं नृपः"

इति भगवते रुचये आकूतिप्रदानं,

"देवहूतिमदात्तात ! कर्दमायात्मजां मनुरि"ति

कर्दमायर्षये देवहूतिप्रदानं च प्रतिपाद्य तत्सर्गनिरूपणं विधायाऽनन्तरमजात्मजाय दक्षाय प्रसूतिसमर्पणमुक्त्वा तद्वंशविस्तारः कृतः ।

स चेत्थम्—

"प्रसूतिं मानवीं दक्ष उपयेमे ह्यजात्मजः ।
तस्यां ससर्ज दुहितॄः षोडशामललोचनाः ॥
त्रयोदशादाद्धर्माय तथैकामग्नये विभुः ।
पितृभ्य एकां युक्तेभ्यो भवायैकां भवच्छिदे ॥
श्रद्धा, मैत्री, दया, शान्ति, स्तुष्टिः, पुष्टिः, क्रियोन्नतिः ।
बुद्धि, र्मेधा, तितिक्षा,—ह्री, मूर्ति र्धर्मस्य पत्नयः ।"

दक्षेण मानव्यां प्रसूत्यां षोडशकन्यकाः समुत्पादिताः । तासां मध्ये धर्माय त्रयोदश, अग्नये चैका, पितृभ्यश्चैका, महादेवाय चैका, इति षोडशकन्यानां विवाहः प्रतिपादितः । धर्मस्य यास्त्रयोदश भार्यास्तासां नामानि निरूपितानि । अत्र धर्मस्येमाः पत्नय इत्युक्त्याऽयम्भावः प्रकटितो भवति, पतिपत्न्योः सम्बन्धोऽव्यभिचरितो भवति । पत्नीं विना पुरुषो न तिष्ठति पुरुषं विना च स्त्री । तथाऽत्राऽपि पतिपत्नीरूपकेणेदमेव सूच्यते । यत्र धर्मस्तत्र त्रयोदशानां श्रद्धादीनामावश्यकता वर्तते, यत्र चैतासामवस्थानं तत्र धर्मस्याऽपि सत्त्वमावश्यकम् । तयोरेकतरं विनाऽपरस्याऽवस्थितिरेव न भवितुमर्हति । सर्वतः प्राथम्येन श्रद्धाया निरूपणेनेदं सूचितं यद्धर्मस्य प्रधानं मूलं श्रद्धा । तां विना धर्मस्य प्रवृत्तिरेव न भवति । अतएव छान्दोग्योपनिषदि—

"श्रद्धत्स्व सौम्ये"ति जगत्कारणस्याऽति सूक्ष्मस्य ब्रह्मणः परिज्ञानाय श्रद्धैव कारणमिति प्रदर्शितम् ।

द्वितीया भार्याऽपि धर्माचरणायाऽपेक्षितैव ।

दया तु धर्मस्य मूलमेव । यत्र न विद्यते दया स धर्म एव न भवति ।

शान्तेरभावे किन्नाम धर्मादस्माभिः साधनीयं भवेत् ? ।

तुष्टि—र्नाम सन्तोषः । सोऽप्यवश्यमपेक्षितः । तदभावेऽनुष्ठितेऽपि धर्मे न सुखलाभः ।

धर्मे सति पुष्टिः पोषणं भवति इति तु प्रत्यक्षसिद्धमेव । अधार्मिकस्यैव पोषणं न भवति ।

क्रियाया आचरणे सत्येव धर्म उपपद्यते, न केवलं कथनमात्रात्। किन्त्वाचरणादेवेति क्रियाऽप्यपेक्ष्यते।

उन्नतिरपि धर्मे सत्येवाऽवश्यं भाविनी चेति तस्या धर्मभार्यात्वमुपपन्नम्। धर्मे सम्यगनुष्ठित एव विशुद्धा बुद्धिरुत्पद्यते। न परित्यागे। इति व्यक्तमेव।

धारणावती बुद्धिर्मेधा, साऽपि धर्मपरिपाकादेव। यया विनोन्नति दुःसम्भवेति सुष्ठु तस्या भार्यात्वम्।

धर्माचरणार्थं शीतोष्णादिद्वन्द्वसहनादिरूपा तितिक्षा सर्वथाऽप्यपेक्षिता।

ह्रीः—सङ्कोचोऽधर्मात्। तस्य धार्मिकत्वचिह्नत्वं सर्वैः प्रत्यक्षीक्रियत एव।

अन्तिमा भार्या मूर्तिः। तस्याः स्वरूपं भागवत एव निरूपितम्। सर्वगुणोत्पत्तिः—सर्वेषां गुणानामुत्पत्तिर्यस्यां सा सर्वगुणोत्पत्तिः। अर्थात्—धर्मे प्रवर्द्धमाने श्रद्धादिमूलसम्पत्तौ च सर्वेषां गुणानामुन्नतिकारणीभूतानामुत्पत्तिर्भवतीति तात्पर्यम्। अत्र हि—त्रयोदशानां भार्यात्वेनोपवर्णितानां पदार्थानां पूर्व-पूर्वमुत्तरोत्तरस्य कारणमित्यवगन्तव्यम्। श्रद्धायां सत्यामेव मैत्री, तस्यां परिनिष्ठितायामेव दया, तस्यां सम्पन्नायामेव शान्तिरुत्पद्यते। इत्यनुभवसिद्धम्। एवं क्रमेण शान्तित एव तुष्टिः, तुष्टित एव पुष्टिः, पुष्टितो रक्षात एव क्रियाः सर्वाः प्रवर्तन्ते, सर्वे व्यवहाराश्च जायन्ते। एवं क्रियायां निवृत्तायामेवोन्नतिः। सा चोन्नति रनेकविधा। शारीरिकी, वाचिकी, मानसिकी च, ताः सर्वा अपि सम्यग्व्यवहारेणैव जायन्ते। इत्यत्र नास्ति कस्याऽपि विप्रतिपत्तिः। मानसिक्या उन्नतेरेव फलं विज्ञानसम्पत्तिः। तस्या एव फलं धारणावत्या बुद्धेरुदयः। धारणावान् मेधाव्येव पुरुषो द्वन्द्वस्य तत्त्वं सम्यग्विमृश्य तत्सहनरूपां तितिक्षां लभते। तितिक्षुरेव दुःखमनुभवन्नपि न कदाऽप्यधर्मे मनः कुरुते। सर्वदाऽधर्माज्जिहेतीति, ह्रीरपि तितिक्षाया एव फलम्। एवं द्वादशपदार्थानां समुदय एव सर्वगुणोत्पत्तिर्भविष्यतीत्यत्र कस्य नाम विवादः स्यात्?। एते श्रद्धाद्याः पदार्थाश्चित्तवृत्तिविशेषरूपा अपि भार्यात्वेन यदत्र वर्णितास्ते तदभिमानिदेवताविशेषमभिप्रेत्य। अतएव शारीरकमीमांसायाम्—"अभिमानिव्यपदेशस्तु विशेषानुगतिभ्यामि"ति सूत्रेण "मृदब्रवी दापोऽब्रुवन्नि" त्यादिवैदिकव्यपदेशानामभिमानिदेवताविशेषपरत्वेनोपपत्तिः समुपवर्णिता। एतेषां धर्मेण सहभावे सति किं फलं भवती? त्यत्राऽपि भागवत एव विस्तरेणोपवर्णनं कृतं, तद्यथा—,

श्रद्धाऽसूत शुभं मैत्री प्रसादमभयं दया।
शान्तिः सुखं मुदं तुष्टिः स्मयं पुष्टिरसूयत।
योगं क्रियोन्नतिर्दर्पमर्थं बुद्धिरसूयत।
मेधा स्मृतिं तितिक्षा तु क्षेमं ह्रीः प्रश्रयं सुतम्।
मूर्तिः सर्वगुणोत्पत्तिर्नरनारायणावृषी।
ययोर्जन्मन्यदो विश्वमभ्यनन्दत्सुनिर्वृतम्॥
मनांसि ककुभो वाताः प्रसेदुः सरितोऽद्रयः।
दिव्यवाद्यन्त तूर्याणि पेतुः कुसुमवृष्टयः॥
मुनयस्तुष्टुवुस्तुष्टा जगुर्गन्धर्वकिन्नराः।
नृत्यन्ति स्म स्त्रियो देव्य आसीत्परममङ्गलम्॥
देवा ब्रह्मादयः सर्वे उपतस्थुरभिष्टवैः।

अत्र श्रद्धादीनामपत्यानि पितुर्धर्मस्याऽनुरूपाण्येव वर्तन्ते, केवलं पुष्टेरुन्नतेश्चाऽपत्ये विपरीते प्रदर्शिते, तस्याऽयमेवाऽभिप्रायो—यद्धर्मसम्बन्धेऽपि पुष्ट्युन्नत्योर्यदा फलं विपरीतमेव भवति तदा धर्मासंस्पृष्टयोरेनयोः फलं महानर्थकरं भविष्यतीत्यत्र कः सन्देहः?। तस्मात्पुष्टेरुन्नतेश्च सकाशात्सर्वदा जागरूकेणाऽधिकारिणा धार्मिकेण स्थातव्यं, न कदाऽपि प्रमादो विधेयः। अन्यथाऽधःपातः स्यादिति। अतएव तैत्तिरीयोपनिषद्युक्तं—"भूत्यै न प्रमदितव्यमि"ति। धर्मे सत्यवश्यमेव पुष्ट्युन्नती भविष्यतः। तथापि तत्प्रभावेणात्मानं विस्मृत्य स्मयदर्पोद्भवो यथा न स्यात्तथा प्रयतितव्यमित्येतदर्थोऽयमुपदेशः। (शिष्ट ८९ मे पृष्ठे)

# कुसुमावचयः ।

धृतधनुषि शौर्यशालिनि
शैला न नमन्ति यत्तदाश्चर्यम् ।
रिपुसंज्ञकेषु गणना कैव वराकेषु काकेषु ॥

❀ ❀ ❀

जीवन्नेव मृतोऽसौ यस्य जनो
वीक्ष्य वदनमन्योन्यम् ।
कृतमुखभङ्गो दूरात्करोति निर्देशमङ्गुल्या ॥

❀ ❀ ❀

रविमणिरपि निश्चेष्टः पादैस्तिग्म-
द्युतेर्मनाक्स्पृष्टः ।
ज्वलतितरामिति को वा मन्युं सोढुं क्षमो मानी ? ॥

❀ ❀ ❀

छिन्नेऽपि शस्त्रभिन्नेऽप्याप-
त्पतितेऽपि निर्विशेषेऽपि ।
हनुमति कृतप्रतिज्ञे दैवमदैवं यमोऽप्ययमः ॥

❀ ❀ ❀

आजन्मब्रह्मचारी पृथुलभुजशिला-
स्तम्भविभ्राजमान-
ज्याघातश्रेणिसंज्ञान्तरितवसुमती-
चक्रजैत्र-प्रशस्तिः ।
वक्षःपीठे घनास्त्रव्रणकिण-
कठिने संक्षुवानः पृषत्का-
न्प्राप्तो राजन्यगोष्ठी-वनगजमृगया-
कौतुकी जामदग्न्यः ॥

अस्त्रज्वालावलीढ-प्रतिवलजलधे-
रन्तरौर्वायमाणे ।
सेवानाथे स्थितेऽस्मिन्मम पितरि
गुरौ सर्वधन्वीश्वराणाम् ॥

❀ ❀ ❀

सा रसना ते नयने तावेव करौ स एव कृतकृत्यः ।
या ये यौ यो भर्ग वदतीक्षतेऽर्चतः सदा स्मरति ॥

शरीरं कलत्रं सुतं बन्धुवर्गं
वयस्यन्धनं सद्म भृत्यं भुवञ्च ।
समस्तं परित्यज्य हा ! कष्टमेको
गमिष्यामि दुःखेन दूरं किलाऽहम् ॥

❀ ❀ ❀

जरेयं पिशाचीव हा ! जीवतो मे
मृजामत्ति रक्तं च मांसं बलञ्च ।
अहो देव ! सीदामि दीनानुकम्पिन् !
किमद्यापि हन्त ! त्वयोदासितव्यम् ॥
कफव्याहतोष्मोल्बणश्वासवेग—
व्यथाविस्फुरत्सर्वमर्मास्थिबन्धाम् ।
विचिन्त्याऽहमन्त्यामसह्यामवस्थां—
बिभेमि प्रभो ! किं करोमि प्रसीद ॥

❀ ❀ ❀

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
नहि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ॥

❀ ❀ ❀

वरमेको गुणी पुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च ताराः सहस्रशः ॥

❀ ❀ ❀

गुणा दश स्नानपरस्य साधो
रूपञ्च तेजश्च बलञ्च शौचम् ।
आयुष्यमारोग्यमलोलुपत्वं
दुःस्वप्ननाशश्च यशश्च मेधा ॥

❀ ❀ ❀

किं जातैर्बहुभिः पुत्रैः कुशूलापूरणाढकैः ।
वरमेकः कुलालम्बी यत्र विश्रूयते पिता ॥

❀ ❀ ❀

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्तिनि संसारे मृतः को वा न जायते ? ॥

# हितवचनानि ।

वस्तुतः स्वरूपमात्मनो जनन—मरणरहितं भवति । नैनं मोहयितुं निद्रा प्रभवति, न स्वप्नः । न वाऽस्य विद्येते नाम-रूपे । अयं हि सच्चिदानन्दरूपः । स्वयंप्रकाशमयो ज्योतिर्मयः शाश्वतश्च । परमुपाधिरहितमप्यात्मानं सातङ्कमिव जानानानामस्माकं मोहको ज्ञानाभाव एव ।

❃ ❃ ❃

नैतादृशः पुरुषः कर्मलिप्तो भवति । यो हि स्वयमापतिताभ्यामापत्सम्पद्भ्यां न लभते विकारम् । न दुःखसुखयोरापातेन शोकहर्षभाग्भवति । यश्च मत्सरादिदूषणरहितः स्यात् । यो वा सिद्धिमसिद्धिं वा न विचारयन्स्वकर्तव्यपालनायैव भगवदाज्ञानुसारमनुवर्तेत कर्मसु ।

❃ ❃ ❃

द्विविधावेव पुरुषौ लोके सुखिनौ जायेते । तत्राऽऽद्यः शून्यहृदयो बालिशः, संसारव्यवहारानभिज्ञः सुतरां शिशुश्च । द्वितीयस्तु लब्धदैवविभूतिर्गुणातीतो मुक्तः पुरुष इति ।

❃ ❃ ❃

न हि संसरणशीले संसारगह्वरे वारम्वारं जननेन मरणेन वा रहितो भवति तादृशः पुरुषः । यो हि भगवन्तं परमात्मानं न तत्त्वतो जानीते । अतः कर्तव्यमिदमेव मानुषाणां,यत्—यस्मादिदं विश्वमुदेति, यत्र च सावकाशं रमते, यत्र वाऽन्तिमावस्थायां लयमेति, तादृशमनाद्यनन्तमाम्नायप्रतिपादितं ब्रह्म सततं विचारणीयमिति ।

❃ ❃ ❃

स्वार्थमयोऽसौ संसारः । यावद्धि नरो धनोपार्जनशक्तः कथमपि द्रविणमर्जयते, तावदेव दारसुतादयस्तदुपरि सानुरागा जायन्ते । जराजीर्णं हि जनं न हि कश्चन गणयति ।

❃ ❃ ❃

सुमेरुप्रभृतयोऽपि विशालाः शैलाः प्रलयानलेन विलयं यान्ति । भयङ्कराणां मकराणां तिमिङ्गिलानाञ्चाऽऽवासभवनं पारावारो निःशेषं शोषमयते । महामहद्भिरपि भूभृद्भिर्धृता वसुमती परमाणुतां भजते । शरीरमिदं निमिषनश्वरं नलिनीदलजलमिव तरलं कथमिव विश्वसेयुर्विवेकिनः पुरुषाः ? ।

❃ ❃ ❃

परेभ्यश्चेत्प्रतिष्ठा वाञ्छिता स्वयं प्रथमतः स्वाभिमानं विहाय परप्रतिष्ठा करणीया । स्वयं हि स्वमात्मानमभिमन्यमानः परैरवमतो भवति । यः स्वयं विनीतः परान्मानयति स परैरपि संमानितो भवति ।

❃ ❃ ❃

सर्वे जनाः सम्पदम्प्राप्तुकामा नानाविधानुपायानातिष्ठन्तोऽपि न स्वमनोरथानुरूपां सम्पदम्प्राप्नुवन्ति । तेषां सम्पदं संसाधयितुम्परिश्रम्यतां मनोरथप्रपूर्तये श्रीकामन्दकाचार्येणोपायः प्रतिपादितः । सच सर्वैरुपादेय इत्येतदर्थं स श्लोकोऽत्रोपन्यस्यते—

जितेन्द्रियत्वं विनयस्य भूषणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥

❃ ❃ ❃

विनय एव सर्व सम्पदां मूलम् ।

विनयादेव हि जितेन्द्रियता सम्पद्यते ततश्च गुणप्रकर्षो भवति । समुचितगुणसम्पन्ने च जने जनानामनुरागः स्वयमुत्पद्यते । यदा जनानामनुरागः सञ्जातस्तत एव समस्तमैश्वर्यमाप्नोतीति सर्वमूलं विनयः ।

[ २८६ पृष्ठादग्रे— ]

अनेन सर्गकथनेनेदमेव सूच्यते यद् धर्मस्योपचये श्रद्धादीनां तदङ्गनाञ्च सम्पत्तौ सर्वगुणोत्पत्तिरूपा मूर्तिराविर्भवति, तस्याश्चाऽऽविर्भूतायां नरनारायणयोराविर्भावो भवति। परमेश्वरावतारे यद्भवति तदुपवर्णितं,-"ययोर्जन्मन्यदो विश्वमभ्यनन्दत्सुनिर्वृतमि"त्यादि। भगवदवतारे सति नाधयो व्याधयः। न वाऽन्यदपि किञ्चिद्दुःखं सम्भवति। सर्वे सुखिन एव जायन्ते। एतद्धर्मोपचयस्य फलम्। अतो दुःखनिवृत्तिकामैरुन्नतिकामैश्च भगवदाविर्भावसाधनस्याङ्गोपाङ्गसहितस्य सनातनस्य भगवतो धर्मस्य रक्षणाय प्रयतितव्यमित्येतदर्थोऽयम्प्रस्तावः।

यथा धर्मस्य वंशः श्रेयस्कामैरुपादेय इत्येतदर्थं निरूपितस्तथा परिहाणायाऽधर्मवंशोऽपि तत्रैव श्रीमद्भागवते निरूपितः। सोऽपि धार्मिकैरवश्यं मनसि धारणीयः। यस्य त्रिःश्रवणमात्रेणैव पुमानात्मनो मलं विधुनोति। इति समुपदिष्टम्—स चेत्थम्—

मृषाऽधर्मस्य भार्याऽऽसीद्दम्भं मायाञ्च शत्रुहन्!।
असूत मिथुनं तत्तु निर्ऋतिर्जगृहेऽप्रजः॥
तयोः समभवल्लोभो निकृतिश्च महामते!
ताभ्यां क्रोधश्च हिंसा च यद्दुरुक्तिः स्वसा कलिः।
दुरुक्तौ कलिराधत्त भयं मृत्युञ्च सत्तम!।
तयोश्च मिथुनं जज्ञे यातना निरयस्तथा॥
सङ्ग्रहेण मयाऽऽख्यातः प्रतिसर्गस्तवाऽनघ!
त्रिःश्रुत्वैतत्पुमान् पुण्यं विधुनोत्यात्मनो मलम्॥
इति।

यथा भार्यात्वेन प्रथमं निरूपिता श्रद्धा धर्मस्य मूलं, तथाऽधर्मस्य मूलं मृषाऽसत्यम्। पूर्ववदत्राऽपि मृषाऽधर्मयोरव्यभिचरित एव सम्बन्धः। यत्राऽधर्मस्तत्राऽवश्यं मिथ्यावादित्वं, यत्र मिथ्यावादित्वं तत्राऽवश्यमेवाऽधर्मः।

अतः सर्वाऽनर्थस्य मूलं मिथ्यावादित्वम्। आभ्यां किमुत्पद्यत? इत्याकाङ्क्षायामुच्यते—दम्भो माया चेतिमिथुनम्। अनयोर्भ्रातृभगिन्योः कथं मिथुनीभावः? इत्याकाङ्क्षायां श्रीधराचार्या वदन्ति—अधर्मांशत्वाद्भ्रातृभगिन्योरपि परस्परं पतिपत्नीभावः समुचित एव। एवमग्रेऽपि। यत्र मिथ्यावादित्वं तत्र परप्रतारणारूपो दम्भस्तदुचिता चेष्टारूपा माया च भवत एव। एतन्मिथुनं कुत्र निवसति? इति जिज्ञासायामाह—निर्ऋतिर्जगृहे। अनेनेद सूच्यते—यत्र दम्भमाययोः सद्भावः स निर्ऋतिरेव। एताभ्यां मिथुनं लोभनिकृत्यात्मकमुत्पद्यते। तत्र लोभस्तु प्रसिद्धः निकृतिर्नाम शठता, सा च लोभे सत्यवश्यमेव भवति, यत्रेमौ निवसतस्तत्र क्रोधो हिंसा च भवतः। द्वयोरुत्पत्तौ दुरुक्तिर्मुखाद्दुर्वचनं निर्गच्छति। ततः कलेः कलहस्याऽऽविर्भावः। मुखेन परमर्मनिकृन्तनं दुर्वचनं यदानिर्गच्छति तत्पश्चादेव कलहस्य चाविर्भावः। तदैव भयस्य, तत्पश्चान्मृत्योः प्रसवः। उचितमेवैतत्। नाऽत्रालौकिकं किञ्चित्। मृत्योरनन्तरमपि न विप्रमोक्षः, किन्तु यातना त्रिविधा, निरयो नरकपातोऽपि भोक्तव्य एव। अयं सङ्क्षेपेणाधर्मवंशः प्रतिसर्गशब्देन व्याख्यातः। अयं प्रतिसर्गशब्देनैतदर्थमभिहितः प्रति सर्गो नाम प्रलयः। अधर्मस्यासत्यादिपरम्परया प्रलयहेतुत्वा त्प्रलय एवाऽधर्माभिवृद्ध्या भवतीत्येतन्निरूपितम्। एतस्य प्रतिसर्गस्य त्रिवारं यः श्रवणं कुर्यात्स तस्य परिज्ञानेन तत्परिहारपूर्वकं सर्वेभ्यः पाप्मभ्यो निर्मुच्यते, इति यत्फलमुपवर्णितं तदक्षरशः सत्यमेव। पुमान् हि-असत्याद्याश्रयणेनैव सर्वथा विनश्यति। अतः श्रेयस्कामेनाऽस्य परिहारः सर्वथा कर्तव्य इत्यभिप्रायः।

उक्तयोर्धर्माधर्मयोः साङ्गोपाङ्गयोर्हानोपादानद्वारा सुखदुःखयो रुत्पत्तिर्भवति। एतौ च धर्माधर्मौ चेतोवृत्तिविशेषरूपौ बृहदारण्यकोपनिषदि—"द्वया ह प्राजापत्या देवाश्चाऽसुराश्चेत्यादिना देवासुरशब्देनोच्येते। तत्र देवा नाम शास्त्रीया प्रवृत्तिर्धर्मरूपा। असुरास्तु स्वाभाविक-

प्रवृत्तिः । या हि-उच्छृङ्खलप्रवृत्तिशब्देनाऽन्यत्रकथ्यते । अनयोरहरहः सङ्घर्षोभवति कदाचित्स्वाभाविकीं प्रवृत्तिमधर्मरूपां शास्त्रकृतसंस्कार-सम्पन्ना धर्मरूपा प्रवृत्तिरभिभवति । कदाचिच्चैतद्वैपरीत्येन स्वाभाविक-प्रवृत्तिरेव शास्त्रीयां प्रवृत्तिं प्रतिबध्नाति । तत्र देवानां प्रावल्ये शाश्वतं सुखमसुराणाम्प्राबल्ये तस्य सुखस्य सर्वथाऽप्राप्तिर्भवति । अतः शास्त्रीयप्रवृत्तिरेवाऽवलम्ब-नीया । श्रीभगवते अशास्त्रीया प्रवृत्तिरेव 'सुरुचि'रित्यु-च्यते । शास्त्रीया च 'सुनीति' शब्देन कथ्यते । तत्र पूर्वो-क्तयोर्धर्माधर्मयोः फलमुपाख्यानद्वारा निरूपयितुं ध्रुवा-ख्यानं भागवते निरूपितमित्यवगन्तव्यम् । उत्तानपादस्य-राजर्षेर्द्वे जाये, एका सुनीतिरपरा सुरुचिः । तत्राद्या शास्त्रीया प्रवृत्तिः । द्वितीयाऽशास्त्रीया । यदोत्तानपादो राजा सुनीतिमनादृत्य, अर्थात्-शास्त्रपारतन्त्र्यम्परि-त्यज्य सुरुचिपरायणः स्वेच्छाचारपरतन्त्रः समभवत्, तदैव ध्रुवफलं तस्मादपगतम् । यदा सुनीतेरव-लम्बनं कृतं तदा ध्रुवफलस्य प्राप्तिः सञ्जातेति श्रेयस्कामेन कदाचिदपि सुरुचिपरायणेन न भवितव्य-मपितु सुनीतिपरायणेनैव भवितव्यमित्यभिप्रायः ।



# सुधारकाणां कृत्य विचारः ।

[ 'वर्क्षे' इत्युपाहः श्रीरामचन्द्र शर्मा । ]



ध्येयन्तु सर्वेषामेव भारतीयानां जनानां केवलमेकमेव स्वातन्त्र्यम् । स्वातन्त्र्यार्थ-मेव च सर्वैरप्युद्योगः क्रियते । परन्तु तादृशस्वातन्त्र्यं नाम पदार्थमायत्तीकर्तुं यद्येषां साधनानामावश्यकता विद्यते तेष्वस्ति महान्मत-भेदः । अत एवाऽधुना भारतान्तरे नानाविधाः पक्षो-पपक्षाः प्रत्येकं पृथक्पृथक्प्रकल्पिताः सन्ति । तत्राऽयमेकः पक्षः पाश्चात्यशिक्षाशिक्षितः स्वातन्त्र्यसाधनाय दीक्षितमिवात्मानं मन्यमानो वरीवर्ति । प्रकाशयति च सुधारकत्वेन स्वमात्मानं शब्दाडम्बरेण सर्वत्र । परं पाश्चात्यशिक्षाप्रभावेणाऽयं सुधारकवर्गो न तादृशा धिया प्रयत्नं कुरुते, यथा हि स्वराज्यलाभे संशयो न स्यात् !। तत्र प्रमाणन्त्वेतदेवास्ति यद्-धर्मेष्व-धर्मत्वबुद्धिः; शूद्रेष्वन्त्यजेषु वा ब्राह्मणत्वबुद्धिः । सर्वज्ञेषु स्वकीयपूर्वजेषु सुतरामज्ञत्वबुद्धिः; हितकरेषु शास्त्रवचनेष्वहितकरत्वबुद्धिः । भारततारके वैदिक-धर्मे पातकत्वबुद्धिरित्यादिकं सर्वत्राऽन्यथाभावं मत्तानामिव तेषां सुधारदीक्षितानामन्तश्चेतःसु प्रायो दरीदृश्यते ।

अथैतादृश्यामवस्थायां स्वराज्यस्वातन्त्र्यमभीप्सुषु भारतीयेषु केचिद्वदन्ति यदीशवीयादिपरधर्मप्रचारक-जनेभ्यः स्वीयधर्मरक्षणं विदधानैरस्माभिः स्वराज्यमपि स्वायत्तीकरणीयमिति । सत्यमावश्यकं च तत्प्रतिभाति । नास्ति संशयलेशोऽत्र यत्-परधर्म प्रचारकेभ्योऽस्माकं भारतीयानां परम्परायातस्याऽनाद्यनन्तस्य धर्मस्योपरि वारंवारमनेकैरुपायैराक्रमणं वितन्यमानमस्तीति ।

परन्तु महानयं बाधते विषादो यत्-साम्प्रतं परधर्मप्रचाराय स्वीय एव सुधारकवर्गोऽपि हठात्प्र-वृत्तः । अस्य द्वारा समस्तानां विपदां निराकरणं भवि-ष्यतीति समीहितमभवत्, स एव धर्मनाशरूपाभि-

र्घोरघोराभिर्विपद्भिराच्छादयितुमीहते इति परममिदं कष्टान्तरम्। प्रभावश्चायं केवलमाङ्गलभाषया तच्छिक्षाग्रहणस्य। यदा हि पाश्चात्यशिक्षणमारब्धं भारते तदैव स्वधर्मश्रद्धानामप्यस्तित्वमल्पीभावमापेदे। यतो हि. ए. बी. सी. इत्याद्यक्षराभ्यासाय प्रवृत्त एव बालकोजहात्येव सहसा सन्ध्या–स्नान–पाठपूजादिकानि मातृपितृप्रभृतिमान्यगुरुजनानामाज्ञापालनरूपाणि च स्वजात्युचितानि कर्माणि। प्रवर्तते च स्वभावत एव धूम्र–वारुणी—पानादिषु शास्त्र—कुलमर्यादाविपरीतेषु निन्दनीयकुकर्मप्रवाहेषु। किं बहुना? धूमशकटविरामस्थानादिषु विचरन्तः साधारणा अपि सेवका धर्मपरावर्तनमावश्यकमिति धर्मविवेचनशक्तिमिव स्वां निर्लज्जतया प्रकटयन्ति। श्रावं श्रावं च तादृशानां भ्रान्तान्तश्चेतसां भाषणानि, बालका—अपि वराकाः स्वपूर्वजा ऋषयो न किमपि जानन्ति स्मेति वक्तुं नाऽण्वपि बिभ्यति। हन्त! महिमाऽयं कलिकालस्य!!!

अद्ययावत्तु परधर्मप्रचारकेभ्यः परेभ्य एव स्वधर्मरक्षणं करणीयमस्तीत्यस्माभिर्मनसा गृहीतमासीत्। परन्त्वितः परन्त्वाङ्गलभाषया शिक्षितेभ्योऽपि कतिपयेभ्योऽकुलीनजनेभ्य स्तत्संस्कारवासितान्तरङ्गेभ्यश्च स्वधर्मरक्षणमावश्यकतया करणीयमित्यपि प्रसङ्गः समायात एव। एते चैतादृशाः स्वकीया लोकाः स्वसम्बन्धिनः स्वीयभवनवासिनः स्वीया एव बान्धवाः सन्ति। अतस्तेषामधार्मिकभावस्य पार्श्वस्थबालेषु वनितासु वाऽनायासेन सहवासप्रभावेणैव सङ्क्रमणं स्वाभाविकमेव सम्भवति। परकीयशिक्षाशिक्षितश्च जनो जन्ममात्रेण केवलं हिन्दुजातीयो जायते, आचारविचरादिभिः स्वभावैः साक्षात्पाश्चात्य एव। पाश्चात्यानां भारताधिपत्यं द्रढयितुमपि तादृशा एव जना हेतवो जायन्ते। अत एव तैरप्येतादृशोऽयं विचित्रभावो वर्गो युक्तिशिक्षया सञ्जातः किल?। अत एवैतद्विषये प्रकटितां "लार्ड" पदवीधरस्य 'मेकाले' महोदयस्य पाश्चात्यदेशीयस्य केचन विचाराः स्मृतिपथमायान्ति यत्—

"यावत्पर्यन्तमेतेषां भारतीयानां जनानां स्वकीयधर्मस्याऽभिमानः, स्वपूर्वजेष्वृषिजनेषु समादरः, धर्मशास्त्रादिषु मुनिजनानामाचरणेष्वनुकरणीयताबुद्धिश्चान्तश्चेतसि विराजेरन्। न तावत्कालपर्यन्तं भविष्यत्यस्माकं भारताधिपत्यसम्भावनापि। यावद्वा नापगमिष्यति स्त्रीयपूर्वजकृतकर्माभिमानः, न कदापि तावत्पारवश्यं भविष्यति भारतीयानाम्।

अतः प्रथमं स्वपूर्वजपरम्परायातधर्मेण दृढीभूतानाममीषां पारतन्त्र्यपाशेन बन्धनाय तदीयधार्मिकभाव एव निराकरणीय" इति।

सम्भाव्यते तदीयविचाराणामेवाऽयं फलरूपः सुधारकवर्गः। अतः सुधारकवर्गादेव सुतरां भेतव्यमस्माभिः। सुधारकवर्गः सत्यमेवाऽभिलषति धर्मविनाशनायेति प्रमाणानि सन्त्येव साक्षादनेकत्र। यथा हि—

अकोलानामकग्रामे धूमयानविश्रामस्थानीयकूपसलिलं धर्मतप्तेभ्यः पिपासाकुलेभ्यः प्राणिभ्यः पाययितुं सूरजमलनामा ब्राह्मणः केनाऽपि स्वामिना नियुक्तः श्रूयते। तेनाऽस्पृश्यजनैः साकं सहभोजनं कर्तुं नाङ्गीकृतमिति निमित्तेन तत्पदान्निःसारितः।

तथा—चतुर्भुजनामा कोऽपि गुर्जर पण्डितः सुधारकैः प्रेरितः सन्नस्पृश्यहस्ताज्जलं न पीतमिति कारणेन तत्पदादपि निष्कासितः।

पुनः साम्प्रतं किसनलालनामा गोयनका महोदयः २६–३–२९ दिने विलायतभ्रमणं विधाय परावृत्य समायातः। तत्सञ्चालितयन्त्रालये मासिकषष्टिरूप्यकवेतनदानेनाधिकृतो "भुरामल–गौड"नामकः पण्डितः पत्रद्वारा तेन सूचितो यत्—अस्माकं मतानुसारेण विदेशयात्रिदोषो न गण्यते चेदङ्गीक्रियता

मस्माभिः सहभोजनं, नो चेदितः पदत्यागः करणीय इति। तत्र तेनोत्तरितं यत्—यद्यपि वृत्तिनिमित्तं करोमि स्वामिसेवनं परं हृदयविक्रयस्तु न शक्यते कर्तुमिति। प्रचलितश्च तत्पदं परित्यज्य।

एवमनेकानि सन्ति सुधारकाणां धर्मनाशकत्वप्रमाणानि। परन्तु सत्यपि तादृशदौष्ट्यप्रचारे स्वीयमात्मानं सनातन धर्मिणमेव जनवञ्चनार्थमुद्घोषयन्ति। यथा हि—

डा० मुञ्जे महोदयो वदति वेदविरुद्धमांसभोजने दोषो न भवतीति।

जयकरमहोदयो ब्रवीति—

यथाऽनुलोमविवाह प्रचलितोऽस्ति भारते तद्वत् प्रतिलोमविवाहोऽपि प्रचारणीयः। नास्ति च तत्र दोष इति।

न० चि केलकरमहाशयेन गतवर्षे एवैकजात्यमस्तु जातिभेदो माऽऽस्तां भारते इति प्रस्तावोऽपि व्यवस्थापकसभायामुपस्थापितः।

परन्तु राजप्रतिनिधिनैवाऽस्याऽयं प्रस्तावोऽस्यर्थमवमानेन वहिष्कृतः।

मोतीलालनेहरूमहोदयः स्वयं सभापतिस्थानमास्थाय "धर्मोऽयं भारतीयाना मधःपातकः पदार्थः। अयमेवाऽस्ति स्वराज्यलाभप्रतिवन्धकस्तस्मादयमनादरणीय इति सर्वदा जल्पन्नस्ति।

एवं केचन सनातनं भारतधर्ममुपहसन्तः "शिखायामस्ति हिन्दूजातीयानां धर्मः। शिखाया अभावावस्थायां का गतिर्धर्मस्येत्यपि वदन्ति।

केचिच्च पुनर्विधवाविवाहमेव पुरस्कुर्वाणा जनसमाजे समुस्थिता भवन्ति। एवमेवम्।

तथा च—

यस्य मनसि यादृशी समुपस्थिता भवति समीहा तदनुसारकार्यमेव सम्प्रति धर्मो नाम पुरुषै र्वेद्यते। किं नामाऽस्य रहस्यम्। यत्क्वचिद्य एव निन्दति यत्कार्यं स एव पुनः कुत्रचित्समर्थयति। यदा यदा समये या या मनीषा रुचिश्च यस्य हृदये समुत्पद्यते तदा तदा 'कृतं तत्तदीयमेव कर्म धर्मत्वेन चेद्गृह्यते, तदा कीदृशं नाम धर्मस्य वास्तविकं रूपम्?।

तदीयस्वेच्छाचारप्रतिकूलानि सर्वाण्यपि शास्त्राणि न प्रमाणानीति तैरुच्यत एव। ग्रन्थप्रामाण्यस्वीकारं विना गत्यन्तराभावस्थले तु प्रक्षिप्तमेतावद्वचनमित्युच्यते। तत्राऽप्यसफलास्तु तानि तानि प्रमाणानि तत्तत्कालानुरूपाणि वचनानीति हठमाश्रयन्ते। तादृशसङ्गतियुक्तिरहितवचनानामालापे ग्रन्थालोकनापेक्षापि न तान्प्रेरयति। न मन्यतेऽस्माभिः शास्त्रमिति वचने नैव हि परतो भवन्ति। स्त्रीशूद्रजातीयानामुपकारायाऽष्टादश पुराणानि शास्त्राणि बहूनीतराणि च विद्यन्ते भारते। तैश्च शास्त्रैर्महानादरस्तेषामुपरि विहितोऽस्ति। परमेते सुधारकास्तान्प्रतारयितुं वदन्ति यन्नास्त्येव तदुद्देशेन निर्मितः कोऽपि ग्रन्थः। अवहेलना हि तेषा मेतैः कृतासीदित्यादि।

पुनरेतावताऽप्यसन्तुष्टा एते विद्वुषोऽपि पण्डितान्निन्दन्ति। वदन्ति यत् पण्डिता व्यवहारं न जानन्ति। वञ्चयितुं च परानिच्छन्तीत्यादि। तत्रोच्यते यत्—सुधारकाणां विचारेण शास्त्रं नाम पाश्चात्यभाषाशिक्षणमेव निर्णीयते किल!। भारतीय शास्त्रस्य किमपि मूल्यमेते न मन्यन्ते। नाऽपि विचारयन्ति। यदा पाश्चात्यानामत्र सम्पर्को नासीत्तदानीमप्यत्र महामहान्तश्चक्रवर्तिनो भूपाला बभूवुः। अनेके च धनिनः, असङ्ख्याता वैज्ञानिकपदार्थाश्चेति तदानीमपि पाश्चात्यशिक्षया ते शूरवीरा व्यवजह्रुः?। उत तेऽपि व्यवहारज्ञानं न लब्धवन्तः। अपठिता एव वा ते तादृशसामर्थ्यमासादितवन्तः? तेषामपि भूपतीनां व्यवहारकर्मणि यदा संशयो भवति स्म तदा वनान्तरे स्थितानां मुनीनामन्तिकमुपेत्य पृच्छन्ति स्म। मुनयश्च कदापि संसारेऽप्यार्थिकव्यवसाये मनोऽपि नददानाः केवलममीषामेव ग्रन्थानामवलोकनेन प्राप्तव्यवहारज्ञानाः सम्यक्संशयमपाकृत्य शिक्षामुपदिश्य सुष्ठु मार्गे तान्प्रवर्तयन्तिस्म। तर्हि किं संस्कृतशास्त्रेषु व्यावहारिकज्ञानविमर्शो नास्ति? आः यादृशं यादृशं व्यवहारं पाश्चात्यशिक्षादीक्षिताः

सम्प्रति प्रचारयितुमभिलषन्ति, न तादृशव्यवहारः संस्कृतज्ञैर्बहुमन्यते । यथा धर्मत्यागः । शूद्राणामन्त्यजानाञ्च ब्राह्मणीकरणम् । चतुर्णामपि वर्णानां सङ्करीकरणम् । कुलयोषितां भावदूषणम् । विधवानां च विवाहः । स्वमातृवाणीं परिहाय पाश्चात्यवाणीनां व्यवहरणम् ।

एवमेतादृशव्यवहारज्ञानं नास्ति पण्डितेषु । प्रत्युत विरोधमेते तादृशव्यवहारस्य कुर्वते ।

यथा चैते पाश्चात्यशिक्षोपदिष्टं व्यवहारं न जानन्तीत्युच्यते, तथा सुधारका भारतीयविद्यानुसारं व्यवहारं न जानन्तीति कथने को नाम दोषः स्यात् ? । न हि भारतीयधर्मः पाश्चात्यानां 'बायबील' ग्रन्थेषु यवनानां 'कुराण' ग्रन्थेषु वा समुपलभ्यते । न वा तदीयो धर्मोऽस्माकमाम्नायादिनिगमेषु । जन्मप्रभृति स्वीय—विद्यानामेकमप्यक्षरमनवलोकयतां सुधारकाणामन्तर्मनसि धर्मज्ञानं कुतः समुत्पन्नं स्यादनायासेन ? । एवञ्च क्षणे क्षणे परिवर्तनशील—चेतसामेषामाविष्कृतधर्मानुसारेणानुगच्छतामस्माकं तदानीं का नाम गतिश्चिन्तनीया स्यात् ?, यदा ह्येतेषां क्षणिकचित्तं स्रोतोऽन्यत्र प्रवहिष्यति, पुनर्धर्मान्तरं वा चिन्तयितुमारप्स्यते, प्रमादं वा नैजं स्वीकरिष्यति । परिवर्तनं धर्मस्य कर्तुं समर्थो विवेकशीलः कोऽस्ति भारते साम्प्रतम् ? । यथा हि द्वे द्वे चत्वारि भवन्ति । तत्परिवर्तनं विधाय द्वे द्वे षट् भवन्तीति प्रजल्पन्कोऽपि जनः सत्यवादी भवितुमर्हति वा जडोन्मत्तः कथ्यते ? । किमर्थं यूयमनया विभीषिकया भावयितुमभिलषथ ? । न कदापि पण्डिता भयं भजिष्यन्ति । न वा शास्त्राणामुल्लङ्घनं युष्मान्नाशादवशेषयिष्यति । सावधाना भवत !!! ।

---

## ब्राह्मणमहासम्मेलननियमाः ।

१. अस्याः पत्रिकाया अग्रिमवार्षिकमूल्यं रूप्यकत्रयम् ।
२. प्रेषणव्ययो ग्राहकै र्न देयः ।
३. प्रबन्धलेखकेषु यस्य प्रबन्धो यस्यां संख्यायां प्रकाशितो भवेत् तत्संख्याया एकं खण्डं तस्मै विना मूल्यं प्रदीयेत ।
४. प्रबन्धादिकं समालोचनार्थं पुस्तकादिकं च सम्पादकसमीपे, मूल्यं च कार्याध्यक्षस्य समीपे प्रेषणीयम् ।
५. पत्रमिदं नियमेन सौरमासस्य अन्तिमसप्ताहाभ्यन्तर एव सर्वत्र प्रेषितं भवेत् । येन खलु ग्राहकेण तत्पत्रं यथाकालं नाधिगम्येत तेन तत्परमासस्य द्वितीयसप्ताहमध्य एव स्वपोष्ट-आफिसस्थाने तदन्विष्य तत्फलं वयं विज्ञापनीयाः । नातः परं कस्याप्यभियोगः श्रूयेत ।
६. अस्याः पत्रिकाया विद्यार्थिनां कृते वार्षिकं मूल्यम् २) रूप्यकद्वयम् ।

ब्राह्मणमहासम्मेलन कार्याध्यक्षः ।

साङ्गवेदविद्यालय प्रेस, रामघाट, वाराणसीनगरम् ।

